# शृङ्गारसप्तशतिका


प्रधानसम्पादकः

**डॉ० एन्० आर्० कण्णन्**

सम्पादकः

**प्रो० रहसबिहारी द्विवेदी**




# शृङ्गारसप्तशतिका

प्रधानसम्पादकः
डॉ० एन्० आर्० कण्णन्

सम्पादकः
प्रो० रहसबिहारी द्विवेदी



राष्ट्रिय-संस्कृत-संस्थानम्

Rashtriya Sanskrit Sansthanam
(Deemed University)
Under the auspices of the Ministry of Human Resources Development
Govt. of India

Gangānāth Jhā Campus Text Series No-80

General Editor
Dr. N. R. Kāṇṇan
Principal, Gangā Nāth Jhā Campus, Allahabad

(Sanskritdohachhandasi Shriyut Parṁanand Panditen Kritah Tikasahitoānuvādah)

# SHRINGARSAPTSHATIKA

Edited by
**Prof. Rahasbihari Dwivedi**
Ex-Prof. & Head, Sanskrit Department
Ranī Durgawatī Vishwavidyālaya, Jabalpur
Ex-Director Research Institute
Sampurnānand Vishwavidyālaya, Vārāṇsī



**Rashtriya Sanskrit Sansthanam**
**(Deemed University)**
**Gangānātha Jhā Campus**
**Chandrashekhar Āzād Park**
**Allahabad-211002**
**2018**

राष्ट्रियसंस्कृतसंस्थानम्
मानवसंसाधनविकासमन्त्रालयाधीनः
मानितविश्वविद्यालयः

गङ्गानाथझापरिसरमूलग्रन्थमाला प्रसूनम् नं०-८०

प्रधानसम्पादकः
डॉ० एन्०आर्० कण्णन्
प्राचार्यः, गङ्गानाथझापरिसरः, इलाहाबाद

(संस्कृतदोहाछन्दसि श्रीयुतपरमानन्दपण्डितेन कृतः टीकासहितोऽनुवादः)

# शृङ्गारसप्तशतिका

सम्पादकः
प्रो० रहसबिहारी द्विवेदी
पूर्वाचार्यः संस्कृतविभागाध्यक्षश्च
जबलपुरस्थरानीदुर्गावती विश्वविद्यालयस्य
पूर्व निदेशकश्च शोधसंस्थानस्य
वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य



राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )
गङ्गानाथझापरिसरः
आजादोद्यानम्, प्रयागः-२११००२
२०१८

डॉ० एन्० आर्० कण्णन्
प्राचार्यः
राष्ट्रिय-संस्कृत-संस्थानम्
मानित विश्वविद्यालयः
गङ्गानाथझा-परिसरः
भारतशासनस्यमानव-संसाधन-
विकासमन्त्रालयाधीनः

Dr. N. R. Kannan
Principal
Rashtriya Sanskrit Sansthan
Deemed University
Ganga Nath Jha Campus
Under the Ministry of Human
Resource Development, Govt. of India

## प्रधानसम्पादकीयम्

महतः प्रमोदस्य विषयः यत्किल श्रीराधाकृष्णयोः विषये शृङ्गाररसप्रधानतया नायकनायिकाभाववर्णनपुरुस्सरं रसालङ्कारदृष्ट्या विविधतत्त्वाविष्करणपूर्वकं च विद्वद्धौरेयेण महाकविपरमानन्दपण्डितेन प्रणीतं सव्याख्यशृङ्गारसप्तशतिकाख्यग्रन्थरत्नं गङ्गानाथझापरिसरद्वारा सम्मुद्राप्य प्रकाशनेन विद्वन्नेत्रसुलभतां प्राप्नोति।

इह खलु लोके साहित्यशास्त्रमर्मज्ञैः कविभिः—

"शृङ्गारहास्यरौद्रवीरभयानकाः, इत्यादिभिः श्लोकैः रसस्य वैविध्यं प्रत्यपादि। तत्र मुख्यतया विविधप्रसङ्गेषु शृङ्गाररसोद्भावनपूर्वकं विद्वन्मनोहारिणी हिन्दीभाषायां विरचितस्य "बिहारीसतसई" काव्यस्य संस्कृतपद्यानुवादरूपा च इयं शृङ्गारसप्तशतिका विद्यते। अस्यां केवलं-सप्तशतपद्यानि विद्यन्ते। पद्यानां टीकाद्वाराऽनुवादोऽपि अकारि एतद्ग्रन्थकृता परमानन्दपण्डितेन। अतोऽयं ग्रन्थः सर्वैरपि विद्वद्भिः समादरणीय इत्यत्र नास्ति संशयलेशावसरः। परिच्छेदचतुष्टयात्मकोऽयं ग्रन्थः। तत्र प्रथमे परिच्छेदे 'नायकनायिका वर्णनम्' द्वितीये विप्रलम्भशृङ्गारवर्णनम्, तृतीये वसन्तादि षट्ऋतुवर्णनादिनिरूपणम् चतुर्थे "श्रीकृष्णभक्ति प्रकटनम्" जयसिंहनृपवर्णनादिकंचाकारि विद्वद्धृदयङ्गमशैल्या परमानन्दपण्डितेन।

हिन्दीव्रजभाषायाः ज्ञातारो ये न सन्ति तेषां कृतेऽपि बिहारीलालस्य सतसई काव्यं एतद्ग्रन्थकृता सुलभीकृतमिति नितान्तं प्रशंसास्पदं वरीवर्ति।

हिन्दीसाहित्यरीतिकालिककविबिहारीलालस्य "सतसई" प्रामुख्येन शृङ्गाररसप्रधाना रचना वर्तते। प्रायः श्रीराधाकृष्णाश्रितेयं रचना। अतः नायको भगवान् श्रीकृष्णः नायिका च श्रीराधा। यद्यपि श्रीमद्भागवते स्पष्टतया राधायाः उल्लेखो नास्ति तथाऽपि "गर्गसंहिता" गीतगोविन्दादिग्रन्थेषु अस्याः वर्णनं प्रामुख्येन दृश्यते। देवीदेवयोः (महालक्ष्म्याः

श्रीकृष्णपरमात्मनश्च) विषये अनितरसाधारणभक्तिप्रतिबन्धकत्वात् शृङ्गाररसवर्णनं केचन विमर्शकाः विद्वांसः औचित्यपूर्णं न गणयन्ति, तथाऽपि महाकविना कालिदासेन शिवभक्तत्वेऽपि यथा पार्वतीशिवयोः संयोगात्मकशृङ्गाररसस्य वर्णनं व्यधायि तथैव असौ कविः कृष्णभक्तत्वेऽपि राधाकृष्णयोः शृङ्गाररसवर्णनमकरोदिति वक्तुं शक्यते, अतोऽत्र दोषो नास्तीति एतद्ग्रन्थकर्तुरभिप्रायः इति भाति।

एवं अस्यां सव्याख्यायां शृङ्गारसप्तशतिकायां के के विशेषाः सन्तीति एतद्ग्रन्थसंपादकैः विद्वद्वरेण्यैः आचार्य रहसबिहारीद्विवेदीमहोदयैः स्वकीयोपोद्घाते सविमर्शं सुविशदं च प्रत्यपादि। अतः तेभ्यः धन्यवादान् व्याहरामि।

इत्थं सुधीविधेयः

डॉ० एन्० आर्० कण्णन्

०८.०२.२०१८ प्राचार्यः

□□

# प्राक्कथनम्

इयं '**श्रृङ्गारसप्तशतिका**' हिन्दीसाहित्यस्य रीतिकालिकस्य ब्रजभाषाकवेः बिहारीलालस्य (१५९५-१६६४ ख्री०) बहुसमादृतायाः प्रशस्तायाः कृते '**बिहारीसतसई**'-इत्याख्यायाः संस्कृतपद्यानुवादरूपा वरीवर्ति। अस्या; संस्कृत पद्यानुवादकः श्री परमानन्दपण्डितोऽस्ति। अनुवादस्यन्तिमे भागे वि०सं० १९२५ चैत्रकृष्णैकादश्यामयं पद्यानुवादः पूरित इति सङ्केतः प्राप्यते। हरिमोहनमालवीयेन हिन्द्यां प्रणीतया अनवरचन्द्रिकाटीकायाः सम्पादनं साधु व्यधायि, तत्रादौ यथासम्भवं ज्ञातानां टीकाकृतां परिचयोऽदायि तेन परमानन्दपण्डितस्य संस्कृतानुवादटीकासमयः १९२५ वि०सं० एव प्रदत्तः। तेनेदमपि सूचितं यत्-काशिराजचेतसिंहस्य प्रधानपण्डितेन हरिप्रसादेनापि (१८३७ वि०सं०) आर्यागुम्फनाम्ना बिहारीसतसई-ग्रन्थस्य संस्कृतानुवादोऽकारि। बिहारीसतसई-ग्रन्थे प्रायशो हिन्द्या दोहाछन्दसां प्रयोगो दृयते यत्र-तत्र सोरठाछन्दसः प्रयोगोऽपि प्राप्यते। परमानन्दपण्डितेन दोहाछन्दसांसंस्कृते दोहाछन्दोभिः सोरठाछन्दसां सोरठाछन्दोभिरनुवादोऽकारि। परमानन्द-पण्डितस्येतिहादिग्रन्थेषु विशिष्टः परिचयो न प्राप्यते। अन्तिमायां पुष्पिकायाम्-श्रीमत्कविराजकवि-परमानन्दविरचिता श्रृङ्गारसप्तशतिका-इत्येवं सङ्केतःकृतोऽस्ति। ग्रन्थादौतत्कृतं मङ्गलाचरणमेवं विद्यते-

**श्रीगणेशायनमः**

**नत्वा गजाननं देवं विघ्नवारणवारणम्।**
**श्रृङ्गारसप्तशतिकां सव्याख्यां वितनोम्यहम्।।**
**चतुर्भुजशोभितभालविराजितचन्द्रगणाधिपते ( सुमते? )!**
**विघ्नविदारणवारणतुण्डकटस्थलमण्डितभृङ्गतते !!**
**शैलसुतासुतशम्भुसुरेशविरञ्चिमुखार्जित शुद्धमते!**
**बुद्धिबलं विमलं कलयन् कुशलं कुरु नाथ मयि प्रणते।।**

एतेन प्रतीयते यदयं गणपतिभक्तः संस्कृतकविरासीत्। परमानन्दः श्रेष्ठः कविः संस्कृतवाविद्विद्वानासीत्। यावत्यो मात्रा विहारिणो दोहाछन्दसः सोरठाछन्दसो वा विद्यन्ते तावत्य एव परमानन्दपण्डितस्य पद्यानुवादेऽपि विद्यन्ते। संस्कृतभाषाया वर्णिकादिवृत्तेषु प्रायशो द्वितीय-चतुर्थपदयोः लयदिशा समाना वर्णावली न भवति। अतः संस्कृतच्छन्दोनिर्मितौ तथाविधं काठिन्यं न भवति किन्तु परमानन्दपण्डितस्याद्भुतं सामर्थ्यं दोहानिर्मितौ विद्यते, सर्वत्र द्वितीयचतुर्थ-पदयोरन्त्यशब्दोच्चारणे लयसाम्यं दरीदृयते। एतेन तस्य कोशव्युत्पत्तिज्ञानं प्रमाणितं भवति। 'बिहारीसतसई'-ग्रन्थस्य यः पद्यानुवादस्तेन व्याधपि तस्यैव संस्कृतभाषया कोशव्याकरणालङ्कार-रसमावादिनिर्देशपूर्वकं टीकनमपि करोति। महता प्रयासेन तेन विहारिप्रयुक्तरसालङ्कारादीनां विनियोगः

स्वनिर्मितदोहाषु तट्टीकायाञ्चाकाकारि। कुत्रचिद् दोहासु संस्कृतानुवादे नूतनालङ्कारविच्छितयः संयोजिताः।

हिन्दी व्रजभाषाया ज्ञातारो ये न सन्ति तेषां कृतेऽपि बिहारिणः सतसईकाव्यं परमानन्दपण्डितेन सुलभीकृतम्। संस्कृताभाषाऽमरभाषा न केवलमत एव यदियममराणां (देवानां) भाषा-अपितुपाणिन्यादिभिर्महर्षिभिरस्या भाषायाः स्वरूपं परिष्कृतं स्थायि विकृतिरहितञ्चाकारि, अत इयं भाषा जरामरणरहिता सृष्टिपर्यन्तं स्थास्यति। वेदाः पुराणानि, बाल्मीकिकालिदासादिप्रणीतसाहित्यानि-अद्यापि संस्कृतज्ञा अवगच्छन्ति। अनेकासां भाषाणां बोद्धारोऽद्य न सन्ति। प्राकृतादिभाषां प्राक्तनींच हिन्दीभाषामपि सम्यग् रूपेण ज्ञातारोऽङ्गुलिगणनीया एव विद्यन्ते। इदमपि दौर्भाग्यं यत्पाठ्क्रमेष्वपि व्रजावधीप्रभृतिभाषाया उदात्तजीवनमूल्यप्रेरिका रचनाः सम्प्रति-अनिवार्यतया न पाठ्यन्ते। तथाकथिता प्रगतिवादिनः समाजवादिनश्चायार्यास्तुलसीदास-कबीरदास-सूरदास-बिहारीलालादिसाहित्यानि नाद्रियन्ते। अतोऽवधीव्रजादिभाषाज्ञनं छात्रेषु न भवति। एतेन स्वतः पठनेच्छवोऽपि भाषाज्ञानाभावात् साहित्यमिदं न पठितुं समर्थाः। अतः सूक्तिमयं सन्मार्गप्रेरकं ज्ञानं तेषु न भवति।

'बिहारीसतसई' हिन्दीसाहित्यस्य कालजयिनीकृतिरस्ति। सम्प्रति स्वोच्चशिल्पेन रसालङ्कार-भक्तिसम्प्रेषणक्षमत्वेन सर्वविदितेयं कृतिः। आमेरनरेश मिर्जाराज्ञा जयसिंहेन जयपुरनगर-व्यवस्थापनात्प्रागेव सम्भवतो माथुरचतुर्वेदिना बिहारीलालेन विविधविषय-सम्बद्धा दोहाःरचिताः। एवं वदति महामहोपाध्यायपण्डितकलानाथशास्त्री डॉ० रामनारायणझा सम्पादिते स्व० अयोध्याप्रसादमिश्रकृत-टीकाग्रन्थस्य 'दो शब्द'-इति प्राग्वाचिके तद्यथा-'ब्रज भाषा के कवि बिहारीलाल (१५९५-१६६३ ई०) माथुर चतुर्वेदी थे जो अपने ७२७ दोहों के अमररचनाकार होने के कारण हिन्दी साहित्य में प्रतिष्ठित हैं। इनकी सतसई अपने अवतरण के साथ ही देशभर में इतनी ख्यातिप्राप्त हो गई कि दूसरी अनेक टीकाएँ लिखी गईं। इसके आधार पर तथा इसके अनुसरण पर अनेक सतसइयाँ लिखी गईं, इसके दोहों के आधार पर कवियों ने कुण्डलियाँ कवित्त आदि की रचनाएँ कीं। यह हिन्दी साहित्य के पाठ्यक्रमों में नियत है। इसके अनेक संस्करण निकल चुके हैं जिसमें जगन्नाथदास 'रत्नाकर' का 'बिहारीरत्नाकर' सर्वाधिक विश्रुत है। इस दृष्टि से बिहारी सतसई के परिचय की-आज के हिन्दी जगत् को कोई आवश्यकता नहीं है।'

स्व० जगन्नाथदासरत्नाकरस्य 'बिहारीसतसई'-विषयकस्याध्ययनस्य-अनवरचन्दिकाटीका सम्पादकः श्रीहरिमोहनमालवीयोऽपि महत्त्वं स्वीकरोति। मालवीयेन अनवरचन्द्रिकासम्पादने-अष्टपाण्डुलिपीनामुपयोगोऽकारि। एतेन वह्वीनां टीकानांसूचना 'बिहारीसतसई सम्बन्धी-आलोचनेतरसाहित्य' इति नाम्ना ग्रन्थादौ प्रस्तुतायां भूमिकायामदायि। अत्रैव बिहारी सतसईपल्लनस्यापि महत्त्वपूर्णसूचना प्रदत्ता विद्यते। तद् यथा-

'बिहारी सतसई के अध्ययनेत्सुओं एवं वैतालिकों ने सतसई का संस्कृत, फारसी, उर्दू और

बंगला में रूपान्तर किया है। अर्थ के स्पष्टीकरण की दृष्टि से इसप्रकार का रूपान्तर साहित्य अवश्य ही महत्त्वपूर्ण है। रूपान्तरकारों ने कवि के भावों को आत्मसात् करके अपनी पद्यमय भाषा में प्रस्तुत किया है। किन्तु काव्यात्मकरूपान्तरों के द्वारा वे कवि बिहारी की सामासिक शब्दरचना में निहित गूढ़ भावों को पूर्णरूपेण और स्पष्टता के साथ प्रस्तुत करने में सफल नहीं हो सके हैं, इसी कारण क्लिष्टता, अस्पष्टता एवं दुरूहता की समस्या बहुलांश में इन रूपान्तरों के द्वारा हल नहीं हो सकी।

बिहारी सतसई से सम्बन्धित आलोचनेतर साहित्य का परिशीलन करने पर उसे (१) पल्लवन, (२) रूपान्तर (अनुवाद), (३) टीकासाहित्य के रूप में विभाजित कर सकते हैं। बिहारी के भावों का पल्लवन करने वालों में पठानसुलतान (अप्राप्त) गंगाधर (अप्राप्त) जानकीप्रसाद (रसिक बिहारी) जोखूराम पण्डा (अप्राप्त) पण्डित अम्बिकादत्त व्यास 'सुकवि', बाबासुमेरुसिंह तथा भारतेन्दु बाबू हरिश्चन्द्र प्रमुख हैं। इन कवियों का परिचय रत्नाकर लिखित कविवर बिहारी में उलपब्ध है। इस परम्परा में कवि वंशराज ने संवत् १८८५ में रसचन्द्रिका का प्रणयन किया था।

बिहारी के अनेक रूपान्तर संस्कृत में प्राप्त होते हैं। कविवर बिहारी में काशिराज चेतसिंह के प्रधान पण्डित हरिप्रसाद द्वारा संवत् १८३७ वि० में लिखित 'आर्यागुम्फ' और पण्डित परमानन्दकृत 'शृङ्गारसप्तशती' में संस्कृत रूपान्तर के साथ संस्कृत में अर्थ भी दिया गया है। सरस्वती भण्डार, रामनगर (वाराणसी) की प्रति में कृष्णदत्त कवि के कवित्तों के साथ-साथ हाँसिए में किसी कवि ने आर्या छन्द में बिहारी के छन्दों का अनुवाद किया है। स्व० भटट्ट मथुरानाथशास्त्री (मंजुनाथ) जी के ग्रन्थ 'साहित्यवैभवम्' में 'बिहारीविलास' शीर्षक के अन्तर्गत बिहारी सतसई के छन्दों का संस्कृत रूपान्तर मिलता है। भट्ट जी द्वारा किया गया यह रूपान्तर 'गोविन्दवैभवम्' (गीता प्रेस, गोरखपुर) में भी सङ्कलित है।

'सफरेसतसई' जोशी आनन्दीलाल द्वारा किया गया बिहारीसतसई का फारसी रूपान्तर है। यह सन् संवत् १८९३ में लिखा गया था। 'गुल्जारे बिहारी' शीर्षक से भ्रमरपत्रिका के संवत् १९७९ के अङ्कों में (१ से ११ तक) में क्रमशः बिहारी के छन्दों का मदनलाल दाता द्वारा किया गया उर्दू रूपान्तर प्रकाशित हुआ था तथा मुंशी देवीप्रसाद प्रीतम द्वारा प्रस्तुत रूपान्तर 'गुलदस्ताएबिहारी' के नाम से संवत् १९८१ में साहित्यसेवासदन से प्रकाशित हुआ था। श्री सोहनलाल श्रीवास्तव ने सतसई के छन्दों पर उर्दू में ग़ज़लों का निर्माण किया था किन्तु यह कृति मुझे अभी तक प्राप्त नहीं हुई है।

बिहारीसतसई की टीकाएँ..... निम्नलिखित मिलती हैं–

(१) वृन्दावनकृत टीका (अथवा कृष्णलाल की टीका), (२) मानसिंह विजयगढ़ कृत

टीका, (३) चरणदास की टीका (अप्राप्त) ४ अनवरचन्द्रिका, (५) राजगोपालशरण की टीका (अप्राप्त), (६) साहित्यचन्द्रिका ७ अमरचन्द्रिका, (८) रघुनाथ वंदीजन की टीका (अप्राप्त), (९) रसचन्द्रिका, (१०) हरिप्रकाश, (११) प्रतापचन्द्रिका, (१२) अमरसिंह कायस्थकृत अमरचन्द्रिका (अप्राप्त), (१३) सतसैयावर्णार्थ, (१४) रणछोड़ राम की टीका (अप्राप्त), (१५) लालचन्द्रिका, (१६) राम जू की टीका (अप्राप्त), (१७) सरदार कवि की टीका (अप्राप्त), (१८) गदाधर की टीका (अप्राप्त), (१९) धनञ्जय की टीका (अप्राप्त), (२०) गिरिधर की टीका (अप्राप्त), (२१) अयोध्याप्रसाद की टीका[१] (प्राप्त), (२२) रामबक्सकृत टीका (अप्राप्त), (२३) प्रभुदयाल पाण्डेय्की टीका, (२४) छोटूराम कृत वैद्यक टीका (अप्राप्त), (२५) भावार्थ प्रकाशिका, (२६) भानुप्रताप तिवारी की टीका, (२७) सञ्जीवन भाष्य, (२८) बिहारीबोधिनी, (२९) कुलपतिमिश्रकृतटीका[२] (अप्राप्त), (३०) उमेद रामकृतटीका (अप्राप्त), (३१) सूर्यमल्लकृतटीका (अप्राप्त), (३२) धनीरामकृत टीका (अप्राप्त), (३३) संस्कृतपद्यकविवर बिहारी संख्या ४६ पृष्ठ २६८ (अप्राप्त), (३४) संस्कृतपद्यटीका कविवर बिहारी संख्या ४६ पृष्ठ २९६ (अप्राप्त), (३५) आचार्य प्रकाशिका (गुजराती टीका), (३६) रामवृक्ष बेनीपुरी की टीका, (३७) बिहारी रत्नाकर।

हरिमोहन मालवीयस्य तथा च डॉ० रामनारायण झा महोदयस्य (अयोध्याप्रसादमिश्रटीका सम्पादकस्य) पूर्वोद्धृतेन सन्दर्भेण 'बिहारीसतसई'-विषयिणी महनीया सूचना प्राप्ता भवति। एतेन प्रमाणितं भवति यद् 'बिहारीसतसई'-काव्यस्य महत्त्वपूर्णं स्थानं हिन्दीसाहित्ये विद्यते। संस्कृतज्ञानां कृतेऽपि-कृतिरियं ज्ञातं स्यादेतदर्थं परमानन्दपण्डित-मथुरानाथभट्ट-पण्डितहरिप्रसादप्रभृतिभिः

---

१. हरिमोहन मालवीय ने अपने ग्रन्थ में यहाँ अयोध्याप्रसाद मिश्र की टीका को अप्राप्त बताया है किन्तु उसका प्रकाशन कुछ वर्षों पूर्व हो चुका है। इस टीका के सम्पादक डॉ० रामनारायण झा (वरिष्ठ व्याख्याता, श्री कल्याणराज स्नातकोत्तर महाविद्यालय, सीकर) हैं।

२. कुलपति मिश्र का उल्लेख स्वर्गीय अयोध्याप्रसाद मिश्र की टीका के सम्पादक ने किया है–महाकवि बिहारी का हिन्दी और ब्रजभाषा साहित्य में अप्रतिम स्थान है। आमेर के राजा जयसिंह उनकी काव्यप्रतिभा से प्रभावित होकर उन्हें शाहजहाँ से माँगकर अपनी राजधानी में ले आए थे। यहाँ उन्होंने सुप्रसिद्ध ग्रन्थ 'सतसई' की रचना की जो लगभग २७ वर्ष की अवधि में पूरी हुई। अपनी पत्नी के निधन पर वे विरक्त हो अपने दत्तक पुत्र निरञ्जनकृष्ण को लेकर मथुरा चले गए जहाँ उनकी मृत्यु १६६४ ई० में ६९ वर्ष की आयु में हुई। उनके काल में उनके भाँजे कुलपति मिश्र आगरा से आमेर आ गए। वे कुँवर रामसिंह के अध्यापक थे और महलों में भी पढ़ाते थे। उन्हें इस कार्य के पारिश्रमिक के रूप में जयपुर नरेश ने बसुआ के समीप गोविन्दपुरा की जागीर प्रदान की। उनके वंशज श्री अयोध्याप्रसाद मिश्र भी रससिद्ध कवि हुए जो जयपुर राजदरबार के मान्य कवि थे।' पृष्ठ १३, इस प्रकार उक्त महत्त्वपूर्ण जानकारी सम्पादक ने दी है।

संस्कृतकविभिः पद्यबद्धानुवादो व्यधायि। परमानन्दपण्डितेन तु मल्लिनाथ-नारायण-राघवभट्टसदृशटीकाशिल्पमनुसृत्य स्वकृतपद्यानुवादस्य टीकाऽपि संस्कृतभाषया व्याधायि। परमानन्देन प्रसिद्ध पद्यानामनेकार्थपल्लवनपुरस्सरं टीकाऽकारि।

हिन्दीसाहित्यस्य रीतिकालिककविबिहारीलालस्य 'सतसई' प्रामुख्येन शृङ्गारप्रधाना रचना। प्रायः श्रीराधाकृष्णाश्रितेयं रचना अतः नायको भगवान् श्रीकृष्णः नायिका च श्रीराधा। श्रीमद्भागवते तु स्पष्टतया राधाया उल्लेखोनास्ति किन्तु गर्गसंहितागीतगोविन्दादि ग्रन्थेषु-अस्याः वर्णनं प्रामुख्येन प्राप्यते। देवीदेवयोः शृङ्गारवर्णनं केचन-आलोचका औचित्यपूर्णं न मन्वते। कालिदासः शिवस्य परमोभक्तः तथापि पार्वतीशिवयोः कुमारसम्भवस्याष्टमे सर्गे संयोगशृङ्गारस्य वर्णनं करोति तथैव बिहारीलालोऽपि श्रीराधाकृष्णयोः परमो भक्तस्तथापि-अनयोः संयोगशृङ्गार वर्णनं करोति। कालिदासस्य बिहारीलास्य शृङ्गारवर्णनस्यौचित्यप्रतिपादका अपि बहवो विद्वांसः सन्ति।

बिहारी सतसईकाव्यस्य प्रशस्तटीका कर्तुः श्रीअयोध्याप्रसादस्य हिन्दीटीका सम्पादकः डॉ० रामनारायण झाः स्वसम्पादितग्रन्थे प्रथमतः 'समुद्बोधन'-इति शीर्षकेण प्रस्तुते स्थूलाक्षरैः प्रस्तुते वक्तव्ये 'सतसई' ग्रन्थे नायिका शरीररूपा पुरुषः (आत्मा) नायकोऽस्ति-इति कथयति। तद्यथा-

'यहाँ ध्यातव्य है कि इस ग्रन्थ की टीका का आलङ्कारिक व शृङ्गारिक वर्णन व्यवहार की दृष्टि से किया गया हैं। पाठकों से अनुरोध है कि इसे सामान्य स्त्री-पुरुष की लीला मानकर न पढ़े। यह काव्य जीवब्रह्म की मुक्तिपर्यन्त होने वाले संयोग और वियोग पर आधारित है। शरीर नायिका है, पुरुष (आत्मा) नायक है। आत्मा शरीररूपी नायिका का परित्याग कर बार-बार दूसरी शरीररूपी नायिका के पास जाती है और पुनः उसी शरीर के पास आती है तब नायिका का नायक (आत्मा के प्रति विविध प्रकार के आलङ्कारिक आक्षेपों का वर्णन होता है। अतः नायिका नायक के प्रणय को साधारण नायिका-नायक का खेल न समझकर भक्तजन इसे जीवात्मा-परमात्मा एवं शरीर-आत्मा के ऐक्य और अनैक्य की भगवद् विषयक अलौकिक लीलामात्र समझें।'

सतसईकाव्यस्य ग्रन्थादौ तथा चान्तिमे परिच्छेदे श्रीराधाकृष्णौ प्रति भक्तिभावपूर्णवर्णनं तथ्यमिदं प्रमाणयति। प्रथमपरिच्छेदो नायकनायिका वर्णनपरोऽस्ति। अत्र प्रथमायां दोहां कविः भवबाधानिवारणार्थं राधां प्रार्थयति तस्याः कृष्णे प्रभावमपि वर्णयति-

अपनय भवबाधा भयं त्वं राधे! कुलासि।
हरिरपि धरति हरिद्युतिं यदि माधवमुपयासि।।१।।

मेरी भव बाधा हरो राधानागरि सोय।
जा तन की झाईं परै स्याम हरित द्युति होय।।१।।

अस्या दोहायाः परमानन्द पण्डितकृता व्याख्या-

'तत्र तावद् ग्रन्थारम्भे विघ्न विघाताय स्वेष्टदेवप्रार्थनारूपं मङ्गलमाचरति। अपनयेति। राधे! राधितुं संसाधयितुं योग्या तत्सम्बुद्धौ। भवत्यस्मिन्निति भवः संसारः तस्मिन् या बाधा तापत्रयरूपा तस्या भयं भीतिम् अपनय दूरी कुरु तत्र हेतुत्वं कुशलासि, किञ्च दुःखमिति हरिरितिव्युत्पत्या हरिरेवैतद् बाधाभीतिहरणसमर्थः किमिति प्रार्थनयेऽति चैतदाह यदि माधवं कृष्णं त्वमुपयासि-उपसमीपमागच्छसि तदा हरिःकृष्णेऽपि हरित्सु दिक्षु द्युतिं प्रकाशं धरति धत्ते एतेन त्वद्विरहे मलिनद्युतिस्स्वमङ्गे प्रकाशितद्युतिर्भवति इति भावः। यद्वा हरितःहरितवर्णस्य द्युतिं प्रभां धरति त्वत्तनुकान्ति प्रतिबिम्बपीतवर्णप्रभाभिरभिभूतत्वादितिभावः।।

लोकेहि पीतकृष्णवर्णम्यां हरिद्वर्णो भवति तत्र राधायाः पीतवर्णगुणेन कृष्णस्य हरिद्वर्णगुण-लाभरूपोल्लासालङ्कारः। यदान्यगुणरूपाभ्यामुल्लासोन्यस्यतो यदि–लक्षणात्। यद्वाहरेश्चन्द्रस्येव द्युतिं शोभां धरति। यद्वां यदि माधवं प्रति त्वमुपयासि तदाहरिरपि हरित्सु दिक्षु प्रकाशं धरति। एतेन तदोडुराजः ककुभः करैर्मुदं प्राच्याविलम्पन्नित्यादि श्रीमद्भागवताशयोऽनुगतः। यदायोगमायामुपा-श्रितस्तदा–उडुराज उद्गादिति दिक्।।१।। किञ्च शृङ्गारप्रधानग्रन्थो शृङ्गारस्यभ्यर्हितत्त्वेन तत्स्थायिभावत्वप्राप्तरति पुष्टताहेतुकं राधायाः प्रणयमानं वर्णयन्नाह–अपनयेति। हे राधे! इति इति सख्योक्तिः, भवस्य बाधा भवबाधा तस्याः भयपपनय हर संसारे हि स्वकृतशुभाशुभकर्मभोगार्थं जन्ममरणरूपगमागमन बाधा वर्तते, तथा ममापि त्वत्सकाशनायकसकाशगमनागमनं बाधा दुःखं भवतितद्भयं हर किन्तु मानं मुञ्च, यावन्मानपपगमो न भविष्यति तावन् ममाप्यदो दुःखं नापयास्यतीति भावः। न च हरिरेवैतद्–बाधां व्यपनयतु किमिति मां प्रार्थयसि तत्राह कुशलासि। न चैतादृगास्तां कौशल्यं तत्रैवास्तु–इति चेत्तर्हि दयां कुरु–इत्यभिप्रेत्याह। यदि त्वं माधवं मधुवंशभवं कृष्णं प्रति उपयासि तदा हरिरपि हरिद्युतिं चन्द्रद्युतिं धरति कोटिचन्द्रचमत्कृतिमत्त्वदर्शन–सौभाग्यवत्तयेति भावः। अतस्तद् विरहवेदनापनोदाययैव तत्र गन्तव्यं ममोपरि दयां कुरु इति तात्पर्यम्। प्रणयमानलक्षणन्तु प्रतिबिम्बाख्य–भरतसूत्रे–मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः। द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि प्रेम्णः कुटिलगामित्वात्कोपोऽयं कारणं विनेति।। अत्र प्रथमतो विप्रलम्भशृङ्गारवर्णनेन रति पुष्टता दर्शिता तदुक्तम्–न विना विप्रलम्भेन संयोगः पुष्टिमश्नुते। सख्योऽन्तरङ्गवहिरङ्गभेदेन द्विविधाः। अतोऽत्र–अन्तरङ्गा सखीप्रणयमानापनोदनकुशलात्वादिति दिक्। यद्वागुरुमानवतीं राधिकां प्रार्थयन्त्याः सख्या उक्तिः। हे राधे! त्व कुशलासि कुशलास्तु स्वरूपदर्शनेनैव हृद्गतं जानन्ति, यदि यस्मिन् काले त्वं माधवं कृष्णं प्रति–उपयासि तदाहरिरपि–अपनय भवबाधां धरति–अपगतो नयोयस्मात् सोऽपनयोदुर्नयः तद्भवा या बाधा पश्चात्तापः तद्भयं धत्ते–इति निष्कर्षार्थः। कीदृशं माधवं हरिद्युतिंचन्द्रद्युतिं कज्जललक्ष्मादिभिः सकलङ्कमिवलक्षितमित्यर्थः। अतस्तदपराधं क्षमस्वेति भावः।।१।। यद्वा रासक्रीडाविनोदार्थं हे राधे! सकलकार्यसंसाधनकर्त्रि! इति कृष्णस्याप्यनुनयोक्तिः भवाद् रुद्रादबाधो यस्य समवबाधः कामः तस्य–आसमन्ताद् भयं भीतिम्–अपनय हर यद्वा भवेऽस्मिन् संसारे या बाधा कामजन्या तद्भयं हरं मन्मथमथनाकार्ये तवैवोकार्यत्वादितिभावः। नायिकायाः आलम्बनविभावत्वात्

तत्र हेतुत्वं कुशलासि रासक्रीडाकौशलेन कायजन्मबाधाभयं हरेति तात्पर्यम्। किञ्चोद्दीपनं विनाऽऽलम्बनस्य न पूर्णरसोद्बोदकत्वमिति चेत्तत्राह यदि त्वं माधवं मा लक्ष्मीर्धवति गच्छति स्थिरीभवति वा यस्मिन्निति माधवस्तच्छ्रीमद्वृन्दावनम्–उपयासि गमिष्यसि तदा हरिश्चन्द्रोऽपि तवागमन गौरवाद्–हरित–सुद्युतिं प्रकाशं धरति धरिष्यति, हरिःसोमो हरिर्यम इत्यनेकार्थः। चन्द्रोदयश्चोद्दीपन विभावास्तदैवाविर्भवन्तीत्यर्थः। यद्वा कीदृशं वृन्दावनं हरिद्युतिं हरितपत्रपल्लवसंयुक्तं लतातृणादिभिरिति भावः द्युतिर्यस्य तत्। श्रयत इन्दिराशश्वदत्रहीति श्रीमद्भागवतोक्तेः श्रीमत्वं वृन्दावनस्य स्फुटमित्यलं पल्लवितेन।

परमानन्दपण्डितस्य टीकया दोहानुवादेन च–अनवरचन्द्रिकाटीका सम्पादकस्य श्रीहरिमोहन–मालवीयस्य कथनमिदम्–

'रूपान्तरकारों ने कवि के भावों को आत्मसात् करके अपनी पद्यमय भाषा में प्रस्तुत किया है। किन्तु काव्यात्मक रूपान्तरों के द्वारा वे कवि 'बिहारी सतसई' की सामासिक काव्यरचना में निहितगूढ़ भावों को पूर्णरूपेण और स्पष्टता के साथ प्रस्तुत करने में सफल नहीं हो सके हैं। इसी कारण क्लिष्टता, अस्पष्टता एवं दुरूहता की समस्या बहुलांश में इन रूपान्तरों के द्वारा हल नहीं हो पाती।'–(अनवरचन्द्रिकाटीका, पृ० २)

–सर्वात्मना याथार्थ्यं नावहति।

यतो हि संस्कृतभाषयाः कोशव्युत्पत्योरयं महिमा यद् विश्वस्यकापि भाषा–एवादृशीनास्ति यस्याः शब्दानां वाक्यानां संस्कृतभाषावद् वहवोऽर्था विच्छितयश्च सम्भवन्तु। परमानन्दपण्डितस्थ प्रथमदोहानुवादः तस्य संस्कृतटीका च तथ्यमिदं भृशं दृढं च पुष्णाति। अतएवात्र मया प्राक्कथने निदर्शनरूपणैकस्य पद्यस्य पद्यानुवादः तट्टीका च समुद्धृते। प्रशस्त संस्कृतकाव्यानां यथा टीका संस्कृतज्ञैर्मनीषिभिरकारि तथैव 'बिहारीसतसई'–काव्यस्यानुवादं टीकां च कृत्वा परमानन्दपण्डितेन काव्यमिदं बोधगम्यमममरं चाकारि।

बिहारीसतसईकाव्यस्य संस्कृतपद्यानुवादस्य नाम 'शृङ्गारसप्तशतिका' विद्यते। अस्यां केवलं सप्तशतपद्यानि विद्यन्ते। अनवरचन्द्रिकाटीकायां पञ्चत्रिंशदधिकसप्तशतपद्यानि (७३५ पद्यानि सङ्ग्रहीहितानि। अयोध्याप्रसादस्य हिन्दीटीकायां सप्तविंशत्यधिक सप्तशत (७२७) पद्यानि विद्यन्ते। बिहारीलालस्य भागिनेयः कुलपति मिश्र आसीत्। अस्य वंशजैः कृतस्य 'बिहारी सतसई' काव्यस्य वहव्यष्टीकाः सन्ति। तासु वर्षद्वयात्प्राक् प्रकाशिता डॉ० रामनारायण झा प्रकाशिता टीका प्रमाणिकी महत्त्वूपूर्ण चास्ति। इयं टीकाकुलपतिमिश्रस्य वंशधरेणयोध्याप्रसादेन व्यधायि। अस्या व्याख्यायाः प्रकाशनं पण्डितहरिनाथचतुर्वेदिना कृतमस्ति। अस्य पत्र सङ्केतः– H.N. Chaturvedi B-62 Bhan

Nagar, Queens Road, Jaipur, Ph.No. 0141-2350685 इतिरूपेण मुद्राङ्कितमस्ति। प्रकाशितग्रन्थस्य कृतज्ञताज्ञापने ग्रन्थस्थितिनिरूपणं श्रीहरिनाथचतुर्वेदी–एवं करोति–

'साहित्य की उपासना में सतत् रत मान्यवर पण्डित अयोध्याप्रसाद मिश्र ने टिमटिमाती हुई रोशनी में हिन्दी–जगत् के आलङ्कारिक ग्रन्थों को अपने ज्ञानालोक से प्रकाशित करने वाले 'बिहारी सतसई' नामक ग्रन्थ पर संवत् १७११ चैत्र माह के कृष्णपक्ष की छठी तिथि सोमवार को कृष्णराधा के नायक व नायिका के रूप में प्रस्तुति देते हुए भक्तिभाव से अप्लावित सारगर्भित विविध आलङ्कारिक भावों से परिपूर्ण टीका की रचना की जो अद्वितीय अनुपम सरल सुबोध व अनुभूतिगम्य है। इसकी एक लम्बीदास्तान है ऐसे ही लगभग ६५२ ग्रन्थ उस समय लिखे गये जो एक लकड़ी के बक्से में बन्द थे। ऐसे ही ग्रन्थ में हमें प्राप्त हुए जो एक लकड़ी के बक्से में बन्द थे। ऐसे ही ग्रन्थ हमें प्राप्त हुए जिनमें दीमक लगी हुई थी। दीमक को बचाकर 'बिहारी सतसई' की यह टीका आप पाठकों के सामने प्रस्तुत कर अपार आनन्द व हर्ष की अनुभूति कर रहा हूँ। .... यह ब्रजभाषा की लिखी हुई मौलिक टीका है टीका की विशेषता यह है कि यह अनेकानेक अलङ्कारों व उनके गूढ़ उदाहरणों के ग्रन्थियों को खोलने में पूर्णतः समर्थ है।'

परमानन्दपण्डितस्यान्तिमा दोहा (सङ्ख्या ७००)।

**यद्यपि मुक्ताफलगणे शोभा भाति सदैव।**
**खलु हारग्रथनेन तत्सुषमा भवति नवैव।।७००।।**

**यद्यपि है शोभा घनी मुक्ताफल मैं देखि।**
**गुहै ठौर की ठौर तैं लट में होत विसेष।।७००।**

किन्तु–अयोध्याप्रसादस्य टीकायामियं दोहा प्राप्यते–

**संवतग्रहराशिजलधि–क्षिति छटि तिथिवासर चन्द।**
**कृष्णपक्ष मधुमास मे पूरन आनंदकन्द।।७२७।**

अर्थात् १७१९ चैत्रकृष्ण्य सोमवारदिने ग्रन्थोऽयं पूर्णोऽभवत्। किन्तु परमानन्दपण्डितस्य तथा च अयोध्याप्रसादस्यान्तिमात्प्राक् समानैव दोहा प्राप्यते। सा चैवम्–(परमानन्दपण्डितस्य पाठः)

**नृपजयसिंहादेशतो राधाहरिहर्षाय।**
**कविबिहारीकृत सतसई बहुविध संवादाय।।६९९।**

**हुकुम पाई जयसाह कौ हरिसाधिका प्रसाद।**
**करी बिहारी सतसई भरी अनेक संवाद।।६९९।**

अयोध्याप्रसाद मिश्रस्य पाठः–

**हुकुम पाय जयसाह कौ हरिराधिका प्रसाद।**
**करी बिहारी सतसही भरी अनेक संवाद।।७२६।**

परमानन्दे पाइ किन्तु अ०प्रसादेन पाय द्वितीयां पङ्क्तौ 'सतसई' प०नन्दपाठः मिश्रस्य च सतसही' इति। मन्ये कालान्तरे 'सतसई' नाम प्रसिद्धिं गतोऽतः परमामन्देन हीकारस्थाने ईकारोयोजितः। 'बिहारीसतसई' काव्यस्य प्रायः सर्वेषु संस्करणेषु पाठभेदः दोहाक्रमभेदो निभाल्यते। सप्तधिकविंशतिवर्षं यावदस्य काव्यस्य रचना कृता। एवं प्रतीयते यत्तेन (बिहारिणा) स्वयं क्रमबद्धरूपेण संयोज्य कापि पाण्डुलिपिः व्यवस्थितरूपेण न प्रस्तुता। अतः सम्पादकैः केचन विषयदिशा केचन काव्यतत्त्वदिशशऽस्य ग्रन्थस्य सम्पादनमकारि। प्रायशः सप्तशती काव्यानि (दुर्गासप्तशतीं विहाय) मुक्तककाव्य सङ्ग्रहरूपाणि दृश्यन्ते।

परमानन्दपण्डितेनास्य काव्ये चत्वारः परिच्छेदाः कृतास्तत्र प्रथमः–नायकनायिकावर्णनम् (दोहा०सं० २०१) द्वितीयः–विप्रलम्भनृङ्गारवर्णनम् (२०२ संख्यातः ४२८), तृतीयः–नखशिखभूषणवर्णनम्, वसन्तादि षड्ऋतुवर्णनम्, २२९ दोहातः ५८३) चतुर्थःमज्जननादिकवर्णनम् सूक्तयः, श्रीकृष्णभक्तिप्रकटनम्, जयसिंह नृपतिवर्णनं च (दोहा सं० ५८४–७००) पिलिपिकारेण स्पष्टतया शीर्षकाणि न दत्तानि किन्तु परिच्छेदसमाप्तौ सूचना प्रदत्ता अतो मयाऽन्तिमं भागं विषयं च दृष्ट्वा शीर्षकाणां निर्धारणं कृत्वा परिच्छेदादावपि सङ्केतः कृतः।

अयोध्याप्रसादमिश्रस्य टीकायां प्रत्येकं दोहायाः प्राक् वर्णनीय विषयस्य सङ्केतस्तथा काव्यतत्त्वदिशा नायकादिलक्षणान्यपि ब्रजभाषया निर्माय प्रस्तुतीकृतानि सन्ति। इतः प्राक् दोहनाम–क्षरमात्रादि संख्या अपि प्रदत्ताः। टीकायामपि काव्यतत्त्व दिशातद्वैशिष्ट्यं व्याख्या, कठिनशब्दार्थाश्च प्रदत्ता सन्ति। अतः हिन्दी व्याख्या दिशा नूनमेवेयं टीका महत्त्वपूर्णा सर्वाङ्गपूर्णा च वरीवर्ति। इयं टीका मिश्रमहाभागस्य काव्यशास्त्रीयं ज्ञानं प्रमाणी करोति।

अनवरचन्द्रिका टीका हरिमोहनमालवीयेन सम्पादिता। अनवरचन्द्रिका नाम्नैव ध्वन्यते यदस्य टीकाकारः कश्चिदनवर आसीत्। अस्यां कृतौ प्रकाशरूपेण विभाजनं विद्यते। अत्र षोडश प्रकाशाः सन्ति। प्रस्तुतीकरणमेवं विद्यते–

## अनवरचन्द्रिका का विषय विभाजन

**प्रथमप्रकाश**–(१) प्रभुवंशवर्णन मंगलाचरण, (२) प्रभु स्तुति।

**द्वितीयप्रकाश**–साधारणनायिका वर्णन–मंगलाचरण १४ सादारणनायिका वर्णन १५

**तृतीयप्रकाश**–शिखनखवर्णन–केश ४९ ललाट ५४, नासिका ७८, श्रवण ८१ कपोल ८५ अधर ८६ दशन ८७ चिबुक ८८ मुख ९२ ग्रीवा ९७ हृदय ९९ कुच १०० कर १०३ कटि १०६ जंघा १०८ मुख १०९ पग ११० एड़ी ११२ अंगूठा ११४ सुकुमारता ११५ गात १२०।

**चतुर्थप्रकाश**–मुग्धा १३८, मध्या १५०, प्रौढ़ा १५६।

**पञ्चमप्रकाश**–स्वाधीनपतिका १५६ अभिसारिका दिवाभिसारिका १६४ निशाभिसारिका १६५, कृष्णाभिसारिका १६८, शुक्लाभिसारिका १६८, उत्कण्ठिता १७० कलहान्तरिता १७१ विप्रलब्धा १७३ वासकसज्जा १७४, खण्डिता १७६, (अधीरा, धीराधीरा,सादराधीरा) प्रेषितपतिका २१४, आगतपतिका २६०, गमिष्यत्पतिका २६६, अगमिष्यत्पतिका २७४, रूपगर्विता २७८, प्रेमगविता २८०, प्रेमप्रशंसा २८१।

**षष्ठप्रकाश**–रूपगुणगर्विता २७८, प्रेमगर्विता २८०, प्रेमप्रशंसा २८१।

**सप्तमप्रकाश**–मानिनीवर्णन २८२ (गुरुमान २८२, २९१, २९२, ३०२, ३०५, मध्यमभान २८४, ३०९, ३२२, भेदोपाय २८५, २८७, २८९, ३०७, सामोपाय ३०८, ३२५ मानाभास २९४, २९५, २९८ मानमोचन ३१९।

**अष्टमप्रकाश**–सुरति सुरतान्तपरिहासवर्णन–सुरति ३२७, विपरीतरति ३३३, सुरतान्त ३३८, परिहास ३४८।

**नवमप्रकाश**–परकीयावर्णन, परकीया ३५४, अनसयाना ४७८ (स्थान विघट्टनानुशयना ४७८, ४७९, सन्देहानुशयाना ४८०, वनानुशयाना ४८१) लक्षिता ४८२ (सुरतिलक्षिता ४८२ हेतु लक्षिता ४८३ सुरति–लक्षिता ४९०) क्रियाविदग्धा ४९४ वचनविदग्धा ४९६।

**दशमप्रकाश**–दशदशावर्णन–लालसा ४९७, चिन्ता ४९८, स्मृति ४९९, गुणकथन ५०५, उद्वेग ५०६, प्रलाप ५०७, उन्माद ५०८, व्याधि ५०९,जड़ता ५१०।

**एकादशप्रकाश**–सात्त्विकभाववर्णन–कम्प ५११,स्वेद ५१२, स्तम्भ ५१६०, स्वरभंग ५१६, स्वरभंग ५१७, रोमांच–अश्रु ५८१।

**द्वादशप्रकाश**–मद्यपानवर्णन ५२०।

**त्रयोदशप्रकाश**–हाववर्णन–लीला ५२७ ललित ५२८, विलास ५२९, वीक्षित ५३१, मोट्टायित ५३२,कुट्टमित ५३४, बिम्बोक ५३५,विभ्रम ५३६, किलकिञ्चित ५३७।

**चतुर्दशप्रकाश**–नवरस वर्णन–शृङ्गार ५३८ (संयोगशृङ्गार ५३८, विप्रलम्भ ५४० प्रवास

विप्रलम्भ ५५२) वीर ५५ रौद्र ५५७, हास्य ५५८, करुण ५६२, अद्भुत ५६३, भयानक ५६४, वीभत्स ५६५, शान्तरस ५६६, रसाभास ६०७, भावध्वनि देवरतिभावध्वनि ६०७, राजरतिभाव ध्वनि ६०९, भावोदय ६१४, भावसन्धि ६१६, भावशबलता ६१७।

**पञ्चदशप्रकाश**–षड्ऋतुवर्णन–वसन्त ६१८, ग्रीष्म ६३६, पावस ६४०, शरद ६५३, हेमन्त ६५४, शिशिर ६५८।

**षोडशप्रकाश**–प्रास्ताविक और अन्योक्तिवर्णन प्रास्ताविक ६६१ अन्योक्ति ७०४।

अनवरचन्द्रिका टीकायां काव्यसौन्दर्यतत्त्वक्रमेण बिहारीसतसईकाव्यं कृतं विद्यते। अयोध्याप्रसादमिश्रस्य टीकायामपि तथैवस्थितिः विद्यते। अनवरेण मिश्रेण च प्राय; संस्कृत-काव्यशास्त्रिणां लक्षणान्यनुसृत्य हिन्दीभाषया नायकनायिका रसालङ्कारादीनां लक्षणानि निर्माय तेषामुदाहरणरूपेण बिहारीसतसईकाव्यस्य पद्यानि समुद्धृतानि। सतसईकाव्यस्य सामर्थ्यमप्येतादृशं विद्यते यत् सर्वाणि काव्यशास्त्रिभिः कृतानि लक्षणानि काव्यादस्मात्प्रदातुं शक्यन्ते। श्रीमद्भागवतगर्गसंहितादि प्राक्तनग्रन्थेषु कृष्णलीला प्रसङ्गेषु कुत्रचिदपि (एकस्मिन् पद्येऽपि) कृष्णभक्तिः तिरोहिता न भवति किन्तु विहारीसतसई काव्ये सर्वत्रैषा स्थितिर्नास्ति कवेर्दृष्टिः समेषां काव्याह्लादकतत्त्वानामुदाहरणनिर्माणे विद्यते। प्रायशः क्रमबद्धरूपेणाध्ययने केषुचित्प्रसङ्गेषु दूरं यावत्कृष्णभक्तिर्न दृश्यते।

मन्ये तथ्यमिदभवगच्छतापरमानन्दपण्डितेन सप्तसतीकाव्यदोहासोरठाक्रमसंयोजने सप्तशतिकारूपेण दोहानां संस्कृतीकरणे तट्टीकायां ग्रन्थादौ मध्ये चरमे च भागे श्रीकृष्णराधा विषयकानि पद्यानि–एवं संयोजितानि येनभगवद्भक्तिः सर्वथा न तिरोहिता। पूर्वं मया 'मेरी भव बाधा हरो राधा नागरि सोय' इत्यस्यानुवादस्तट्टीका चाविकलमुद्धृताऽत्रान्तिम भागस्योद्धरणं प्रस्तूयते यत्र लोकोपकारिण्यः सूक्तयः श्रीकृष्णभक्तिप्रसङ्गाश्च प्राप्यन्ते। तद् यथा–

रागं नोज्झति सज्जनः स्नेहः शिथिलतरोऽपि।
अत्यारक्तपटो यथाऽरुण्यं जीर्णतरोऽपि।।५८४।।
सखिकण्टकइव दुर्जनो विषमो विषमतयाऽपि।
पदलग्नस्तिर्यग् गतःप्राणं हरति तथापि।।५८५।।
कृपणधनं वक्षोजभरमपि समतया विभाति।
निजसमृद्धि समये यतो विलसति कठिनतयाऽति।।५८६।।
गीतकाव्यतन्त्रीरसा अब्धिचतुष्टयमेषु।
तट लग्ना भग्नाभृशं मग्ना लग्नास्तेषु।।५९०।।
सज्जनकेशौ वैभवे सति नम्री भवतश्च।
वैभवनाशे नीचजनकुचौ तथाभवतश्च।।५९१।।

गदोनृपः पातकमिति प्रबलत्रयं जनेषु।
वरीवर्ति कालत्रये फलप्रदं सर्वेषु।।६०१।।
सङ्गः किल लोके विभा सखि! समतया ददाति।
नागलतारागोऽधरे दृशिकज्जलं विभाति।।६०६।।

अन्योक्तिमाध्यमेनापि सूक्तयो निभाल्यन्ते—

दिनदशकं सादरतया काक! महत्त्वं यासि।
श्राद्धदिनेऽतीतेपुनर्यथा तथा भवितासि।।६२९।।
बकपङ्क्त्या प्राचीनया सरस्तथा न विभाति।
नवैर्मरालकुलैर्यथा विशालतां प्रतियाति।।६३३।।
कनक! त्यज कनकाभिधां किंनाम्ना प्रभुताऽपि।
भूषानिर्मितिशालिनी शक्तित्वयि न तथापि।।६४४।।

कनकस्य यमकत्वं विधाय धनाधीशगर्वभर्त्सन्नाह—

कनकादप्यधिकं मतं कनकं जगति जनेषु।
तदद्भुतं मदकारि तत्सक्तं मदकरगेषु।।६४३।।

श्रीकृष्णभक्तिभावोऽन्तमे भागे दरीदृश्यते। एतेन शृङ्गारसप्तशतिका भक्तिदिशा महत्त्वपूर्णा भवति—

पश्य हरेर्मोहनतनोर्गतिरद्भुता विभाति।
हृदि वसति प्रतिबिम्बताबहिरपि विशदतराति।।६५९।।
सरागस्य मनसो गतिं कोऽपि न विन्दत्येव।
मग्नं कृष्णरसे यथा तथा तथोज्ज्वलमेव।।६६०।।
शतं सहस्त्रं लक्षमपि कोटिं कोऽपि चिनोति।
मम सम्पत्तिर्यदुपतिः सर्वं सुखं तनोति।।६६२।।

तिलकाङ्कनेन मालाधारणेन किमपि पुण्यं न भवति भक्तिसत्यभावनया कृष्णवशीकरणमेव वरम्—

जपमालामुद्रातिलकमुद्रिततनुर्वृथैव ।
हरिरपि सत्यवशीकृतः कुरुसत्यं मनसैव।।६६३।।
यमकरिवदनान्तर्गतो जीवसि जीव यदैव।
परिहर विषयतृषामृतो जीवसि जीव! यदैव।।६६४।।

जगदपि येन विदर्शितंदृष्टोहरिर्न सोऽपि।
दृग्भ्यांपश्यति सर्वमपि पश्यतिदृगौ न कोऽपि।।६६५।।
यंभजतोभव्यंभवेत्तं न भजसि भवमूढ!।
जीवयतोदूरीकृतोभजसि पुनस्तं मूढ।।६६६।।
तं कृष्णं चिन्तय सखे! भवसागरतरणाय।
कोऽसौ ग्रावकृतोडुपः सेनां सुखं निनाय।।६६८।।

भवपारावारस्य पारं कः सुखेनयातिं? स्त्रीप्रेम्णश्छायाग्रहतोये ग्रसितः।आदौमेरी भवबाधा हरौ राधानगरि सोय, जा तन की झाईं परतश्याम हरितद्युति होय' इत्यादौ याप्रस्तावना कृतातस्याः परिणतिरन्तेदृयते। तात्पर्यमिदंयद् यथाराधाकृष्णं प्रीणाति यथा च कृष्णो राधांप्रीणाति तथाकृष्णंप्रति भक्तिभावेनैव मुक्तिर्भविष्यति न तु लौकिकया स्वीकीयया परकीयया वानार्या अतो वक्ति–

भवपारावारस्यकः पारं याति सुखेन।
वनिताभाछायाग्रहस्तं गृह्णाति सुखेन।।६७५।।

अयोध्याप्रसादमिश्रस्य टीकायां ७२७ पद्यानि सन्ति। अयं टीकाकार बिहारीलालस्य भागिनेयस्य कुलपतिमिश्रस्य वंशधरः। अस्याः टीकाया उल्लेखोजगन्नाथदासरत्नाकरेण हरिमोन मालवीयेन च कृतः किन्तु न प्राप्तेयं टीकेति तौ कथितवन्तौ स्तः। वस्तुत बिहारीलालोऽन्तिमे समये मथुराभागत्य तत्र वसतिं चकार। तस्य वंशधराणां संग्रहे यापाण्डुलिपिरासीत् संभवतः तस्यां मथुरानिवासकाले रचितानि पद्यानि–अपि सङ्ग्रहीतानि सन्ति। अतः विहारीलालस्यन्तिमरचित पद्यमपि चात्रप्राप्यते। बिहारीसतसईदिशा महत्त्वभावहति यतोह्यत्र बिहारिणःकृष्णमन्दिरपरिसरे निवासेच्छाऽत्र प्रकटीकृता निमाल्यते–

हरि की जतु तुमसो यहेविनती बार हजार।
जिहिं तिहिं भाँति डरयो पर्‌यो रही दरबार।।७२५।।

–अ०प्र० टीका ७२५

एवं रामानारायणझा सम्पादितेऽस्मिन् संस्करणे श्रीकृष्णभक्तिपरत्वं चरमे भागे दृश्यते किन्तु हरिमोहन मालवीय सम्पादितेऽनवरचन्द्रिकाटीकाग्रन्थेऽन्तिमादोहाऽन्योक्ति निदर्शन रूपेणैवं विद्यते–

इति दैही मोतीसुगत तूँ नथ गरव निसांक।
जिहि पहिरै जगदृग ग्रसत लसत हसत सी नाक।।६३५।।

–अ०प्र०टी० ६३५

कस्यापि काव्यस्य सम्पादने कवेरुद्देश्यं ध्यातव्यभवति। अलङ्कारसभावनायकनायिकादिशा

पद्यक्रमपरिवर्तनं नाचौचित्यपूर्णं भवति। संस्कृतकाव्यशास्त्रीय ग्रन्थेषु कुत्राऽपि नैषा स्थितिर्दृश्यते। कवीनां पद्यानि समुद्धृतानि किन्तु काव्यग्रन्थात्तानि सन्दर्भोल्लेखपूर्वकं ते प्रस्तुतानि। अद्यापि बिहारी सतसईकाव्यस्य बिहारिलिखितक्रमेण सम्पादनस्यावश्यकताऽस्ति।

बिहारीलालो हिन्द्या रीतिकालिकः प्रसिद्धः कविः। 'बिहारीसतसई' प्रायशः सप्तविंशतिवर्षकालवधौ रचिता। तत्पूर्तेः प्रागपि कविगोष्ठीषु मुहुर्मुहुःप्रस्तुतीककरणेनास्य ग्रस्थस्य प्रसिद्धिरभवत्। संस्कृतकाव्यशास्त्रप्रतिपादितनायक-नायिका रसालङ्कारदृष्ट्या कविना काव्यमिदं रचित-मतश्चरिताविकासदिशाऽस्य काव्यस्यविन्यासो नास्ति। कविना श्रीराधाकृष्णयोर्वर्णनं विशेषरूपेण शृङ्गाररसदृशा कृता, केवलं काव्यादौ चान्ते श्रीकृष्णभक्ति-युतानि वर्णनानि प्राप्यन्ते, यत्रतत्र सूक्तयोः लोकोक्तयश्च समावेशिताः। अतः महाकाव्यादिप्रबन्धरचनावदस्य काव्यस्यवस्तुविन्यासो नास्ति। काव्यशास्त्रे प्रतिपादितानि लक्षणानि मनसि कृत्वा तदुदाहरणरूपेण रचनाकृता। अतोऽनवर-चन्द्रिकाऽयोध्याप्रसादमिश्रादिटीकासु हिन्दी भाषया लक्षणानि निर्माय तदुदाहरणरूपेण बिहारीलालस्य दोहासोरठाछन्दांसि समुद्धृतानि। परमानन्दपण्डितेन् दोहा सोरठा छन्दोभिरनूद्य स्वकृतानुवादमाधृत्य टीकाऽकारि। काव्यतत्त्वानामन्वर्थतायै संस्कृतकाव्यशास्त्रीयेभ्यो ग्रन्थेभ्यो यथातयथं लक्षणानि समुद्धृतानि। परमानन्दपण्डितः शास्त्रज्ञः कविष्टीकारश्चासीत्। श्रीमद्भागवतादिश्रीकृष्ण भक्तिसम्बन्धग्रन्थानामभ्यासोऽपि तेन कृत आसीत्। ग्रन्थस्य टीकया तथ्यमिदं स्फुटीभवति।

प्राय एषा परम्परा वरीवर्ति यत्सम्पादितग्रन्थस्य भूमिकायां(प्राक्कथने) सम्पादितग्रन्थस्य वैशिष्ट्यमपि प्रतिपाद्यते। 'शृङ्गारसप्तशतिका' पद्यानुवादरूपा कविकृतानुवादस्य च टीका रूपाऽस्ति। अत्र स्वकृतपद्यानां व्याख्याने स्वत एव तेषां वैशिष्ट्यं साधु प्रतिपादितं तेन मया काव्यवैशिष्ट्यस्योदाहरणं दत्वा तद्वैशिष्ट्यप्रतिपादनस्यावश्यकता नानुभूता। पूर्वमेकं (प्रथमं पद्यम्) तट्टीका चाविकलरूपेणात्र मया समुद्रधृते। एतेनपद्यानुवादस्य टीकायाश्च स्वरूपं वैशिष्ट्यं च सुस्पष्टम्।

शृङ्गारसप्तशतिकाकर्तुर्ग्रन्थारम्भात्प्राक् पञ्चदश पद्यानि संग्रहीतानि तेन अस्य ग्रन्थस्य रचनापरिस्थितयो संसूचिताः। पाण्डुलिपौ प्रथमतस्तृतीयं पृष्ठं यावत् पत्राणि पार्श्वतः खण्डितानि जीर्णानि च सन्ति। तेषु प्रायशोऽर्थावबोधे काठिन्यं विद्यते। तथापि यथामति पठित्वा कवे; परमानन्दपण्डितस्य प्राक्कथनं प्रस्तूयते–

**मुखपृष्ठम्** (लिपिकारेणाङ्कितं प्रतीयते) तद्यथा–शृङ्गारसप्तशती/अर्थात् बिहारीसतसई का/ संस्कृत दोहा छन्द में/श्री परमानन्द पण्डित का/बनाया हुआ। ठीकासहित ग्रन्थ।

**प्रथमं पृष्ठं**–(परमानन्दपण्डितप्रणीतम्)

श्रीगणेशाय नमः

खेलन् सलीलनलिनीसतमालकालो
*योऽसौ* विलासचपलाकुलिताङ्गनीलाः।
सम्प्राप्तजीवन *जनाननगीतमालः*
कश्चिन्मुदे मम तनोतु पयोदबालः।।१।।

देशोऽस्त्युत्तरपश्चिमः सुरधुनीसूरात्मजासङ्गतः
स्वाङ्गोल्लासिसरस्वती परिगतोदार्षत्वतौघा...।
यद्याम्यां दिशमिन्दुजालविमलाभागीरथीसङ्गता
प्रालेयाद्रिलसन्तिस्निह्यन्निवासस्याश्रये ।।२।।

यत्पश्चिमे शतद्रुनिःसीम *परमा प्र*वहति।
देशः पञ्चनदाख्यः सोऽयं भूभागभूषणं भवति।।३।।

*व्यापारेण* विशोविशोकमतयो वेशोन्नताः सन्नता-
तेष्वासीद्विमलं कुलं *बहुबलं* श्रीसिंहलाख्योज्ज्वलम्।
तस्मिन् रायपुरीति बिभ्रदभिधां ...... कृष्णसुधी-
र्वंशं प्रोज्ज्वलन्नुवास सुचिरं दिल्लीसमाख्ये पुरे।।४।।

...................... शासनवशंवद एष शूरः
कौशेयकक्षपितवैरिनिकायका ।
.............................. विशदंशशि शुभ्रमाशु
पृथ्वी यथा भवति *दुग्सरस्वभावा*।।५।।

सम्पाद्य सत्रमनुत्तममातमजानां
विज्ञाय संसृतिसृतौ हरिमेव *सारम्*।
तत्पादपङ्कजविनिःसृतसिन्धुरोध-
स्यावासमात्मन इयेष च *भार*तञ्च।।६।।

हरिविलासपदाञ्चिततत्सुतो
हरिगुणार्णववर्णनको*विदः* ।
निखिलयोगतदङ्गविशारदो
हरिपदीतट एव जहौ तनुम्।।७।।

अन्यौ द्वौ वसतिं विधाय सुचिरं दिल्लीपुरे सद्गुणौ
वंशस्योपचितिं प्रचक्रतुरयम् सत्सूनुसम्पादनैः।
तत्रैको युधिवैरिवर्गविजयी प्राप्तोमृतं वैरिणा
स्वीयोष्णीषसहानुगां कुल वधूमाप्यामृतं प्रापितः।।८।।

श्रीगिरिधारीलालोजज्ञे श्रीबालकृष्णसुतबालः।
द्विजवरमाननशीलोदिल्लीपतिरासयेःद्विषत्कालः।।९।।

अमीचन्द्रो जज्ञे तदनुजलधेश्चन्द्रइव यो
महद्राज्यं प्राप्याप्यभवदतिनम्रो द्विजगणे।
प्रजा यस्मिन् राज्ञि प्रतिपलसमृद्धाखिलसुखा
दशासौ सत्पुत्रान् दश च तनयाः संव्यजयत्।।१०।।

केचिद्राजपदाश्रिता अथ परे रायाभिधा भूषिताः
केचिद्रायबहादुरा इति पदं प्राप्तास्वकीयैः गुणैः।
तत्र प्राप्य च रत्नचन्द्र नृपतिर्दिल्लीपतेः शासनं
नीत्या मक्सुदबाद नामनगरं चक्रे वशे सद्यशाः।।११।।

रायबहादुर इति .......... प्तवान् रत्नचन्द्रनरपालः
तत्रातपत्रचामरदुन्दुभिसौवर्णदण्डभा..........।
मक्सूदावादाधिपदिल्लीपत्योर्विरुद्धतायाऽऽसीत्
धीमानसौनिज.............. पोह्यताँतौ सखी चक्रे।।१३।।

तदनुजा दनुजाऽरिपदाऽऽश्रिताः प्र.......... दाः
स्वपदानकैः स्वविषयाऽधिपलब्धमहादराः सुचिर-
मूषुरिहारि.......................................................।।१४।।

श्रीरत्नचन्द्रजलधेरुदियाय ततश्च रायचन्द्रःशशी।
यः काशिका....... सन् क्रमेण कैलासमासीदत्।।१५।।

श्रीरत्नचन्द्रानुज ईड्यशीलः
सुधा ..... चन्द्र इति प्रसिद्धः।
काश्यां विवाहं विदधद्वितीयं
तत्रैव तस्थावजहत् कुटुम्बम्।।१६।।

काशिराजमहितादृतोऽभवद्धर्षचन्द्र इति नीतिवारिधिः।
यः स्व..... शनृपमित्रतां वहन पालयन् जनमवाप सद्‌यशः।।१७।।

तस्याऽऽस्तां द्वे वध्यौ..... मिरमे माधवस्येवश्यामा नाम्न्यौ।
सुचरितपूतगुणोल्लासभामिन्यौ ।।१८।।

कवीन्द्रोऽजनि हर्षचन्द्राद् गोपालचन्द्रः प्रतिथापदानः
भाषाभृतान् संस्कृतसंस्कृतीश्च
ग्रन्थान् यदीयान् विबुधा विदन्ति।।१९।।

गिरिधरणौ विख्यातो गिरिधरभक्त्यैव नैजकाव्येषु।
गिरिधरदास इति स्वं नाम लिलेखैष हर्षेण।।२०।।

तत्पत्नी पतिदेवता गुणखनिर्नाम्नाऽभवत्पार्वती
तत्कुक्ष्यर्णवनिर्गतौ विलसतः सम्प्रत्यनीदृग्गुणौ।
आद्यः स्वाभिभभया गुणैश्च बहुभिः प्रापद्धरिश्चन्द्रता-
मन्यो गोकुलचन्द्र इत्यजनि यश्चन्द्रं..... चाऽवञ्चयत्।।२१।।

हरिश्चन्द्रस्याभूद्विबुधरघुनाथश्चिरसुहृद्-
हरिश्चन्द्रस्येव प्रकटितसुध; पूर्तिसुखकृत्।
महीयस्योन्मीलत्कुवलयकराकारविभया
महीयस्या जज्ञे शरदिव सुकीर्त्या शशिसखी।।२२।।

अस्ति प्रस्तुत शस्तवस्तुभरितो देशस्त्रिगर्ताभिधः
स्वच्छाम्भःपरिपूर्णगर्वबहुलो नाम्ना त्रिगर्तः परम्।
तस्मिन्नुल्लसिस्य पूः सखिजनैः पूर्णापराडाभिधा
यच्छ्रीविस्मययानमानसतयोड्डीनेव दिव्या पुरी।।१।।

आसीत्तत्र समस्तवेदपदवीगूढार्थचिन्तामणि-
र्लद्धामिश्र पदाञ्चितः किलसुधीः सूक्त्यौघवारान्निधिः।
राजाश्री ध्रुवदेव उज्ज्वलयशा जातोरघूणां कुले
दृष्ट्या...... रिधिं निजपुरीं निन्ये सत्कृत्यथम्।।२।।

श्रीजन्बूनगराधिपः स उचितैः...... सन्तोयन्
स्वग्रामे समवासयच्चिरतरं प्रीतिप्रकर्षेण तम्।

प्राज्ञासूर ..... ऽनुपमः पुत्रस्तृतीयोऽस्यतं
दानाध्यक्षपदे निवेश्य विदधावाचा..... ानः।।३।।

गायत्रीमुपदिश्य चैष विधिना राजाऽन्वयं पालयन्
दीक्षारा ..... ानेचिरचन्नास्तेस्य लब्धादरः।
तत्सूनुर्जयदेव इत्युद्भतत्तत्राऽ.......... स्तुतो
विद्वान् श्रीपुरुषोत्तमश्च सुमनः पूजाधिकारी ततः।।४।।

चत्वारस्त *नया* सदाश्रितनयास्तस्याभवन्नब्धिवत्
गम्भीरा गुणशालिनश्चरणदा साऽ..... श्रुतेश्चादिमः।
विद्वानप्यथ रामकृष्णविबुदोजल्हाज्यभिख्यो परः
तुर्यः श्रीयुतनन्दलाल विबुधो वर्वर्ति सर्वोपरि।।५।।

धनुर्वेदं वेत्ता विकटभटभेत्ता च समितौ
गुणाधारः सारो भुविरणदासः समजनि।
सनन्दाख्योलालो जनभुवनपालोपमयशा
विशालश्रीर्जिह्वाङ्गणनटनचञ्चन् मधुर वाक्।।६।।

असमरसीमादृश्व विश्वातिशायि
स्वभुजयुगविभर्दैर्निर्दलद्वैरिवर्गः ।
नृपतिविषमवाप्य ध्यान सिंहाधिकारं
तनुमजहदनीके सोऽपि जल्हाज्यभिख्यः।।७।।

रणजिदभिधभूपात्सार्थकस्वाभिधाना-
दधिगतनृपपीठः श्रीगुलामादिसिंहः।
द्विकसमधिकविंशत्यर्ध्यधीशाधिराजोऽ-
दितगुणनिधये श्रीरामकृष्णायमानम्।।८।।

अस्मै जातुगुलामसिंह तनयः सौन्दर्यशौर्यालयो
नाम्ना श्रीरणवीरसिंह नृपतिर्ज्ञात्वै न मुद्यद् गुणम्।
मुद्रां वाधिकृति प्रसिद्धि जननीं प्रादान्मुदा सोऽनया
संसाध्योचितकार्यमुज्जवलयशा वाराणसीमाप्तवान्।।९।।

काशीभूषितमाराध्य काशीभूषितगोश्वरम्।
काशीवासफलं प्राप काशिदुर्लभमाशु सः।।१०।।

पाटीवैद्यकसाहितीसुहितवाक् वेदान्तदान्ताशयो
ध्वन्यध्वन्यसमोत्तमो रचयिता वाचः सुधासोदरीः।
तत्पुत्रो रघुनाथ शर्म विबुधस्तातोपमः सद्गुणैः
काश्यां यो वसतिस्म सम्प्रति हरिश्चन्द्रस्य मित्रीभवन्।।११।।

वैश्यवंश्यो हरिश्चन्द्रोपमैर्गुणैः।
यन्मित्रं राजतेऽत्रैव राजनेत्रैव तेजसा।।१२।।

अनुमतिमथासाद्य प्रीत्यैतयोर्गुणशालिनोः
विबुधपरमानन्दोनन्दन्मुकुन्दगुणानुगाम् ।
मधुररसरस्यां दोहाच्छन्दोमयीं रसपूरितामनुपमगुणां
पुण्यां चक्रे कृतिं सुमनः प्रियाम्।।१३।।

पौत्रश्चैष मुकुन्दभट्टविदुषः शान्तश्चिरं संस्कृते
पुत्रः श्रीव्रजचन्द्रशर्मसुधियः प्रीत्या महत्याऽतनोत्।
दोहासप्तशतीं समर्चितगुणो बुन्देलदेश्याधिपैः
शय्यां प्राप्य बिहार्यभिख्यकृतिनोर्भाभृतायाः कृतेः।।१४।।

गन्तुं पारमपार भावजलधेरानन्दमाप्तुं परं
गान्तुं गोपवधू विधूनितधृतेः कीर्तिं मुकुन्दस्य च।
धर्माध्वन्यपरिश्रमेण चरणं न्यस्तुं बुधाश्चेन्मनो
रम्यां सप्तशतीमतीव मृदुलां सञ्चिन्तयध्वं मुदा।।१५।।

उपर्युक्तै पद्यै श्रीपरमानन्दपण्डितस्य हरिश्चन्द्रेण सह सान्निध्यं पुष्टी भवति। हरिश्चन्द्रस्य तन्मित्रस्य चानुमत्या सप्तशतीं रचितवान्। अयं श्रीमुकुन्द भट्टस्य पौत्रः श्रीव्रजचन्द्रशर्मणश्च पुत्रोऽयमासीत्। बुन्देलक्षेत्राधिपेनायं प्रशंसितः। पूर्वोक्तिषु पद्येषु शब्दास्त्रुटिता विद्यन्ते तथापि मया यथालब्दांशस्य येन केन प्रकारेण परमानन्द पद्यानां यथावत् सङ्ग्रहस्य प्रयासः कृतः। एतेनान्यत्र प्राप्तेतिहासग्रन्थसाहाय्येन परमानन्दपण्डितपद्यानां सङ्गतिं कर्तुं शक्यते।

अयोध्याप्रसाद मिश्रस्य हिन्दीटीकासम्पादकेन–अनवरटीकासम्पादकेन च परमनन्दपण्डितस्य संस्कृतपद्यानुवादटीकाविषये सङ्केतः कृतः। किन्तु विशिष्टः परिचयो नादापि। पन्डितपरमानन्दरचितपद्यैरन्त साक्ष्यरूपेण प्रामाणिकः परिचयः प्राप्त इति हर्ष विषयः। अस्यां कृतौ स्वयं टीकाकृतद्वैशिष्ट्यं प्रत्यपादि। एतेन पद्यानुवादस्यटीकाकाश्च स्वरूपं स्वयमेव स्फुटी भवति। यदि कविः स्वयं स्वरचनावैशिष्ट्यं प्रतिपादयति तदा तदाशयप्रतिपादनमनुकरणरूपं पिष्टपेषण रूपं वा भवति। अतोऽत्र पिष्टपोषणमयत्र नाकारि।

सेवानिवृत्यनन्तरं प्रयागपरिसरीये राष्ट्रिसंस्कृत संस्थाने मया २७.०४.२००९ ई० दिनाङ्कात् २६.०४.२०११ दिनाङ्कं यावत्-शास्त्रचूडामणिरूपेण कार्यमकारि। तदाऽत्र शास्त्रविमर्श व्याख्यानादिदभिः सह शृङ्गारसप्तशतिकायाः सम्पादनमपि मयाऽकारि। संस्थानस्य प्रकाशनसमित्यऽस्य प्रकाशनस्य स्वीकृतिरदायि। अतः प्रयागक्षेत्रस्थिते अक्षयवटप्रकाशनेन ग्रन्थस्यास्य प्रकाशनमभवत्। ग्रन्थस्यास्य एतत्परिसरद्वारा प्रकाशनाय मुद्रणादिव्यवस्थाद्वारा अस्माननुगृहीतवतां सदाचारसम्पन्नानां वेदन्यायमीमांसावेदान्तशास्त्रमर्मज्ञानां विपश्चिन्मणिः शास्त्ररत्नाकरः सर्वशास्त्रविशारदेत्यादिबिरुद-भूषितानाम् राष्ट्रियसंस्कृतसंस्थानस्य कार्यवाहकत्वेन कुलपतिचराणां संप्रति एतत्परिसरे प्राचार्य पदमलंकुर्वतां डॉ० एन्० आर्० कण्णन् महोदयानां सविधे आदौ भूयोभूयः धन्यवादज्ञापनपूर्वकं प्रणामाञ्जलिं समर्पयामि। पूर्वप्राचार्य डॉ० सुरेन्द्र झा, डॉ० प्रकाश पाण्डेय, डॉ० सर्वनारायण झा प्रभृतीनां सद्भावनया सहयोगेन च सम्पादनमिदं सम्पन्नम्। परिसरे कार्यरतानां प्राध्यापकानां प्रो० ललितकुमार त्रिपाठि, प्रो० वनमाली विश्वास, प्रो० विश्वम्भरनाथ गिरि, प्रो० शैलकुमारी मिश्र, डॉ० शैलजा पाण्डेय, डॉ० सुरेश पाण्डेय, डॉ० रामकृष्ण परमहंस, डॉ० अपराजिता मिश्र प्रभृतीनां सद्भावः सहयोगश्चाविस्मरणीयौ वर्तेते। पाण्डुलिपिविभागीय डॉ० रामकिशोर झा प्रभृतीनां सहयोगोऽपि निरन्तरं स्मर्यते। अत्रत्यैः प्राध्यापकैश्छोधच्छात्रैः सह शास्त्रचर्चायां सहयोगोऽपि शास्त्रपरिमार्जने सहायक इत्यनुभवामि।

स्थायी निवासः
समहन, मेजारोड
इलाहाबाद-२१२३०३
मो०: ०९४२५३८३९६२
०८८०८९९८७४३

सादरं विद्वान्निष्ठः
रहसबिहारी द्विवेदी
पूर्वाचार्योजबलपुरस्थरानीदुर्गावती विश्वविद्यालयस्य
पूर्व निदेशकश्च शोधसंस्थानस्य
वाराणसीस्थ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

□□

# ।। श्रृङ्गारसप्तशतिका ।।

(संस्कृतदोहाछन्दसि श्रीयुतपरमानन्दपण्डितेन कृतः टीकासहितोऽनुवादः)

## प्रथमः परिच्छेदः

### (नायकनायिकावर्णनम्)

अपनय भवबाधाभयं त्वं राधे कुशलासि।
हरिरपि धरति हरिद्युतिं यदि माधवमुपयासि।।

मेरी भव बाधा हरो राधानागरि सोय।
जा तन की झाँई परै स्याम हरित दुति होय।।

।। श्रीगणेशाय नमः ।।

नत्वा गजाननं देवं विघ्नवारणवारणम्।
श्रृङ्गारशप्तशतिकां सव्याख्यां वितनोम्यहम्।।
चतुर्भुजशोभितभालविराजितचन्द्रगणाधिपते (सुमते?)
विघ्नविदारणवारणतुण्डकटस्तलमण्डितभृङ्गतते !
शैलसुतासुतशम्भुसुरेशविरञ्चिमुखार्चितशुद्धमते !
बुद्धिबलं विमलं कलयन् कुशलं कुरुनाथ! मयि प्रणते।।

तत्रतावद् ग्रन्थारम्भे विघ्नविधाताय स्वेष्टदेवप्रार्थनरूपं मङ्गलमाचरति। अपनयेति। हे राधे! राधितुं संसाधयितुं योग्या तत्सम्बुद्धौ। भवत्यस्मिन्निति भवः संसारः तस्मिन् या बाधा तापत्रयरूपा तस्या भयं भीतिम्–अपनय दूरीकुरु तत्र हेतुस्त्वं कुशलासि। किञ्च दुःखमिति हरिरिति व्युत्पत्या हरिरेवैतद् बाधाभीतिहरणसमर्थः किमिति प्रार्थनयेति चैतदाह–यदि माधवं कृष्णं त्वम्–उपयासि समीपमागच्छसि तदा हरिः कृष्णोऽपि हरित्सु दिक्षु द्युतिं प्रकाशं धरति धत्ते, एतेन त्वद्विरहे मलिनद्युतिस्त्वसङ्गे प्रकाशितद्युतिर्भवतीति भावः। यद्वा हरितः हरितवर्णस्य द्युतिं प्रभां धरति त्वत्तनुकान्ति–प्रतिबिम्बपीतवर्णप्रभाभिभूतत्वादितिभावः।

लोके हि पीतकृष्णवर्णभ्यां हरिद्वर्णो भवति, अत्र राधायाः पीतवर्णगुणेन कृष्णस्य हरिद्वर्णगुणलाभ–रूपोल्लासालङ्कारः। 'यदान्यगुणरूपाभ्यामुल्लासो न्यस्यतोयदीतिलक्षणात्। यद्वा हरेश्चन्द्रस्येव द्युतिं शोभां धरति। यद्वा यदि माधवं प्रति त्वमुपयासि तदाहरिरपि चन्द्रोऽपि हरित्सु दिक्षु प्रकाशं धरति। एतेन तदोडुराजः ककुभः करैर्मुदं प्राच्याविलुम्पन्नित्यादि श्रीमद्भागवता–शयोऽप्यनुगतः। यदा योगमायामुपाश्रितस्तदा–उडुराज उद्गादिति दिक्।।१।। किञ्च श्रृङ्गारप्रधानग्रन्थो श्रृङ्गारस्याभ्यर्हितत्त्वेन तत्स्थायिभावत्वप्राप्तरति–पुष्टताहेतुकं राधायाः प्रणयमानं वर्णयन्नाह–अपनयेति।

हे राधे! इति सख्योक्तिः, भवस्य बाधा भवबाधा तस्याः भयमपनय हर, संसारे हि स्वकृतशुभाशुभकर्मभोगार्थं जन्ममरणरूपगमागमबाधा वर्त्तते, तथा ममापि त्वत्सकाश-नायकसकाशगमनागमनबाधा दुःखं भवति तद्भयं हर किन्तु मानं मुञ्च, यावन्मानमपगमो न भविष्यति तावन्ममाप्यदो दुःखं नापयास्यतीति भावः। न च हरिरेवैतद्बाधां व्यपनयतु किमिति मां प्रार्थयसि तत्राह कुशलासि। न चैतादृगास्तां कौशल्यं तत्रैवास्तु–इति चेत्तर्हि दयां कुरु–इत्यभिप्रेत्याह। यदि त्वं माधवं मधुवंशभवं कृष्णं प्रति उपयासि तदा हरिरपि हरिद्युतिं चन्द्रद्युतिं धरति कोटिचन्द्र-चमत्कृतिमत्त्वद्दर्शन–सौभाग्यवत्तयेति भावः। अतस्तद्विरहवेदनापनोदायैव तत्र गन्तव्यं ममोपरि दयां कुरु इति तात्पर्यः। प्रणयमानलक्षणन्तु प्रतिबिम्बाख्यभरतसूत्रे।

मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः।
द्वयोःप्रणयमानः स्यात् प्रमोदे सुमहत्यपि।।

प्रेम्णः कुटिगामित्वात्कोपोऽयं कारणं विनेति। अत्र प्रथमतो विप्रलम्भशृङ्गारवर्णनेन रतिपुष्टता दर्शिता। तदुक्तम्–न विना विप्रलम्भेन सयोगः पुष्टिमश्नुते–इति। सख्योऽन्तरङ्गवहिरङ्गभेदेन द्विविधाः। अतोऽत्र तु–अन्तरङ्गा सखी प्रणयमानापनोदनकुशलत्वादितिदिक्। यद्वा गुरुमानवतीं राधिकां प्रार्थयन्त्याः सख्या उक्तिः। हे राधे! त्वं कुशलासि कुशलास्तु स्वरूपदर्शनेनैव हृद्गतं जानन्ति यदि यस्मिन् काले त्वं माधवं कृष्णं प्रति–उपयासि तदा हरिरपि अपनयभवबाधां धरति, अपगतानयो यस्मात् सोऽपनयो दुर्नयः तद्भवा या बाधा पश्चात्तापः तद्भयं धत्ते स्वकृपापराधजन्य–लज्जया भयं दधातीति भावः, तत्स्वरूपं दृष्ट्वा मादिचिह्नदर्शनात्प्रियामानं करिष्यति माने च कृते विप्रलम्भजनित सन्तापैरभिभूतो भविष्यामीति त्वद्वियोगभयं धत्त इति निष्कर्षार्थः। कीदृशं माधवं हरिद्युतिं चन्द्रद्युतिं कज्जललक्ष्मादिभिः सकलङ्कमिव लक्षितमित्यर्थः। तद्वा हरिताहरिद्वर्णा द्युतिर्यस्य तं लज्जाभय प्राबल्याद्वैवर्ण्यप्राप्ततेजसमित्यर्थः, अतस्तदपराधं क्षमस्वेति भावः।।१।। यद्वारासक्रीडाविनोदार्थं हे राधे! सकलकार्यसंधानकर्त्रि–इति कृष्णस्याप्यनुनयोक्तिः, भवाद्रुद्रादबाधो यस्य सभवबाधः कामः तस्य–आसमन्ताद् भयं भीतिम्–अपनय हर, यद्वाभवेऽस्मिन् संसारे या बाधा कामजन्या तद्भयं हर मन्मथमथनकार्ये तवैवोपकार्यत्वादिति भावः, नायिकाया आलम्बनविभावत्वात् तत्र हेतुस्त्वं कुशलासि रासक्रीडाकौशलेन कायजन्मबाधाभयं हरेति तात्पर्यः। किञ्चोद्दीपनं विनाऽऽलम्बनस्य न पूर्णरसोद्बोधकत्वमितिचेत्तत्राह यदि त्वं माधवं मा लक्ष्मीर्धवति गच्छतिस्थिरीभवति वा यस्मिन्नति माधवस्तच्छ्रीमद्वृन्दावनम्–उपयासि गमिष्यसि तदा हरिश्चन्द्रोऽपि तवागमनगौरवादहरितसुद्युतिं प्रकाशं धरति धरिष्यति हरिः सोमो हरिर्यम इत्यनेकार्थः। चन्द्रादयश्चोद्दीपन–विभावास्तदैवाविर्भवन्तीर्त्यः। यद्वा कीदृशं वृन्दावनं हरिद्युतिं हरितापत्रपल्लवसंयुक्त–लतातृणादिभिरितिभावः द्युतिर्यस्य तत्। श्रयत इन्दिरा शश्वदत्रहीति श्रीमद्भागवतोक्तेः श्रीमत्त्वं वृन्दावनस्य स्फुटमित्यलं पल्लवितेन।

मस्तकमण्डितमुकुटवर!  हृदयलसितवनमाल!।
ममहृदये वस कटिरसन! मुरलीधर! गोपाल!।।२।।

सीसमुकुटकटिकाछिनी करमुरली उरमाल।
यह वानक मो मन बसौ सदा बिहारी लाल।।२।।

अथ ध्येयस्वरूपं कृष्णं वर्णयन् प्रार्थयति, मस्तकेति। मस्तके मण्डितं शोभितं मुकुटवरं यस्य तत्सम्बुद्धौ यद्वा मस्तकेन मण्डितं मुकुटवरं येन स इति। एतेन श्रीमन्नायको भवतीति श्रीमत्वमुक्तम्। हृदये लसिता शोभिता वनोद्भवा माला पुष्पपल्लवादिरचिता यस्य तत्संबुद्धौ। हृदयेन लसिता वनमाला यस्येति वा-एतेन कलाशकुलत्वं नायकगुण उक्तः। मुरलीं धरतीति मुरलीधरः वादनार्थमिति शेषः तत्संबुद्धौ। एतेन सङ्गीतज्ञतया वनितामोहनादिचातुर्यं कथितम्। कट्यां रसना क्षुद्रघण्टिकया यस्येति तत्संबुद्धौ। एतेन नर्तनकलाऽभिज्ञता। गाः पालतीति गोपालः तत्संबुद्धौ। एतेन किशोरवयः सूचितम्। मम हृदये मानसे-एवं भूतस्त्वं वस ध्यानेनेत्यर्थः। एतेन शृङ्गारोचितनायकस्य धीरललितस्य श्रीकृष्णस्य मनसिवसन प्रार्थनया शृङ्गारकरणसामर्थ्यमीहितम्। उक्तं यद् भरतेन-

त्यागी कृती कुलीनः सुश्रीकोरूपयौवनोत्साही।
दक्षोऽनुकूललोकस्तेजोवैदग्ध्यशीलवान्नेता।।

इति। 'निश्चिन्तो मृदुरानिशङ्ककलापरोधीरललितः स्यादिति च। अत्र सर्वेषां सम्बोधनपदानां साभिप्रायत्वात्परिकराङ्कुरालङ्कारः। साभिप्रायविशेष्ये तु भवेत्परिकराङ्कुरः। यद्वा गोपाल इति सम्बोधनस्य सर्वेषां विशेषत्वेनाभिप्रायगर्भिततत्त्वेनच परिकरालङ्कारः। 'अलङ्कारः परिकरः साभिप्रायविशेषणे'-इति लक्षणात्। अनयोस्तिलतण्डुलवत् पृथगुपपत्या संसृष्टिरितीत्यलं पल्लवितेन। किञ्च 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्यवर्णनादि'ति लक्षणात्। गोपालजातेवर्णमालादिधारण-वर्णनत्वात्स्वभावोक्तिरलङ्कारोऽपीति।

एवं कृतशिखिचन्द्रिका मुकुटो हरिरवभाति।
चन्द्रधरं लघु कर्त्तुमिवचन्द्रशतं विदधाति।।३।।

मोर मुकुट की चन्द्रिकनि यो राजत नदनन्द।
जनु ससिसेषर की अकस किय सेखर सतचन्द।।३।।

पुनरपि मुकुटशोभां वर्णयन्नाह-एवमिति शिखिनां मयूराणां चन्द्रिका इव चन्द्रिकाः शिखिचन्द्रिकाः, मयूरपिच्छचन्द्रिकाः कृतं शिखिचन्द्रिकाभिर्मुकुटं येन स कृतशिखिचन्द्रिकामुकुटो हरिः कृष्ण एव अवभाति शोभते, चन्द्रं धरतीतिचन्द्रधरः शिवस्तं लघुकर्तुमिव चन्द्राणां शतं चन्द्रशतं विशेषेण दधाति धत्ते, शतशब्दोऽत्राऽपरिच्छिन्नसङ्ख्यावाचकः। अत्र शिवस्य चन्द्रधारणशोभलघूकरणस्यहेतोः शिखिचन्द्रिकाकृतमुकुटधारणेन हेतुत्वकल्पनमसिद्धास्पदाहेतूत्प्रेक्षालङ्कारः। 'सम्भावनास्यादुत्प्रेक्षा वस्तुहेतु-फलात्मना, उक्तानुक्तास्पदाद्यात्र सिद्धा सिद्धास्पदे परे-इति तल्लक्षणात्। कृतशिखिचन्द्रिकामुकुटो-हरिरेवावभातीति सम्भावना। यद्वा काचित्सखी नायिकाया मानव्यपगमाय

मुकुटशोभावर्णनमिषेण हरिं दर्शयति। कृतशिखिचन्द्रिकामुकुटो हरिरेवमवभाति–इति त्वं पश्येत्यध्याहारः। चन्द्रं धरसित्यादि पूर्ववत्। अत्र सख्या उक्तेर्मुकुटशोभादर्शनव्याजेन स्वेष्टतमनायकनायिका-सङ्घटनरूपकार्यसाधनात् पर्यायोक्तमलङ्कारः। पर्यायोक्तं तदप्याहयद्व्याजेनेष्टसाधनमितिलक्षणात्। उत्तमादूतीसङ्घटनं तु तत्कर्मैव दौत्यव्यापारपारङ्गमादूतीतरसङ्घटनविरहनिवेदनादीनि कर्मणीति रसमञ्जर्याम्। अन्यच्च–'कलाकौशलमुत्साहो शक्तिश्चित्तज्ञता स्मृतिः। माधुर्यनर्मविज्ञानं वाग्मिता चेति तद्गुणाः।' दूतीनां गुणा इत्यर्थः। अत्र मुकुटाद्यलङ्कृतियुक्तनायकदर्शनेन रुचिमुत्पाद्योत्साह-भाविष्करोतीत्यलं पल्लवितेन। पर्यायोक्तमपि द्विविधं स्वेष्टसाधनरूपं परेष्टसाधनरूपञ्च अत्र परेष्टसाधनरूपमित्यर्थः।

मकरसमं हरिकुण्डलं ललने लसति ललाम।
द्वारि निधाय निजं ध्वजं मदनो मनसि जगाम।।४।।

मकराकृति गोपाल के कुण्डल सोहत कान।
धर्यौ मनौ हियघर समर ड्योढी लसत निसान।।४।।

सख्या उक्तेःकुण्डलशोभां वर्णयन्नाह–मकरेति। हरेः कृष्णस्य कुण्डलं कर्णभूषणम्। हेललने! प्रिये! मकरसमं मकराकृतिललामसुन्दरं लसति शोभते। तत्रोत्प्रक्षते मदनः कामः द्वारि निजं ध्वजं मकराकारं निधाय मनसि हृदये जगाम गतवान् मिश्रेतिवाचकाप्रयोगेऽपि गम्योत्प्रेक्षाऽलङ्कारः। शङ्के मन्ये ध्रुवं प्रायोनूनमित्येवमादिभिः–उत्प्रेक्षालङ्कारे व्यज्यते शब्दैरिव शब्दोऽपि तादृश इत्युत्प्रेक्षाव्यञ्जकशब्दाप्रयोगे गम्योत्प्रेक्षा भवतीति कुवलयानन्दकारैर्ध्वनितम्। यद्वा कापि सखी हरेः कर्णाभरणशोभावर्णनव्याजेन तत्सौन्दर्यं स्मारयति। अर्थस्तु पूर्ववत्। एतेन लालित्यरूपो नायकगुणः प्रस्तुतः। ''शोभाविलासमाधुर्यं 'गाम्भीर्यं धैर्यतेजसी। ललितौदार्यमित्यष्टौ सात्त्विकाःपौरुषा गुणाः।' तत्र वाग्वेषयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितमि'ति साहित्यदर्पणात्। मदनोऽपि तस्य हृदयं गतइवासीदित्युत्प्रेक्षा तदाश्रयत्वादेव तत्सौन्दर्यमिति भावान्न यद्वा नायिका सख्या–अपि–उक्तिः सखीं प्रति सम्भवति, कदाचित्कुण्डलशोभां दृष्ट्वा पूर्वानुरागमाविष्कुर्वन् पुनस्तद्दर्शनेच्छया वदति मकरेत्यति पूर्ववत्। श्रवणाद् दर्शनेच्छया वदति मकरेत्याति पूर्ववत्। श्रवणाद् दर्शनाद्वापि मिथः संरूढरागयोः–दशाविशेषप्राप्तौ यः पूर्वरागःस उच्यते। तत्र पूर्वानुरागे दशकामदशा भवन्ति–अभिलाषः स्मृतिश्चिन्ता प्राप्त्युपायादिचिन्तनम्, गुणकथनोद्वेगसंप्रलापोन्माद–ब्याधिजडतादयः। तदत्र कुण्डलशोभावर्णनेन सखीं प्रति गुणकथनरूपा स्मरदशा।

हरिरिन्दीवरसमतनुर्लसति पीतवसनेन।
यथा नीलगिरिरुह्यकरकोमलकरनिचयेन।।५।।

सोहत ओढै पीत पट स्याम सलौने गात।
मनौ नीलमनि सनै पर आतप पर्यौ प्रभात।।५।।

पीताम्बरद्युतिं वर्णन्नाह-हरिरिति। इन्दीवरं नीलोत्पलं तेन समतुल्यातनुर्भूर्तिर्यस्येति स हरिः कृष्णो लसति, पीतं च तद्वसनं तेनोपलक्षितो यथा-नीलगिरिनीलिमणिनिर्मितोगिरिः, ऊष्णाः कराः यस्य स ऊष्णकरः सूर्यस्तस्य कोमलास्तरुणाः प्रातःकालीना ये करा अंशवस्तेषां निचयेन समूहेनोपलिक्षितो लसतीत्यर्थः। इन्दीवरञ्च नीलेऽस्मिन्नित्यमरः, अत्रोपमेयभूतायाः पीताम्बरावृत-नीलोत्पलतुल्य-हरिमूर्तिशोभायाः उपमानभूतायाः प्रातःकालीन रविकिरणसमूहसम्पर्कसमावृतनीलमणि-गिरिशोभायाश्च बिम्बभावेनाभेदोध्यव-सायाद्-उपमालङ्कारः, 'उपमा यत्र सादृश्यलक्ष्मीकल्लसतिद्वयोरिति लक्षणात्, यद्वा नीलोत्पलदलसदृशो हरिर्यथा पीताम्बरेण लसति तथा नान्यो गोप इति स्वानुरागमाविष्कुर्वन्त्या नायिकायाः सखीं प्रत्युक्तिः, यथा नीलाचलोऽप्युदयकालीनसूर्यकरसंस्पृष्टो लसति तथा नान्यो गिरिरिति यथा शब्दस्य देहलीदीप-कन्यायेनान्वये व्यतिरेकोपमाया अङ्गाङ्गिभावसङ्करः। यद्वा पीताम्बरावृतहरिशोभावर्णनव्याजेन हरिं दर्शयन्त्यस्तत्संयोगमिच्छन्त्याः सख्या अपि नायिकां प्रत्युक्तिः सम्भवतीति। यद्वा तया पृष्टं कोऽसौ हरिः? तदा सख्या-उक्तं पीतवसनेन य उपलक्षित इन्दीवरतनुः स एव हरिरिति-उक्ति-प्रत्युक्त्या-उत्तरालङ्कारस्य पूर्णोपममायास्तिलतण्डुलवत्पृथगुपपत्या संसृष्टिरित्यलं पल्लवितेन।

गुञ्जपुञ्जकृतमालिका मधुपतिहृदयेऽतीव।
राजति सैव दावानलज्वालाविर्भवतीव।।६।।

सखि! सोहत गोपाल के उर गुंजन की माल।
बाहिर लसत मनौ वहै दावानल की ज्वाल।।६।।

गुञ्जमालाप्रभावर्णयन्नाह गुञ्जेति। गुञ्जायाः फलं गुञ्जानां पुञ्जं, पुञ्जगुञ्जपुञ्जैःकृता चासौ मालिका माला, गुञ्जपुञ्जकृतमालिकामधुर्नामकश्चिन्नृपः तद्वंशभवमाधवस्तेषां मधूनां मधुवंशीयानां पतिः तस्य हृदयं मधुपतिहृदयं तस्मिन्नतीव-अतिशयेन राजते शोभते। आविर्भवतीव बहिः प्रकटीभूता सैव या पूर्वं पीता दावानलज्वाला दावाग्निशिखा-इवेति धर्मलुप्तोपमालङ्कारः। गुञ्जमालारूपोपमेये दावाग्निशिखारूपोपमाने च विद्यमानाऽऽरुण्यसाधारणधर्मस्यानुपादनात्। किम्बा अनुरागवत्या नायिकाकायाः। नायकस्वरूपसौन्दर्य-गुणवर्णनानुभाव-रूपासखीं प्रत्युक्तिः। अनुभावो विकारस्तु भावसंसूचनात्मक इति। ये रत्यादीननुभावयन्ति तेऽनुभावाः तत्र सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति चेत्यादि-अनुरागेङ्गितवर्णनान् नायिकाया अनुरागो व्यज्यते। अथवा नायकगुणवर्णन व्याजेन रुचिमुत्पादयन्त्यः सख्या अपि नायिकां प्रत्युक्तिः सम्भवतीति। यद्वा गुञ्जमाला या दवाग्निखिोपमानवर्णनादियं गुञ्जमाला मां दवानलज्वालेव सन्तापकारिणीति व्यङ्ग्यकोपप्रकाशाया मध्याधीराया उक्तिः प्रस्तुता। एतेन-इयं गुञ्जमाला सपत्नीदत्ता इत्युपमामूलको ध्वनिरित्यलं विस्तरेण।

पीतवसनदृगधररुचा हरिचापप्रतिभाति।
धनुसन्दुरहरिवंशिका हरिताधरे विभाति।।७।।

अधर धरत हरि के परत औंठडीठि पटज्योति।
हरित बाँस की बाँसुरी इन्द्रधनुषसी होति।।७।।

वंशीवादनद्युतिं वर्णन्नाह–पीतेति। घन इव सुन्दरो घनसुन्दरो हरिः कृष्णः तस्य वश्येव वंशिका वंशनिर्मितवाद्य विशेषः, हरिवाहरिद्वर्णा अधरे हरेरितिशेषः, पीताम्बररुचा पीतवर्णया दृग्रुचा श्यामवर्णया अधररुचाऽरुणवर्णया हरितपीतश्यामारुणरवोपलक्षितहरिचापप्रतिमा इन्द्रचापतुल्या-अत्यधिकं विभातीत्यन्वयः। यद्वा हरिचापप्रतिमा कामचापोपमा कामधनुरपि नानावर्णपुष्पनिर्मितं भवतीत्यु–पमेयोपमानयोर्नानावर्णरूपसाधारणधर्मत्वादुपमालङ्कारः। ननु वंशीवाद्ये–उपमेये वक्रताभावाद् इन्द्रधनुषि वक्रत्वधर्मत्वात् कथमियं वैधर्म्योपमा। तत्रैवमर्थयोजना। शून्यसङ्केतस्थलान्नादयन्नागतः स्वयं तत्र न गतेत्यति विरहव्याकुलचित्ताया अनुशयानाया उक्तिः सखीं प्रति। तत्रनायकं दृष्ट्वा सरलचक्रपादोदय–रूपोत्यातरूपवंशीवाद्यदर्शनादिव मनःसन्तापवती प्राह–एतच्च वैधर्म्योपमयैव ध्वन्यते। विरहिणां हि घनाग शक्रचापाद्युद्दीपनविभावदर्शनाच्च वा सन्तापो भवतीति भावः। उक्तं च-सङ्केतस्थानशून्याच्च प्रियया परिदृश्यते। समागतः प्रियो यस्या वर्ण्यते सा तृतीयका। अनुशयानेति प्रतिबिम्बाख्ये भरतसूत्रे तल्लक्षणात्। हरिरिन्द्रो हरिर्भानुर्हरिः कामोहरिःशशीइत्यनेकार्थः।

का न गोकुले कुल वधूः का धर्मं न जहाति।
का निपीय हरिमुरलिकाऽमृतं न तं प्रतियाति।।८।।

किती गोकुला कुल वधू काहि न केहि सिष दीन।
कौने तजी न कुलगली ह्वै मुरली सुर लीन।।८।।

अथ जगौ कलं वा सदृशं मनोहरमित्यभिप्रेत्य हरेर्मुरलिका स्वरं वर्णयन्नाह–केति–हरेः कृष्णस्य मुरली–एव मुरलिका अमृतम्–अमृतवदानन्दकारित्वाद् अमृतं गानमित्यर्थः। निपीय पीत्वा श्रुतिमिरिति शेषः श्रुतेतियावत् तं हरिं...... प्रति या काचित् स्त्री न याति सा का न कापीत्यर्थः। नायं धर्मः कुलस्त्रीणाभिति चेद् गोकुलेऽस्मिन् व्रजे कुलवधूः कुत्र वर्तते, अपितु सर्वाः कुलवध्वः तर्हि कुलवधूनां कुलधर्मत्यागः कालत्रयेऽपि न श्रुत इति चेत् का सा कुलवधूः या धर्मं पतिपुत्रादिसेवनपोषणरूपं न जहाति अपितु सर्वा अपि जहतीत्यर्थः। तदुक्तम्–

शुश्रूषन्त्यः पतीन् काँश्चिदश्नन्त्योऽपास्य भोजनं
लिप्यन्त्यः प्रभृजन्त्योऽन्याः पाययन्त्यः सुतान् पयः।

इत्यादिना श्रीमद्भागवते श्रीशुकदेवेन।

उक्तञ्च श्रीमदानन्दवृन्दावनचम्पूकाव्ये–

दृष्ट्वाविग्रहसौभगं रतिपतिर्व्रीडावलीढान्तरो
रीढातस्तनुमत्यजत्सहधनुर्भ्रूभङ्गभाजो हरेः,

मर्यादां च कुलव्रतं च विपुलं धैर्यं च हित्वाभवत्
स्थाने तद्यदिमं प्रति व्रजसरोजाक्षीकुलं व्याकुलम्।।

–इति। अन्यच्च–

वर्त्मावर्त्मविदुर्न किन्तुमुरलीसङ्गीतभङ्गीकला-
मङ्गीकृत्य हरेःकुरङ्गनयनाः सर्वाः समं निर्ययुः।
उल्लङ्घ्यापि निसर्गदुर्गपदवीं दुर्वारधारामुचां
धाराघोरणि धूयमानधृतयो नद्यः समुद्रो यथा।।

अथवा मुरली स्वरं श्रुत्वा तं हरिं प्रति का न याति। किञ्च–एतादृशी का कुलवधूः कुत्सिता कुलवती गोकुले न वर्तते, नास्ति सा का धर्मभीषाद्धर्मं तुच्छं पतिपुत्रादिसेवनपोषणरूपं न जहाति, नित्यजातिकुलस्त्रीणां गोकुले हि हरिशरणमेव परमो धर्म इति भावः। 'नन्दगोपसुतं देवि! पतिं मे कुते नमः–' इत्यादिना वरप्रार्थनया लब्धपतित्वसद्भावात्। यद्वा हेहरि! मुरलिहरेर्मुरलीहरिमुरली तत्सम्बुद्धौ कामृतं शब्दामृतं तवेतिशेषः, निपीय श्रुत्वा तं प्रति न याति तस्मिन् मग्ना न भवति एतादृशी का कुलवधूः कुलं शरीरं वधतीति कुलवधूः कुत्सितावधूः काकुलवधूः निन्द्या इन्द्रियरूपाकामिनीगवाम् इन्द्रिययाणां कुले गोकुले नास्ति। का धर्मं कुत्सितं धर्मं सासारिकं गृहकृत्यम्। कुलं गोत्रं शरीरं कुलमुच्यते–इत्यनेकार्थीभिधानात्। एवञ्च मुरलिकामृतश्रवणेन करचरणादिसर्वेन्द्रियाणि निर्व्यापाराणि भवन्तीति भावः। तदाश्रवणेन्द्रियव्यापार एव वरीवर्ति नान्यः। क शब्दोट्विणे-ध्वनावित्यनेकार्थः। एतेन 'वृन्दशो व्रजवृषामृगगावो वेणुवाद्यहृतचेतस आरात्, दन्तदष्टकवलाधृतकर्णा निद्रिता लिखिता चित्रमिवा–सन्नित्यादि–गोपीगीतश्रीमद्भागवताशयोऽनुगतः। यद्वा नायिकायाः सखीं प्रत्युक्तिस्तदा तस्या सानुरागत्वं व्यज्यते। यदा तां प्रति सख्या उक्ति स्तदा मुरलिकास्वरमाधुर्य-प्रकर्षवर्णनेनसङ्केतस्थलस्थं नायकं प्रत्यभिसारयति। यद्वा सङ्केतस्थलं शून्यं दृष्ट्वा नायको मुरलीं बादयन्नागतः स्वयं तु न गता–इत्यादि विरह व्याकुलाया अनुशयनानाया उक्तिः सम्भवतीति। तल्लक्षणं तु प्रतिबिम्बे सङ्केतस्थानशून्याच्च प्रियया परिदृश्यते। समागतः प्रियो यस्याः चिह्नितः सा तृतीया। अनुशयानेत्यर्थः। अत्र मुरलीवादनमेव नायकागमन चिह्नमिति दिक्। अत्र वर्ण्यपदश्लेषः। नार्थसंश्रयःश्लेषोवर्ण्यावर्ण्योभयास्पद इति तल्लक्षणात्।

व्रजपतिगतिनर्तनकला वृजाबला रचयन्ति।
यथाबलानुजमेकमपि प्रत्यबलं कलयन्ति।।९।।

गोपिन सँग निसि सरद की रमत रसिक रसराज।
लहा छेह अति गतिन की सबन लखे सब पास।।९।।

अथ कृष्णस्य दक्षिणनायकत्वमुदाहरिष्यन् रासक्रीडां वर्णयति। व्रजपतीति। व्रजाबलाःव्रजवध्वः

व्रजपतेर्या गतिनर्तनकलाः गतिसंज्ञकनर्तनकलाः तथा तेन प्रकारेण रचयन्ति। यथा व्रजपतिरित्यर्थः। किञ्च–एकमपि बलानुजं कृष्णम्–अबलाम्–अबलां प्रतीति प्रत्यलं कलयन्ति भावयन्ति। सर्वासां समीपे दृष्ट इत्यर्थः। तदुक्तं श्रीमद्भागवते दशम स्कन्धे–'रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः। योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोरिति। उक्तञ्चानन्दकन्द वृन्दावनचम्पूकाव्ये–

पश्यन् काममपि सस्मितं मधुमुचा वाचा विषिञ्चन पराम्–
आसिञ्चन्नपरां पटेस्तनतटे काञ्चिन्नखेल्लोल्लिखन्।
चुम्बन् काममपि नामकाममपि समालिङ्गसुतुङ्गस्तने
रम्योल्लासवशीकृतो दिविषदां चिक्रीडचूडामणिः।
अहो कौशलमाभीरकिशोरीकेलिसम्पदः,
काव्यव्यूहमुरीचक्रेचक्रीयदनुभूतये ।
प्रतिगोपीद्वयमध्यस्थितमाधवरासमण्डलं रेजे।
कनकसरोजावलितं जगत इवेन्दीवरं दाम।
व्रजमहिला पटुपुरितं व्रजपतितनुराजिमण्डलं रेजे।।
वृत्तमिव कनकलताभिः श्यामलमणिकन्दलीचक्रम्।।इति।।

एतेन श्रीकृष्णस्य दक्षिणनायकत्वम्। सकलनायिकासु समानानुरागो दक्षिण इति रसमञ्जर्यां तल्लक्षणात्। अत्र शृङ्गारस्य विस्मयस्थायिभावोद्भुतरसोऽङ्गं तेन रसवदलङ्कारः। तल्लक्षणन्तु प्राचामाधुनिकानाञ्च मतान्यालोच्य सर्वशः। चत्वरो रसवती प्रेयऊर्जस्विसमाहितम्। यत्र रसस्याङ्गः-इतररसो भवति स रसवद्लङ्कारः।।९।।

विलसति युवयोरेकता वयोवर्णहृदयेन।
भवेदिदं युगलं कथं दृश्यं नयनयुगेन।।१०।।

नितप्रति एकत ही रहत भेस वदन मन एक।
लहियतु जुगलकिसोर लषि लोचनयुगल अनेक।।१०।।

अथ श्रीकृष्णस्यानुकूलनायकत्वमुपदिशन् राधाकृष्णयोरेकत्वावस्थितिं दृष्ट्वा तत्सौन्दर्यस्नेहाधिक्यं च वर्णयन्ती काचित्सखी प्राह–विलतीति। युवयोः राधाकृष्णयोः एकनायकी भावे वयोवर्णहृदयेन विलसीत्यर्थः। वयश्च वर्णश्च हृदयञ्चैषां समाहारस्तत्तथा तेन नववयसा कैशोरेण वर्णेन द्विजत्वेन हृदयेन मनसा च यद्वा वयसः वर्णाः वयोर्वर्णाश्च हृदयञ्च अनयोः समाहारः किशोरीकिशोर श्यामाश्यामादिवयोवर्णाः–तेषां समसङ्ख्यात्वधर्मवत्तया तुल्यत्वं मनसोरपि-एकत्वं तु मनसी–अपि युवयोरेकरूपे विलसत इत्यर्थः। अत इदमित्यङ्गुल्या निर्देशः। युगलं द्वन्द्व नेत्रयुगेन कथं दृश्यं भवेत्। किन्तु अनेक दृग्युगलदृश्यं भवेदिति युग्मदर्शनसिद्धये–अनेक दृग्युगल सम्भावनमिति सम्भवनालङ्कारः। सम्भावनं यदित्थं स्यादित्यहोप्यस्य सिद्धये–इति लक्षणात्।

यद्वाऽन्यसम्भोगचिह्नितं नायकं दृष्ट्वा मध्या धीराया उक्तिः। युवयोर्वयोवर्णहृदयेन एकता विलसति। अत इदं युगलनेत्रयुगेन कथं दृश्यम्। प्रत्यङ्गेषु तदतिचिह्नदर्शनादिति भावः। एकैक चिह्नदर्शनार्थ-मेकैकनेत्रद्वयमपेक्षितमित्यर्थः। यद्वा युवयोः कुब्जाकृष्णयोः-एकतासाम्यं युवयो समानवयस्त्वं सापिकृष्णवर्णा भवानपि कृष्णः साऽपि कुटिलहृदया भवानपि तथैव सा च त्रिस्थाने भग्ना भवानपि त्रिभङ्गललित इत्यर्थः। अतो नेत्रयुगेन न दृश्यमिति निषेधव्यक्तबहुनेत्र दृश्यमिति ध्वनिमूलकः परिसङ्ख्यालङ्कारोऽपि।

'परिसङ्ख्या निषिध्यैकमेकस्मिन् वस्तुधारणमिति तल्लक्षणात्।।१०।।

**तरुणि! कुतस्ते नयनयुगमरुणतरं प्रतिभाति।**
**मधुप! तवारुणदृक्प्रभा प्रतिबिम्बं प्रतिभाति।।११।।**

**बाल कहाँ लाली भई लोचन कोपन माह।**
**लाल तिहारे दृगन की परी दृगन मैं छाह।।११।।**

अथ शठनायकमुदाहरति, तरुणि! इति। प्रौढां खण्डितां नायिकां प्रति नायकस्योक्तिः। तेन नयनयुगं कुतः कस्मादरुणतरमतिरक्तम्-इति प्रश्नकरणात्। ममैववानागमनेन कृतरात्रिजागरणान्नेत्ररक्तिमेति जानन्नपि कामिनीविषयकपटपटुःशठ इति शठत्वलक्षणानुगत्या स कपटवचनम्। मधुपेत्यादिनायिकाया उक्तिः। मधुपेत्यनेन पुष्पवल्ली तुल्यान्यबहुनायिकाऽनुरागित्वं व्यज्यते। एतेन बहुनायिकानुरञ्जनाय कृतसकलरात्रि-जागरस्य तव नेत्ररक्तिमा तर्हीदानीं तत्प्रतिबिम्बपातेन ममापि नेत्ररक्तिमेति तदपराधसूचनाय साकूतमुत्तरम्! तेनात्र गूढोत्तरमलङ्कारः। 'किञ्चिदाकूतपिहितस्या गूढोपरमुत्तरमिति लक्षणात्। कपटपाटवे न दृग्युगलरक्तिमा हेतुं पृच्छमानं तवैवापराधकृतेऽयं रक्तिमेति गूढाभिप्रायगर्भितसाकूतोत्तरत्वाल्लक्षणानुगतिः। एतेन नायिकायाः प्रौढात्वं ध्वन्यते। परोपभोगचिह्नितः प्रातरागच्छतिपतिर्यस्याः सा खण्डितोतिलक्षणात् खण्डितात्वं स्पष्टमेव। दृगारुण्यरूपपरोपभोगचिह्नदर्शनादिति दिक्।।११।।

**गुप्तीकृतमपि यत्नतो गुप्तं प्रभवतिनैव।**
**तद्विभावरीसुखमहो कथयति नैन विभैव।।१२।।**

**मोहि करत कत बावरी करै दुराय दुरै न।**
**कहै देत रँग राति को रँग निचुरत से नैन।।१२।।**

पुनरपि शठनायकमुदाहरति। गुप्तीकृतमिति। प्रौढनायिकाया नायकं प्रत्युक्तिः। अहो-इति नामाग्रहणात्। प्रियरमणेत्यादि सम्बद्ध्यनुच्चारणम् कोपो व्यज्यते। तत्तस्या विभावरीसुखं यत्नतोवस्त्रादि प्रोच्छनादितो गुप्तीकृतमपि गुप्तं नैव प्रभवति। नयनं विभैव कथयति त्वन्निषेधेन किं जातमित्यर्थः। तदनुरागवशात्कृत सकलरात्रिजागरोद्भूतदृगारुण्यं तु न केनापि प्रकारेण गोपयितुं शक्यमितिभावः।

किञ्च प्रकटतरापधत्वेऽपि तत्तद्रति चिह्नगोपनात् कपटपाटवत्वं नायकस्य शठत्व लक्षणं नेत्रारुण्यरूपपराङ्गनासम्भोगचिह्नदर्शनान्नायिका च खण्डिता तल्लक्ष्मगोपनप्रकटनात्तस्याः प्रौढात्वं व्यज्यते। अत्र विभावरीसुखस्य बहुयत्नतो गुप्तीकरणप्रतिबन्धके सत्यपि लोचनविभाभिर्विभावन-रूपकार्योत्पत्तेस्तृतीया विभावना। 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके'—इति लक्षणात्।।

नाथ! कुपथगोपाय तव नालं शपथशतेन।
भवति च विषमिव दुःखदं हसिरंरस रहितेन।।१३।।

दुरै न निधर घटौ दई यह रावरी कुचाल।
विस सी लागत है बुरी हसी षिसी की लाल।।१३।।

धृष्ट नायकमुपदिशन्नाह–नाथेति। नायकाया उक्तिः रमण–कान्त–प्रियेत्यादि पद मनुच्चार्य नाथेति संबुध्या वैरस्यं व्यज्यते। शपथशतेन शतशब्दोऽत्रापरिच्छिन्नसङ्ख्यावाचकः, बहुभिः शपथैरिति यावत्। बहुशपथैरेव तव धूर्तता व्यज्यते तव कुपथं गोपितु नालं न समर्थाऽस्मि। अतः शपथशतेनालं निवार्यतामिति वारणार्थ्रलं योगे तृतीया। अलमिति देहली दीपकन्यायेन कुपथगोपायेति चतुर्थ्याऽपि सम्बध्यते। तत्र तु समर्थाच्चभाववचनादिति चतुर्थी। तत्पुनः रस्यतेऽनेनेतिरसः प्रीतिः। यद्वा रसो हर्षः, यद्वा रसः शृङ्गारः, तद्रहितेन भूषणरहितेनेत्यर्थः। पराङ्गनासंगोपमद्येनभूषणहानिरिति भावः। स्वीयकुपथगोपनायैव यद् धाष्ट्र्येन हसितं तद्विषमिव विषतुल्यं भवति। विषमल्पमपि प्राणहरणसमर्थं तथेदमपि हसितं प्राणान्तदुःखदमिति भावः। अत्र अधीरारूक्षवाक् कोपादिति लक्षणेन मध्याया अधीरात्वं व्यज्यते। भूयो निःशङ्क कृतदीपोऽपि भूयो भूयो निवारितोऽपि प्रश्रयपरायणो धृष्ट इति लक्षणाद् नायकस्य धृष्टत्वम्। अनुकूलदक्षिणधृष्टशठभेदात्पतिश्चतुर्द्धेति रसमञ्जरीकारः। एतेन पत्युरेवैते भेदाः। 'विधिवत्पाणिग्रहीता पतिरिति लक्षणान्नायिकाया अपि स्वीयात्वम्। वैरस्यहसितविषयो रुपमेयोपमानयोर्दुखप्रदत्वसामान्यधर्मोपमान–वाचको नसहोपादात् पूर्णोपमालङ्कारः। उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरितिलक्षणात्।।१३।।

प्रतिदिननियमसुतावधूरिति गुरुभिर्गदिताऽपि।
न वदति सा पतिदोषमिति पतिव्रता मनसाऽपि।।१४।।

गुरुजन दूजे व्याह को निसि दिन रहत रिसाइ।
पति की पतराखति वधू आपुहिं बाँझ कहाइ।।१४।।

अथ प्रथमतः स्वीयामुदाहरति। प्रतीति। गुरुभिः श्वश्रृश्वश्वशुरादिभिः–इयं वधूः–असुता बन्ध्या इत्येवं प्रतिदिनं गदितापि सती सा पतिव्रता मनसाऽपि पत्युर्दोषं नानुरागादिक्लैव्यादिवा न वदति। किमुतवचोभिरिति भावः। 'विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीये'ति लक्षणात्। 'स्वभावोक्तिः

स्वभावस्य जात्यादिस्थस्य वर्णनादिति सख्या सखीं प्रति तत्स्वभावविनयार्जवर्णना स्वभावोक्तिरलङ्कारः।।१४।।

**देवरोतुदुर्मतिमिता दुष्यति नित्यमतीव।**
**सा शुष्यति मृष्यति शुचं पञ्चरगता शुकीव।।१५।।**

**कहति न देवर की कुमति कुलतिय कलह डराइ।**
**पञ्जरगत मञ्जार ढिग शुक लौ सूखत जाइ।।१५।।**

पुनरपि स्वीयामाह-देवरेति। देवरः पत्युर्लघुभ्राता स एव ओतुवेत्युपमितसमासः। ओतुर्बिडालोमार्जार इत्यमरः। मार्जारवत्तस्यापि दुर्विचखत्वात्साधर्म्यं तस्य कदेयं मां विलिप्यतीति या दुर्मतिः तामिताप्राप्ताऽपि सा नित्यमतीव दुष्यति वैकृत्यं लभते शुचं शोकं मृष्यति सहते पातिव्रतरक्षणार्थमितिभावः। अत एव शोकाग्निनाशुष्यति दुर्बला भवतीति। का-इव पञ्जरगता शुकीव। कीदृशी शुकी देवरइव-एकाजिरवासवान्-ओतुर्मार्जारः तस्य या दुर्मति तद्धर्षणेच्छा तां प्राप्तेति यथा दुष्यति शुष्यति शुचं मृष्यति साऽपि तथेति भावः। अत्रोपमेयरूपायाः स्वीयाया स्वप्राणवत्पातिव्रत्य-धर्मविनयार्जवादिशील परवत्तया-उपमानरूपाया शुक्याश्च स्वप्राणरक्षणपरायाः पञ्जरबन्धन प्रतिबन्धक परवत्तया च उभयत्र देवरोतुदुर्मतिभीतिशालित्वसामान्य धर्मत्वात्-शोकमर्षणशरीरकार्श्यादि-तत्सदृशधर्मवत्वाच्च इवेत्युपमावाचकेन सहोपादानात् पूर्णोपमालङ्कारः। 'उपमा यत्र सादृश्य-लक्ष्मीरुल्लसतिद्वयोरि'ति लक्षणानुमतिः।

**सहजालसवपुषाऽनया सालसलोचनाऽपि।**
**दध्रेप्राणसमाधिधा पत्युः प्रेम विनापि।।१६।।**

**पार्यौ सोह सुहाग कौ इन विनही पिय नेह।**
**उन दौहीं अपियाँकि कै कै अलसौहीं देह।।१६।।**

पुनरपि स्वीयां वर्णयति। सहजजालसंचतद्वपुः तेन करणभूतेनापि सालसे-आलसवलितेलोचने यस्याः सा तया अनया विनाऽपि पत्युः प्रेम प्राणसमाभिधा दध्रे धारिता। एतेनान्यनायकासु यादृक् पतिप्रेम तादृक मयि नास्तीति दोषानुद्घटनात् सालसलोचनकरणाच्च पातिव्रतशीलसंरक्षण-विनयार्जवादिधर्मा अवगतास्तेनास्याः स्वीयात्वम्। अत्र पतिप्रेमाभावरूपप्रतिबन्धके सत्यपि प्राणसमाभिधा-धारणरूप-कार्यस्योत्पन्नत्वात्तृतीया विभावना 'कार्योत्पत्ति-तृतीयास्या सत्यपि प्रतिबन्धके' इति तल्लक्षणात्।

यद्वा-अर्थान्तरमाह। स्वपतिसम्भोगचिह्नितां सखीं दूतीं वा दृष्ट्वा-अपरामरङ्गां सखीं प्रति नायिकाया उक्तिः। सहजालसवपुषापि हेतुभूतेन सालसलोचनया अनया सख्या मम पत्युः सकाशात् प्रेम विना ऽपि प्राणसमाभिधा दध्रे। सालसलोचनयेत्यनेन रात्रि जागरः सूचितः। सहजालसवपुषेत्यनेन

गाढतरालिङ्गनाङ्गोपमर्दः सूचितः। सर्वासु सखीषु–इयं पत्युः प्राणसमेति भावः। मम प्राण समाभिधा अनया गृहीतेति कोपोक्तिर्व्यज्यते। 'प्रियसम्भोगचिह्नेन दूतीं वाऽन्यां विलोक्य या, उपालभेत, स्वयं कोपात्सान्यसम्भोग दुःखिता।' तल्लक्षणात्। यद्वा सपत्नीं पतिसम्भोगचिह्नितां दृत्वा सखीं प्रति सालसलोचनत्वादि तत्तद्रतिचिह्नवर्णनाद् एतस्याश्च प्राणसमाभिधात्ववर्णनाच्च स्वस्वातिदुःखितत्वां वर्णितमिति सपत्नीसम्भोग दुःखितेति वा।।१६।।

घर्मजलं रोमाञ्चकुशसहितं करे निधाय।
करग्रहे ददतुर्मनस्तरुणौ परस्पराय।।१७।।

स्वेद सलिल रोमांचकुश गहि दुलही अरु नाथ।
दियौ हियौ संकल्प करि हाथ जुरैंही हाथ।।१७।।

गन्धर्व विधि–परिणीतां स्वीयाभाह–धर्मेति। तरुणी च तरुणश्च तरुणौ जायापती रोमाञ्च एव कुशस्तेन सहितं धर्मजलं स्वदेवारि करे हस्ते निधाय करग्रहे पाणि पीडन समये परस्परस्मै अन्योन्यस्मै निजं निजं मनोहृदयं ददतुः स्व स्वस्वत्वनिवृत्तिपूर्वकं–परस्वत्वोत्पादनं चक्रतुरित्यर्थः। रोमाञ्च कुशधर्मजलादि सङ्कल्पदत्तसामग्रीं कृत्वा मानसव्यापारेण करग्रहणपूर्वकं मम एव सङ्कल्प्य ददतुरित्यर्थः। सङ्कल्पः कर्ममानसमित्यमरः। तरुणावित्यनेन तारुण्यावस्था मनोदानकालो निर्जनदेशावस्थानं चेति दानाङ्गभूतौ देशकालौ व्यख्यातौ। यूनोःकरग्रहणम्। एकान्त एव भवतीति विभावः। परस्परमुभयोर्दातृप्रतिग्राहीत्वम्। अतिप्रियं मनस्तदेव द्रव्यमिति द्रव्यस्यपि दानाङ्गत्वमुपपादितम्। गंधर्वविधिना करग्रहणेन प्रीत्युत्कर्षो दर्शितः। तत्र हर्षोत्साहजनित स्वेदरोमाञ्चसात्विकरूपोममेययोदर्शनसामग्रीरूपजलाञ्जलिरारोपत्वारोपाऽभेद–सम्बन्धेन व्यञ्जनात् समाभेदरूपकालङ्कारः। विषय्यभेदतावद्रूप्यरञ्जनं विषयस्पर्शात्। रूपकं तु त्रिधाधिक्य न्यूनत्वानुभयोक्तिभिरिति लक्षणात्। 'रतितः श्रमतो हर्षाद् भीतेः क्रोधाद् समुद्भवः। स्वेदो वपुषि सञ्जातः क्लेदं कुर्वन्निवाबभौ।।इति। विषादोत्सोसाह हर्षेभ्यो भयादाश्चर्यतोऽथवा, रोम्णामभ्युद्गमोदेहे रोमाञ्चःस्याच्च शीतत 'इति भरतः।।१७।।

यौवनशैशवलक्षितं वनितावपुर्विभाति।
द्विविधरागमम्बरमिव द्वैरूप्यं च दधाति।।१८।।

कुटीनसि सुता की झलक झलक्यौ जीवन अंग।
दीपति देह दुहून मिलि दियत ताफता रंग।।१८।।

अथ शैशवयौवनां मुग्धामुदाहरति। यौवनेति। यौवनशैशवाभ्यां लक्षितं वनिताया वपुः शरीरं द्वैरूप्यं दधाति धत्ते च पुनः विभाति विशेषेण भाति शोभते। किमिव द्विविधरागमम्बरमिवेत्युपमालङ्कारः। अत्र वनितातनोस्तारुण्यलक्षणाङ्कुरितयौवनत्वोद्भूतकिञ्चिदद्भिन्नसात्विकलज्जापराधीनत्वं

शैशवत्वलक्षण–चापल्य–चलनादिपृथग् धर्मवद्विविधरूपतारूपोपमेयस्य द्विविधरागरञ्जिताम्बर–रूपस्य चोपमानस्य पृथग् वैलक्षण्यद्वैरूप्यरूपताधारणधर्मोपमानवाचकेन सहोपादानात् पूर्णोपमेत्युच्यते। यद्वा। द्विविधो रागो यस्य तद्विविधरागमम्बरमाकशो यथा सन्ध्याकालेभवति तद्वदित्यर्थः। 'तत्राङ्कुरितयौवना मुग्धेति'–रसमञ्जरीकारः। 'प्रथमावतीर्णं यौवनमदनविकाररतौ मूढे'ति भरतश्च। तारुण्यं यौवनं समे–इत्यमरः।।१८।।

**शैशवतस्तरुणीतिथौ यदा मदनरविरेति।**
**तारुणसङ्क्रमकालमति धन्यः कोऽपि तमेति।।१९।।**

**तियतिथि तरणिकिसोर वय पुन्यकाल सम दौन।**
**काहू पुन्यन पाइये वयः सन्धि सक्रौ न।।१९।।**

पुनस्तामेवोदाहरति शैशवत इति। यदा यस्मिन् काले मदन एव रविः सूर्यः। तरुणी–एव तिथिः तस्यां शैशवतः सकाशात्। तरुणावस्थाविर्भावस्तारुणं तदेव सङ्क्रमकालः अतिस्वल्पतरत्वाद् एति प्राप्नोति तरुणीतिथौ तं कालं कोऽपि अति धन्यः इत्यनेनानिर्वचनीयताऽतिभाग्यवत्ता च व्यज्यते। यः कोऽपि अतिधन्यः स एव तं कालवत् सूक्ष्मेति प्रयाति, अति भाग्यवशेन मुग्धारतिलाभ इति भावः। अत्र मदनतरुणी तरुणावस्थाविर्भावसमयरूपस्योपमेयस्य सूर्यतिथिसङ्क्रमरूपोपमानस्य च भेदसम्बन्धेन मदनस्य शैशवत्यागतारुण्याविर्भावकालप्राप्तिरूपातिसूक्ष्मपूर्वराशित्यागपूर्वक–परराश्याक्रमणरूपसङ्क्रान्तिकालस्य दौर्लभ्यरूपधर्मवत्तया रञ्जनात्' समाभेदरूपकालङ्कारः विषय्यभेदताद्रूप्येत्याद्युक्तलक्षणात्। यथा कस्याञ्चित्तिथौ पूर्वराशेः सकाशाद् राश्यन्तरगमनं सूर्यसंक्रमस्तस्याति सूक्ष्मत्वं तथात्रापि मदनस्य शैशवावस्थातस्तारुण्यावस्था गमनं सङ्क्रमः स चाति धन्यलभ्य इति मुग्धाया दौर्लभ्यमिति दिक्।।१९।।

**ईषत्तारुणशिशुतया वनिता सखी कुलानि।**
**सुखयति यतः सकौतुकं प्रेषयन्ति नयनानि।।२०।।**

**लाल अलौकिक लरिकई लषि लषि सषी सिहाति।**
**आज काल्हि मैं देखिए उर उकसौंहीं भाति।।२०।।**

पुनस्तामेवोदाहरति। ईषत्तारुणेति। ईषत्तारुणं यस्या; सा चासौ शिशुता तया हेतुभूतया सखीकुलानि सुखयति–आन्दयति, यतस्तानि सखीवृदानि सकौतुकं यथा भवति तथा नयनानि प्रेषयन्तीत्यर्थः। ईषत्तारुण्याविर्भावजनितमन्दचलनस्वाङ्ग निरीक्षणादिविलोक्य मण्डनोपालम्भशिक्षादिकर्मणाययमवसर इति इति तेषु महदाह्लाद इति भावः। अत्र तरुणावस्थाविर्भावहेतुना सखीनामयत्नकृतानन्दसिद्ध्या प्रहर्षणालङ्कारः। 'उत्कण्ठितार्थसंसिद्धिर्विना यत्नमहर्षणम्' इति तल्लक्षणात्।।२०।।

यदा स्वीयसम्पत्प्रदो यौवननृपो विवेश।
नयन नितम्बस्तनहृदामाधिक्यं स दिदेश।।२१।।

अपनै अँग के जानि कै जोवननृपति प्रवीन।
स्तनमन नैन नितम्ब कौ बड़ौ इजाफा कीन्ह।।२१।।

पुनरपि मुग्धामुदाहरति। यदेति। यदा यस्मिन् काले वनितायामिति शेषः। स्वीयानां सम्पदं प्रददातीति सः यौवनमेव नृपो विवेश प्रविष्टः। तदा। नयनयोर्लोचयोनिर्तम्बयोः कटिपश्चाद्भागयोः स्तनयोः वक्षोजयोः हृदः मनसश्चाधिक्यं पूर्वापेक्षया दिदेश–आज्ञप्तवान्, स्वान्तं हृन्मानसं मन इति पश्चान्नितम्बः स्त्रीकट्या–इति चामरोक्तेः। अत्र नृपतिरूपोपमानस्य स्वीयानां सम्पत्प्रदानरूपधर्मवत्तया यौवनरूपोपमेयस्य च तदीयाग्रलोचन नितम्बस्तनमनसामाधिक्यरुपपत्तिदातृधर्मवत्तया चाभेदसम्बन्धेनानुरञ्जनात् समाभेद–रूपकालङ्कारः। प्रथमावतीर्णयौवनमदनविकारा रतौ मूढे'ति मुग्धालक्षणानुगतिः।।२१।।

यदि यौवनदेशाधिपस्तरुणीपुरं शशास।
तत्र गौरवं लाघवं रुचिरं रचयामास।।२२।।

नवनागरि तन मुलक लहि जोवन आमिल जोर।
बढ़ि घटतै घटि वढिर कमकरी और की और।।२२।।

पुनरपि मुग्धामुदाहरति। यदीति। यौवनमेव देशाधिपः, यदि यस्मिन् काले तरुणी–एव पूर्नगरी तां शशास स्ववशीचक्रे तत्र तस्यां पुरि रुचिरं रमणीयं यथा भवति तथा गौरवं लाघवञ्च रचयामास। यत्र कुचादौ लाघवं तत्र गौरवं यत्र कट्यादौ गौरवं तत्र लाघवं रचितवान्। अत्र यौवन तरुणीरूपोपमेययो–र्देशाधिपपुरीरूपोयमानयोश्च यथाशोभरचनानुज्ञारूपधर्मवत्तयाऽनुरञ्जनात्मसमाभेदरूपकालङ्कारः।।२२।।

यथा यथा तारुण्यशुचि दिनमुरोजमानेन।
ववृधे कटिरजनी तथा तथा हीयतेऽनेन।।२३।।

ज्यों ज्यों जोवन जेठ दिन कुचमित अति अधिकात।
त्यों त्यों छिन–छिन कटि छपा छीन परत सी जात।।२३।।

पुनरपि मुग्धामाह। यथेति यथा यथा येन प्रकारेण तारुण्यमेव शुचिदिनं ग्रीष्मर्तुवासरः उरोजावेव मानं तेन हेतु भूतेन ववृधे एधांचक्रे तथा तथा तेन तेनैव क्रमेण कटिरेव रजनी रात्रिः अनेन हेतुना हीयते क्षयतिस्मेत्यर्थः। अत्र तारुण्यकटिरूपोपमेयानां ग्रीष्मर्तुदिनमान रात्रिरूपोमानानां च वृद्धिक्षय रूपधर्मवत्तया क्रमतोऽनुरञ्जनात्समाभेदरूपकालङ्कारः। तल्लक्षणन्तु पूर्वोक्तमेव।।२३।।

बाले तव वक्षोजयुगमतिगुरुतरं विभाति।
सपत्नीषु भारव्यथा तदद्भुतं प्रतियाति।।२४।।

बाढ़त तो उर उरजभर भरि तरुनई विकास।
बोझत सौतिन के हिये आवत रुँधि उसास।।२४।।

पुनरपि मुग्धामुदाहरति। बाले-इति। तव वक्षसि जातौ वक्षोजौ तयोर्यो युगं तदतितरं विभाति शोभते, तद्भारव्यथा सपत्नीषु प्रति याति प्रति गच्छति-इत्यन्तमद्भुदम्। तव वक्षोजौ दृष्ट्वा नायकस्य त्वय्येव प्रीतिर्भविष्यतीति सपत्नीषु खेद इति भावः। अत्र वक्षोजगुरुतारूपकारणस्य तज्जनितभारव्यथावत्वरूप-कार्यस्य च विरुद्धभिन्नदेशावस्थानादसङ्गतिरलङ्कारः। विरुद्धभिन्नदेशत्वं कार्यहेतोरसङ्गति रितिलक्षणात्।।२४।।

बालाङ्कुरित पयोधरा क्रीडति सखीगणेन।
क्षणं क्षणं हृदयं निजं पश्यति हारमिषेण।।२५।।

भावुक उभरौहौं भयो कछुक परौ भरुआइ।
सीयहरा के मिस हियौ निसदिन निरषत जाइ।।२५।।

ज्ञातयौवनामुग्धामाह। बालाङ्कुरेतेति। अङ्कुरितै पयोधरौ यस्याः सा बाला सखीनां गणेन सह क्रीडति हारमिषेण हारव्याजेन क्षणं-क्षणं प्रतिक्षणं निजं हृदयम् उरः पश्यतीत्यन्वयः। अत्र पयोधरशब्दस्य स्तने रुढत्वान्नदोषः। स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधर इति रसमञ्जरी-कारेणाभ्युक्तम्। हारव्याजेनेत्युक्त्या प्रतिक्षणहृदयदर्शनामिषेण स्वहृदयदर्शनरूपेष्टसाधनाद् द्वितीयं पर्यायोक्तम्। पर्यायोक्तं तदप्याहुः यद्व्याजेनेष्टसाधनमिति लक्षणात्।।२५।।

वनिता तनुतारुण्यभाववृधे यथायथैव।
सपत्न्योऽपि मुखमलिनतामापुस्तथा तथैव।।२६।।

दोह दुलहिया की बढ़े ज्यों-ज्यों जीवन ज्योति।
त्यों-त्यों लखि सौतैं सबै वदन मलिन दुति होति।।२६।।

पुनरपि मुग्धामाह। वनितेति। वनितायास्तनौ देहे या तारुण्यस्य भाः कान्तिः सा यथा यथैव येन येन क्रमेण ववृधे एधामास तथा तथैव तेन तेनैव क्रमेण सपत्न्योऽपि-इति शब्देन अन्या अपि मुखे मलितां मालिन्यमापुः प्राप्तवत्य इत्यन्वयः। यौवनाविर्भाव प्रभां दृष्ट्वा कान्तोऽस्या एव वशी भविष्यति नास्माकमित्यौदासीन्याद् वदनमालिन्यमिति भावः। 'एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य वै यदी'ति लक्षणादुल्लासालङ्कारः अत्र वनितायास्तारुण्य प्रभारूपगुणेन सपत्नीनां मुखमालिन्यरूप-दोषलाभ इति लक्षणानुगतिः।

सपत्नीमिरपि सौभगं प्रियमात्रा निजसद्म।
पत्या दत्तमिवेक्ष्यते मुखं मनो निश्छद्म।।२७।।

मानोमुख दिखरावनी दुलहिन करि अनुराग।
सासुसदन मन ललनहूँ सौतिन दियौ सुहाग।।२७।।

पुनर्नववधूं मुग्धामुदाहरति। सपत्नीभिरिति। तव मुखं वीक्ष्य दृष्ट्वा इवेति सख्या उक्तेर्हे मुग्धे! सम्बुध्यनुकर्षः। येन विना यदनुपपन्नं तत्तेनाक्षिप्यत इति न्यायात् पत्या नायेकन निश्छद्म निष्कपटं यथाभवति तथा मनोदत्तं समर्पितं त्वन्मुखसौन्दर्यं दृष्ट्वा तवाधीनं मनः कृतमिति भावः। अतः सपत्नीभिरपि सौभगं सौन्दर्यं दत्तं तासां सौन्दर्यंपतिप्रेमवशात् त्वय्येवागतमित्यर्थः। ततः प्रियमाता श्वश्रूस्तया निजं सद्म गृहं दत्तं पुत्रं तवाधीनं दृष्ट्वेति भावः। अत्र पतिकृतमनोदानस्य च प्रियमातृकृतस्वसद्मप्रदानस्याप्य-हेतोस्तन्मुखदर्शनहेतुसम्भावनया सम्भावनयाविषयविषयस्या-सिद्धत्वाच्च-असिद्धास्पदा हेतूत्प्रेक्षाऽलङ्कारः। 'सम्भावनास्यादुत्प्रेक्षावस्तुहेतुफलात्यनां, उक्तानुक्तास्पदाद्यान्नसिद्धासिद्धास्पदे परे'-इति तल्लक्षणात्। किञ्च प्रथममुखप्रेक्षणदिवसादेव कमनीयतया कान्तो वशीकृतः, अत एव सपत्न्यो निरादृताः सौशील्यादि गुणैः स्वश्रूश्च सन्तोषितेति स्वीयात्वं ध्वन्यते।।२७।।

त्यजति शैशवं तद्वपुषि पत्यौ प्रीतिमतीव।
अपरा अपि चक्रुः सुखं बहुदूरं व्रजतीव।।२८।।

निरखि नवोढा नारि तन छुटत लरिकई लेस।
मैं प्यारी प्रीतम तियन मानहु चलत विदेश।।२८।।

पुनरपि प्रथमावतीर्णयौवनमदनां मुग्धामुदाहरति। त्यजतीति। तस्या बालाया वपुषि देहे शैशवं शिशुत्वं त्यजति सति अपरा अपि कामिन्यः सुखमनायासेन यथा भवति तथा पत्यौ निजप्रिये-अतीव-अतिशयेन प्रीतिं चक्रुः बहुदूरं व्रजतिवेत्युप्रेक्षा। इमां नवयौवनां दृष्ट्वा ममापि प्रियस्तत्रैवरस्येतीति नास्माकं पुनर्मिलनावसर इति भविष्यद्वियोगधियेति भावः। अत्र अन्यास्तमपि निजे निजे प्रिये प्रीतिबाहुल्यस्य तद्वपुषः शैशवत्यागो न हेतुरिति हेतुं प्रकल्प्य बहुदूरं व्रजतीवेत्युपमानवाक्येन च अनायासप्राप्तपतिप्रीतिरूपसाधारणधर्मेण बिम्बप्रतिबिम्बभाववर्णनाद्-असिद्धाहेतूत्प्रेक्षाऽलङ्कारः। सम्भवनास्यादित्याद्युक्त लक्षणात्। अत्रौत्सुक्याख्यः सञ्चारिभावः। इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुतेति तल्लक्षणात्। एतेन-अपूर्णा रतिर्व्यज्यते। इष्टवस्तु समीहाजनितमनोविकृति-रसपूर्णरतिरिति तल्लक्षणात्।।२८।।

प्रातः पतिगृहगमनमिति श्रुत्वा सखीमुखेन।
हसितं सत्रपनेत्रया तया कपोलतलेन।।२९।।

चालें की बातें चली सुनत सषिन के टोल।
गोपे लोयन लसति तिय विहसत गोलकपोल।।२९।।

अधिकत्रपामुग्धामुदाहरति। प्रातरिति। प्राप्तस्तव पतिगृहगमनम् पतिसदनप्राप्तिः पितृगृहादिति परिशेषः, इति सखीमुखेन सहचरी–वचसा, अत्र मुखशब्देन जहल्लक्षणया तत्सम्बन्धि वचो गृह्यते, श्रुत्वा आकर्ण्य सत्रपे त्रपायुक्ते नेत्रे यस्या; तया कपोलतनेन–उपलक्षितं हसितं कृतमिति शेषः।

एतेनहसिताख्यो हावविशेषो दर्शितः। यौवनाविर्भावकृतो वृथाहासो हसितमितिलक्षणात्। 'किञ्चल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैरि'ति भरतः। अत्र कपोलतलेनोपलक्षितं हसितं कृतमित्यनेन हर्षाख्यः सञ्चारीभावो व्यज्यते। इष्टावाह्या तु मनसः प्रस्वदो हर्षसंज्ञकः। तत्राश्रुगद्गदौ स्मरे पुलकादि प्रफुल्लेति तल्लक्षणात्। किंच संयोगवार्ताश्रवणानन्दजनितहसितहावप्रकटनाद्रति–स्थयिभावकः शृङ्गाररसः। तल्लक्षणं यथा– 'शृङ्गं हि मन्मथोद्भेदस्तथाभावादिहेतुजः। उत्तमप्रकृतिप्रयो रस; शृङ्गार उच्यते। तत्र चायं पूर्वानुरागाख्यो विप्रलम्भशृङ्गारः। तल्लक्षणन्तु। श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः, दशाविशेष प्राप्तौ यः पूर्वरागः स उच्यते।। अत्र कपोल एव हसिताविर्भावस्तेनानन्दजः सात्विकभावः। स्तम्भोहर्षभयाश्चार्यविषादाहर्षसम्भव' इति वचनात्। अत्र पतिसंयोगानन्दकारिसम्यक् सखीवचः श्रवणादनुरागेङ्गित–रूपयोऽनुभावः। 'अन्यैः प्रवर्त्तितांशश्वत्सावधाना च तत्कथां शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी'ति–लक्षणात्। अथवा गृहाद्गमनं गृहगमने पत्युर्गृहगमनमिति व्युत्पत्या तव पत्युर्गृहाद्गमनं निर्गमो भविष्यतीति श्रुत्वा शून्यगृहे जारप्राप्तिरिह हर्षाद्धसितमिति परकीया भेदेषु मुदितेम्। स्वस्यानुकूलदेशादिकालप्राप्तौ प्रहर्षिता। भवेद्यदा सखीमध्ये मुदितोक्ता मनीषिभिरितितल्लक्षणात्। यद्वा मम पत्युः प्रातर्निर्गम इति श्रुत्वा प्रहर्षित्वात् तत्रैव जारागमनसङ्केतावकाश इत्यनेनापि मुदितोक्ता यत्र विनाऽपि मुदितोक्ता यत्नं विनापि उत्कण्ठितार्थसिद्धौ प्रहर्षणालङ्कारः।।२९।।

यदि पपात पतिकरबलं बालाञ्चलवसनाय।
तयाश्रितं वरुणीवनं त्रपादुर्गमवनाय।।३०।।

लषि दौरत पियकर कटक वास छुड़ावन काज।
वरुनी वन गाढ़े दृगन रही गढ़ी गहि लाज।।३०।।

अधिकलज्जां महिलामुदाहरति। यदीति। पत्युःकरः पतिकर एव बलं सैन्यं यदि बालाया अञ्चल एव वसनं वा सः गृहमिति यावत् तस्मै तं गृहीतुमित्यर्थः। पपात पततिस्म तदा तया बालया–अवनाय रक्षणाय वरुणी एव वनं यस्मिन् तत् त्रपा एव दुर्गं दुर्गमस्थानमाश्रितम्। अतिलज्जालुतया नेत्रमीलनं कृतमित्यर्थः। लज्जया नेत्रयोरेव प्रादुर्भावात्। लोहे हि सैन्योपरुद्धे गृहे वनान्तर्गतदुर्गाश्रयणं श्रेय इति भावः। मन्दाक्षं ह्रीस्त्रपाव्रीडेत्यमरः। अत्र पतिकरबालाञ्चलवरुणीत्रपारूपोपमेयानां सैन्यसद्–भवनदुर्गरूपोपमानानां च तत्तद्धर्मवत्वेनाभेदाध्ययवसायाच्च समाभेदरूपकालङ्कारः। अत्र व्रीडाख्यः सञ्चारिभावः। नवसङ्गम गुर्वग्रस्तवावज्ञापराधतः। 'धाष्ट्यीभावो भवेद् व्रीडा तत्र मौनं विचिन्तनम्। अवगूढनभूलेखौ तथाधोमुखवीक्षणमिति भरतोक्तेः। लज्जादिना वचनाकथनं विकृतमिति लक्षणाद्

विकृताख्यो हावः। अत्र हर्षजातस्तम्भ सात्त्विकभावः। स्तम्भोहर्षभयाश्चर्य विषादामर्षसम्भवः। तत्र वाक्यादिराहित्यं नैश्चल्यं शून्यतादिकृदिति लक्षणात्। 'मध्या विचित्रसुरता, प्ररूढस्मरयौवना। ईषत्प्रगल्भवचना मध्या सव्रीडिता मतेति मध्यायाश्चातुर्विध्ये अधिक लज्जेयं मध्येति दिक्।।३०।।

दीपदीप्तरतिमन्दिरे पतिपरिहृतवसनाऽपि।
तनुप्रभावसना बभौ सा सत्रपा तथापि।।३१।।

दीप उजेरहू पतिहि हरत वसन रति काज।
रही लपटि छवि की छटनि नैकौ छुटीन लाज।।३१।।

प्ररूढस्मरयौवनां मध्यामुदाहरति। दीपेति। दीपैर्दीप्तं च तद्रतिमन्दिरं क्रीडास्थानं तस्मिन् पत्या परिहृतमुद्घाटितं वसनं यस्याः सा एतादृश्यपि तदापि तदानीमपि सा सत्रपा सलज्जा बभौ शोभतिस्म। कीदृशी तनुप्रभा एव वसनं यस्याः सेत्यन्वयः। एतेन अयत्नो दीप्तिहावः प्रदर्शितः। 'शाभेकान्तिश्च दीप्तिश्च माधुर्यञ्च प्रगल्भता, औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः।' तत्र दीप्ति लक्षणम्। 'भूषणं भूषयेद्यातु कान्तिरङ्गस्य विस्तरात्। चाकचिक्य प्रकाशेन सा दीप्तिरभिधीयते।'

इति भरतोक्तेः। अत्र सत्रपात्वहेतुभूतवसनावृतत्वाभावेऽपि सत्रपात्वरूपकार्योत्पत्ति वर्णनात् प्रथमविभावनाऽलङ्कारः। 'विभावना विनाऽपिस्यात्कारणं कार्यजन्मचेदितिलक्षणात्। वस्तुतस्तु विभावनायाः षाड्विध्ये तृतीया विभावना कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके-इतिवचनात्। पतिकृतवासोहरणरूप प्रतिबन्धके सत्यपि सलज्जालुत्वरूपकार्योत्पत्तरिति दिक्।।३१।।

विभावृता वनिता नता चकिताऽऽदृता रतान्ति।
त्रपा मदनभरसमतया गतागतं विदधाति।।३२।।

समरस समर सकोच वस विवसन ठिकु ठहराइ।
फिरि फिरि उझकति फिरि दुरति फिर फिर उरुकत आइ।।३२।।

समानलज्जावदनां मध्यामाह-विभावृत्तेति। त्रपा च मदनश्च तयोर्यो भरोभारः तस्य समतया तुल्यत्वेन वनिता नता नम्रा सती लज्जाभरेण विभाभिरावृता सती दीप्तियुत्ता सती मदनभरेण पुनश्चकिता सती लज्जाभरेण-अतिरताअत्यनुरक्ता पत्याविति विशेषः। आदृता सती मदनभरेण गतं चागतं च गतागतं गमनागमनं करोति। अत्र स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिः स्वभावस्थ- जात्यादिस्थस्य वर्णनात्'। अत्रावेगाऽवहित्थाव्रीडाचापल्याख्याश्चत्वार सञ्चारिभावाः, तदत्र प्रियोत्थ आवेगः। 'चित्तस्य सम्भ्रमो यः स्यादावेगोऽयं स चाष्टधा-प्रियाऽप्रियानलमरुद्धर्षोत्पातगजारिजः। प्रियोत्थे पुलकः सात्वचापलान्युद् भ्रमादय इति लक्षणात्।' अवहित्था तु हर्षलज्जोद्भूता तल्लक्षणं यथा-'भय गौरव हर्षादेर्लज्जाद्याकारगुप्तिरवहित्था। व्यापारान्तरकरणान्यथा प्रलापादि-लोकनाकारा इति। नवसङ्गमगुर्वग्रस्तवावज्ञापराधतः। धाष्ट्याभावो भवेद् व्रीडा तत्र मौनं विचिन्तनम्। अवगूहनभूलेखौ

तथाऽधोमुखवीक्षणमिति। अत्र नवसङ्गमोत्था व्रीडा। रागोत्थश्चापलः। तल्लक्षणं यथा– मात्सर्यद्वेषरागाश्चापलं त्वनवस्थितिरिति। अत्रा ऽप्रयत्नजो–माधुर्याख्यो हावः। 'गमागमाद्यवस्था सुवाचिस्मितविलोकने। रमणीयताया मनस्तेन माधुर्यं प्रचक्षते। यत्नजेषु हावेषु विलासहावः। यानस्थानासनादीनां मुखनेत्रयोश्च विशेषावस्थान्तरं विलास इति तल्लक्षणान्तरम्।।३२।।

रतिपतिधृत चातुरतया चापलतया स्वयाऽपि।
प्रियदृशौ नमिते ह्रिया लसतः श्रिया कयापि।।३३।।

करे चाह सौचटकि कै षुरे उठौहै मैन।
लाजन वायैं तरफत कर बूँदसी नैन।।३३।।

पुनरपि नेत्रश्रीवर्णनेन समाजलज्जामदनां मध्यामुदाहरति। द्वाभ्यामिति। रतीति। ह्रियालज्जया नमिते नम्रे प्रियायाः दृशौ नेत्रे रतिपतिना कामेन धृता चतुरता परचित्ताकर्षणसामर्थ्यं तया अपि पुनः स्वया स्वतः सिद्धया चापलतया करणभूतया कयाऽप्यनिर्वचनीययया श्रिया शोभया लसत इत्यन्वयः। अत्र भेदकातिशयोक्तिरलङ्कारः। 'भेदकातिशयोक्ति स्यान्तस्यैवान्यत्ववर्णनात्।' अत्र तस्या नेत्रशोभाया नेत्रशोभात एव भेदप्रतिपादनात्–लक्षणानुगतिः। पुनरत्र या'इति शब्दस्य चतुर्ष्वपि चरणेषु– आवृतिदर्शनाच्छब्दालङ्कारेषु स्फुटनानुप्रासालङ्कारः। तल्लक्षणं यथा 'श्लोकोर्द्धे तदर्द्धेवा वर्णवृत्तिर्यदि ध्रुवा, तदा मता मतिमतां स्फुटानुप्रासता सताम्। इति जयदेवः। यातस्थानासनादीनां मुखनेत्रयोश्च विशेषावस्थान्तरं विलास इति लक्षणाद्विलासाख्यो हावविशेषः।।३३।।

प्रियं वीक्ष्य सदने पितुर्मदनेन त्रपयाऽपि।
रते नते वनितादृशौ रमतः श्रिया कयाऽपि।।३४।।

छुटै न लाज न लालचौ पिय लषि नैहर गेह।
सटपटात लोचन षरे भरे सकोच सनेह।।३४।।

पुनस्तमेवोदाहरति। प्रियमिति। मदनेन रतेऽनुरागयुक्ते त्रपया लज्जया नते नम्रे वनितायाः युवत्या दृशौ नेत्रे पितुः सदने प्रियं वीक्ष्य दृष्ट्वा कयापि अनिर्वचनीयया श्रिया दीप्त्या रमतः क्रीडत इत्यन्वयः। अत्रापि भेदकातिशयोक्तिर्विलासहावश्च पूर्ववत्। सख्याः सखीं प्रत्युक्तिः।।३४।।

जिगमिषन्ती पितृसदनमारिरमिषन्ती पतिमेव।
सा तन्वी त्यजति तनुं दुर्योधनसममेव।।३५।।

पिय विछुरन कौ दुःसह दुःख हरष जात प्यौसार।
दुरजोधन लौ देखिए तजत प्रान इह वार।।३५।।

पुनरपि मध्यामुदाहरति। पितृसदनं जिगमिषती गन्तुमिच्छती पतिमेवरिरमिषती रन्तुमिच्छती

सा तन्वी दुर्योधनेन समं तुल्यं दुर्योधनसमं यथा भवति तथा तनुं शरीरं त्यजत्येवेत्यन्वयः। यदा भ्रातृवर्गाः पतिगृहात्तामानेतुमागतास्तदा भविष्यत्पतिविरहेण पतित्यागाऽसहिष्णुतया दुःखमग्ना आसीत् पुनः पितृसद्मन्येव गन्तुमिच्छती तत्र भविष्यन्मातृभगिन्यादिसम्मेलन सुखमग्ना बभूव तत्सुखस्यापि त्यागानर्हत्वमतः परस्परविरुद्धयोः सुखदुःखयोरेककालावच्छेदेन प्राप्तयोर्दुर्योधनस्यापि प्राणत्यागावसरस्तथा साऽपि तनुं त्यजतीति निष्कर्षार्थः। अत्र प्रलयाख्यः सात्विकभावः। 'प्रलयः सुखदुःाभ्यां चेष्टाज्ञाननिराकृतिः।' तत्रानुभावा गदिता महीनियत नाट्य इति भरतोक्तेः। किञ्च 'रस विच्छेद हेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायन्तु तद्वाच्यं चेतसा काङ्क्षितं तथा। वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरत इति। तथाऽत्रापि त्यजतीति वर्तमाननिर्देशात् मृतेवाभवत् न तु मृतेति प्रलय सात्त्विकानुगतिर्ज्ञातव्या।।३५।।

श्रुत्वा सर्वा आलयो रमणरमणवचनानि।
विहसन्त्यः प्रति चक्रमुस्ता निजनिजसदनानि।।३६।।

पति रति की बतियाँ कही सषी लषी मुसक्याइ।
कै कै सबै टलाटली अली चली सुष पाइ।।३६।।

न्यूनलज्जां मध्यामुदाहरिता। श्रुत्वेति। सर्वा आलयःसख्यः। आलिः सखी वयस्य चेत्यमरः। रमणस्य कान्तस्य रमणार्थं वचनानि श्रुत्वा–आकर्ण्य विहसन्त्यः परिहासं कुर्वन्तः तस्यास्तु रमणाभिलाषं ज्ञात्वेति भावः। निजनिजसदनानि प्रतिचक्रमुः प्रतिजग्मुरित्यर्थः। अत्र पिहितालङ्कारः। नायिकाया; सुरताभिलाषरूपवृत्तं जानन्तीनां सहचरीणां तत्सूचक परिहासरूपचेष्टोपादानात्। पिहितपरवृत्तान्तज्ञातुः साकूतचेष्टितमिति जयदेवः।।३६।।

सङ्कोचसङ्कुचित इव त्रपा भवत्यपितेव।
सुरतारम्भे घृष्टता परिपुष्टा मुदितेव।।३७।।

सकुचि सुरति आरम्भ ही विछुरी लाज लजाइ।
ढरकि ढार ढुरि ढिग भई ढीठ ढिठाई आइ।।३७।।

अथ न्यून लज्जां मध्यामुदाहरति। सङ्कोच इति सुरतस्य आरम्भ। सङ्कोचः सुरताभिलाषोऽपि लज्जाधीना या ऽनाश्लेषः सतु सङ्कुचित इवाभवत्। वदनानुद्घाटनरूपात्रपा तु स्वयमेव त्रपिता इवाभवत्। किन्तु तर्हि मुदिता सुप्रसन्नेव सती केवलं धृष्टता। सर्वाङ्ग संश्लेषरूपपरितः पृथुऽभवदित्यर्थः। अत्र–इवेत्येवकारस्य पदान्तत्वात् संयोगपरत्वेऽपि वैकल्पिकं लघुत्वं पदान्तस्थं विकल्पेनेति वाक्यात् अत्र हर्षाख्यः सञ्चारीभावः। इष्टावाप्त्या तु मनसः प्रसादो हर्ष सञ्ज्ञक इति भारतोक्तेः। एतेन रतिस्थायिभावस्य पुष्टता दर्शिता। अत्र च कलिसंज्ञकोहाव विशेषः। कान्तेन सहानुक्रीडितं केलिरिति लक्षणात्। आलम्बनचेष्टारूपउद्दीपन विभावः। तथा च भरतः 'उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये।

आलम्बनस्य चेष्टाद्या देशकालादयस्तथा। अत्र संकोचसङ्कुचित इव आसीत्, त्रपात्रपिता–इवासीत्। धृष्टतामुदिता सती परिपुष्टा–इवासीदिति–वाक्यत्रयेऽपि प्रत्येक मनुक्तास्पदा वस्तूत्प्रेक्षाऽलङ्कारः। अत्र भावप्रधानमाख्यातमिति स्मृतेधात्वर्तक्रियाया एव प्राधान्येन तदुपर्सजनत्वेनान्वितस्य कर्तुरुत्पेक्षणीयतयाऽनुक्तविषयत्वम्। अत एव उपमायामुपमानतया कर्तुरन्वयो दण्डिना निराकृतः। 'कर्ता यद्युमानं स्यान्यग्भूतोऽसौ क्रियापदे। स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितमिति दिक्।।३७।।

नायकरतिकृतपाटवा सुभगतरा मदनेन।
लसति सुभ्रु तव तारिका नर्तकीव नटनेन।।३८।।

सब अँग करि राषे सुघर नायक नेह सिषाइ।
रस जुत लेत अनन्त गति पुतरी पातुर खाइ।।३८।।

अथ समस्तरतिकोविदां प्रौढामुदहरति। नायकेति। सुष्टु सुन्दरीभ्रूःयस्यास्तत्सम्बुद्धौ हे सुभ्रु! अत्र नेयाडुवङ्स्थानावस्त्रीति नदी संज्ञानिषेधाद् ह्रस्वोनुपपन्नःतथापि हापितः कासि हे सुभ्रु! इति भट्टिप्रयोगात्। 'विमानना सुभ्रु पितुर्गृहे कुत इति कालिदासप्रयोगाच्च सामान्ये नपुंसकमिति नपुंसकत्वात्समाधेयम्। तव तारिका अक्ष्णः कनीनिका। नटनेन नर्तनेन हेतुना नर्तकीव लसतीत्यन्वयः। नायकस्य रत्या प्रीत्याकृतं पाटवं प्रावीण्यं यस्यां सा यस्यां नायकप्रीति सैव प्रवीणेति प्रसिद्धंनहि चातुर्यं विना नायकप्रेम भवतीति भावः। पुनरपि मदनेन कर्त्रा सुभगतरामज्जतमाऽकृतेति विशेषः। नर्तक्यपि नायकस्य शिक्षकस्य प्रीत्या कृतपाटवा भवति पुनरपि मदनाविर्भावेन मञ्जुतमा भवतीत्यर्थः। अत्र तारिकारूपोपमेयस्य नर्तकीरूपोपमानस्य च श्लिष्टविशेषणवाच्यार्थरूप साधारणधर्मवत्तया इवत्युपमावाचकेन सहो पादानात् पूर्णोपमालङ्कारः। उपमा यत्र सादृश्य लक्ष्मी रुल्लेसति द्वयोरिति लक्षणात्। अत्र भावजो हेलाख्यो हावविशेषः। तथा च भरतः–'यौवने सत्त्वजातासामष्टाविंशतिरीरिताः। अलङ्कारास्तत्र भावहावहेलास्त्रयोङ्कजाः। निर्विकारात्मके चित्ते भावः प्रथमविक्रिया। भ्रूनेत्रादिविकारैस्तु संयोगेच्छा प्रकाशकः। भावरण्वाल्यसंलक्ष्य विकारो हाव इष्यते। हेलात्यन्तरसावेशप्रकाशकरणात्मके'ऽति लक्षणात्।।३८।।

चुम्बति सति बालाननं रमणे मदनबलेन।
चुम्बति सापि रसावृता वृतधर्मसलिलेन।।३९।।

बुलाइ विलोकियतु प्रौढतिया रस घूमि।
पुलकि पसीजत पूत कौ पिय चूम्यौ मुख चूमि।।३९।।

अथ यौवनान्ध्यायाः प्रौढाया उदाहरणमाह। चुम्बतीति। रमणे प्रिये बालाननं शिशुवदनं चुम्बति सति साऽपि मदनबलेन कामवेगेन रसावृता हर्षावृता सती, रसोजलं रसो हर्षो रसःशृङ्गार उच्चयते– इत्यनेकाभिधानात्। धर्मजलेन स्वेदवारिणा आवृता व्याप्ता च चुम्बति। बालाननमित्यपि शब्देन

पूर्वोक्तानुकर्षः। न चात्र सुतवदनचुम्बनेन हर्षस्वेदावृतत्वरूपसात्त्विकाविर्भावोऽनुचितः रसाभासत्वात्। तदुक्तं भरतेन-''अनौचित्य प्रवृत्तत्वमाभासो रसभावयोरिति वाच्यम्। मदनबलेन रसावृतेति विशेषणोपादानेन पतिचुम्बित सुतवनचुम्बनेऽपि तात्त्विकाविर्भावे यौवनान्धागमत्वान्न दोषः। बालमाश्लिष्य चुम्बतीत्यनुरागेङ्गितानुभाव-दर्शनादत्र स्वेदः सात्त्विकः। 'रतितः श्रमतो हर्षाद्वीतेः क्रोधात्समुद्भवः। स्वेदो वपुषि सञ्जातःक्लेदं कुर्वन्निवा बभौ। विवेकहर उल्लासो मदः सद्विविधो मतः। मधुपानभवोऽनङ्ग भूतिविद्याभवोऽपि चेति हेलाहावः। 'हेलात्यन्तरसावेश प्रकाशकरणात्मिकेति। स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनादिति।

सुप्तामीक्ष्य शयेऽबलां प्रियः प्रीतिकलहेन।
सुप्तः स्वयमनु साऽपि हृदि गता स्वप्नमिलनेन।।४०।।

सोवत लषि मन मान धरि ढिग सोयौ पिय आइ।
रही सुपन की मिलन मिलि तिय हिय सौ लपिटाइ।।४०।।

पुनरपि यौवनान्धत्व मुदाहरति। सुप्तामिति। प्रियो रमणः प्रीतिकलहेन प्रणयमानेन हेतुना शये शयनाये अबलां सुप्तामीक्ष्य दृष्ट्वा तामनु पश्चात् दत्तमनुनयार्थमितिभावः। स्वयमपि सुप्तः। सापि स्वप्नस्य मिलनमिव मिलनं स्वप्नमिलनं तेन हेतुना हृदिगता हृदयेलग्नाऽभवदित्यर्थः। यदा कदापि प्रणयमानं विनाऽपि जाग्रदवस्थायामिव स्वप्नेऽनुभूतिं दृष्ट्वा मिलिता तथाद्यापि मिलितेयमिति प्रियस्य भ्रमः। सा तु साभिलाषा यौवनान्धतयैव स्वप्नमिषेण मिलितेति भावः। 'स्वप्नो निद्रामुपेतस्याननुभूतानुभावकृतदिति लक्षणात्। अत्र चावेगाऽवहित्था चापल्याख्याः संचारिभावाः। चित्तस्य सम्भ्रमो यः स्यावेगोऽयं सचाष्टधेति। भयगौरवहर्षादिर्लज्जाद्याकारगुप्तिरवहित्था। मात्सर्यं द्वेषरागाद्यैश्चापलं त्वनवस्थितिरित्यादिलक्षणात्। अत्रापि हेलाख्यो हावः। 'हेलात्यन्तरसावेशप्रकाश-करणात्मिकेति तल्लक्षणात्। स्वभावोक्तिः स्वभावस्य जात्यादिस्थ वर्णनात्स्वभावोक्तिः। उत्कण्ठितार्थ संसिद्धिर्विना यत्नं प्रहर्षणम्-इति लक्षणात्। अनायासेन मानमुक्तितदङ्कलाभाभ्यां प्रहर्षणोलङ्कारश्च। अनयोः तिलतण्डुलवत् पृथगुपपत्या संसृष्टिरिति दिक्।।४०।।

प्रियदत्ताऽपि सकृद्धृता यदिह सपत्निकयैव।
सखि सा हरहारायते मुक्तामणिमालैव।।४१।।

हठ हितकारि प्रीतम दियौ कियो जु सौति सिंगार।
अपने कर मोतिन गुह्यौ भयौ हराहर हार।।४१।।

ज्येष्ठा कनिष्ठामुदाहरति। प्रियदत्तेति। हे सखीति नायिकाया उक्तिः। मुक्तामणीनां माला एवं निश्चयेन प्रियेण रमणेन दत्ताऽपि हरस्य शिवस्य हारः सर्प इति यावत् सा इवा चरतीत्यर्थः। यत्

यस्मात्–इहास्मिन्नवसरे सपत्निकया सकृदेकवारं धृतेत्यन्वयः सपत्न्याङ्गसङ्गात्सर्पवद्दुःखदेति भावः। अत्रेर्ष्या समुद्भवो निर्वेदोऽसूया सञ्चारिभावश्च। तल्लक्षणं यथा – 'तत्त्वज्ञानार्तिजन्यश्य योगेर्ष्यादि कल्पितः। स्वाावमाननमत्राश्रुचिन्तादैन्यं विवर्णता, श्वासोच्छ्वासादिकृच्चैव निर्वेदः स उदाहृतः। इति दोषः परोदयोऽसूयास्यात्सौभाग्य गुणादिभिः। 'तत्रेर्ष्यानादराक्षेपाद्दोषारोपो गुणेष्वपि–' इतिल्लक्षणात्। एतेनेतपनाख्यो हावः। 'प्रिय–वियोगे कन्दर्पवेगोत्थ चेष्टितं तपनमिति लक्षणात्। यद्वा सा मुक्तामणिमाला, या मया कृतेति भावः। प्रियाय मया दत्ता धारणार्थमित्यर्थः। साऽसकृेकवारं सपत्नीधृता मयादृष्टेति विशेषः। हरहार इवाचरतीत्यर्थः। ज्येष्ठकनिष्ठयोश्च धीरादिभेदनियतत्वमस्ति तेनात्र–ईर्ष्यामानः। मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भव इति। परिणीतधर्मेण युक्ते द्वे परिकीर्तितो भर्तुः स्नेहाधिक्यवशात्कनिष्ठाज्येष्ठतां गता, न्यूनस्नेहेन ज्येष्ठाऽपि कनिष्ठा परिकीर्तिता। मध्याप्रगल्भयोर्भेदास्तस्मा–द्वादशकीर्तिताः। अत्रोपमेय रूपमुक्तामणिमालाया हरहाररूपोपमानेन–सहोपादानात् दुःखदातृत्वादिसाधारणधर्मानुपादानाद्–इवेत्युष्मावाचकस्यापि शास्त्रकृत–लोपाल्लुप्तोपमेयम्। किञ्च सर्वकालसुखशोभादायकमुक्तामणिहार–दर्शनात्सर्पदर्शनवद्दुःखावाप्त्या इष्यमाण विरुद्धार्थसम्प्राप्तिरूपो विषादालङ्कारः। 'इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम्। इति लक्षणात्।।४।।

**लाक्षारुणमपराचरणं वीक्ष्य मनसि कुपितैव।**
**तथाभूतमपि हरिकरं सा जज्वाल रूषैव।।४२।।**

**सुरँगमहावर सौति पग निरषि रही अनषाइ**
**पिय अँगुरिन लाली लषैँ षरी उठी लगि जाइ।।४२।।**

पुनरपि ज्येष्ठाकनिष्ठामाह। लाक्षेति। सा अपरायाः सपत्निकायाः चरणं लाक्षयाऽरुणं वीक्ष्य मनस्येव कुपिता लाक्षारसरञ्जितसौभाग्यसूचकसपत्नी प्रदर्शनाद् मत्प्रियरमणार्थमधुनेयं शृङ्गारवतीत्यनुभावात्। पुनस्तथाभूतं लाक्षारुणं हरेः करमपि वीक्ष्य दृष्ट्वा रुषैव जज्वाल। महान् कोपोजातः, रतिविभ्रंशित लाक्षारागसङ्गोपनार्थमनेन हरिणाधुनैव लाक्षारसरञ्जितमस्यश्चरणं निश्चयेन कृतमित्यनुमानात्। अत्रापि ज्येष्ठा कनिष्ठे मध्याप्रौढयोर्धीरादिभेदनियते प्रदर्श्येते तल्लक्षणं तु पूर्वपद्योक्तमेव। अत्रासूयाख्यः संचारिभावः। द्वेषः परोदयेऽसूयास्यात्सौभाग्यगुणादिभिः। तत्रेर्ष्यानादराक्षेपाद्दोषारो गुणेष्वपि–इति लक्षणात्।।४२।।

**मुखगोपन कपटेन मामुदरं नाभिललाम।**
**दिदर्शयिषुः सा रमणी सख्या समं जगाम।।४३।।**

**त्रिवली नाभि दिषाइ कै सिर ढकि सकुचि सराहि।**
**अली गली की ओर ह्वै चली भली विधि जाहि।।४३।।**

अथ नायकः स्वं पूर्वानुरागमाविष्कुर्वन् परकीयाया अनुरागेङ्गितानुभावं सखीं प्रत्याह। मुखेति।

मुखगोपन कपटेन वदनाच्छादनमिषेण नाभिनाललललामरम्यमुदरं मां दिदर्शयिषुः दर्शयितुमिच्छन्ती रमणी सख्या समं साकं जगाम गतेत्यन्वयः। अत्र च विप्रलम्भशृङ्गारः। यत्र च रतिः प्रकृष्टा नोभीष्टमुपैति विप्रलम्भोऽसाविवितिभरतोक्तेः। तत्र चाभिलाषचिन्तास्मृतिगुणकथनरूपाः कामदशाः। तेन–औत्सुक्य संचारी भावो व्यज्यते। तल्लक्षणं तु तत्रैव। इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुतेति। या स्यात्पूर्वानुभूतार्थप्रतीतिःसदृशेणात्। दृढाभ्यासादिना साऽपि सा स्मृतिः परिकीर्तितेति भरतः। ध्यानं चिन्ता हितानाप्तेः शून्यताश्वास तापकृत्। इति च। कापि कुन्तल वस्त्रादि संयमव्यपदेशतः, बाहुमूलं स्तनौ नाभिं वस्त्रमुत्सार्य दर्शयेत्। इत्यादि–परकीयाया अनुरागेङ्गितवर्णनादियं परकीया परोढेति। परकीया द्विधाप्रोक्ता कन्यकोढेतिवर्णिता। विवाहिताऽप्यन्यचित्ता परोढा सा तु गीयते। इति। किञ्च मान लज्जामदना मध्यापि संभवति। मुखगोपन व्याजेन–उदरादि दर्शयितुमिच्छन्तीति–लज्जामदनयोः साम्यात्। स्वभावोक्तिः 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थवर्णनात् स्वभावोक्तिरलङ्कारः। किञ्चातीतदशायाः सखीं प्रति साद्य मम दृष्टितोऽपिनापैतीत्यभिप्रायगमितिनायक–वचननेन साक्षात्कारत्वप्रतिपादनाद् भाविकालङ्कारोऽपि 'भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनादिति दिक्।।४३।।

**पश्य किमपि कौतुकमिहस्वामीक्षते क्षणेन।**
**सा गवाक्षनिहिताङ्गुली रुचिरमध्यविवरेण।।४४।।**

**देखत कछु–कौतुक देतै देषौ नेकु निहारि।**
**कब की इक टक डटि रही टटिया अँगुरिन फारि।।४४।।**

पुनरपि परकीयामुदाहरति। पश्येति। नायकं प्रति सख्या उक्तिः। इह अस्मिन् स्थाने किमपि कौतुकं पश्य त्वमित्यध्याहारः चिरेण चिरकालतः। गवाक्षे वातायने निहिताः स्थापिताः या अङ्गुलयस्तासां रुचिरं च तन्मध्यविवरं तत् तेन कारणभूतेन सा त्वाम्–ईक्षते पश्यतीत्यत्यर्थः। अत्र–अनूढायाः मुग्धाया अनुरागेङ्गितरूपोऽनुभावः। तदुक्तं भरतसूत्रे। 'दृष्टा दर्शयति व्रीडां सन्मुखं नैव पश्यति। प्रच्छन्नं वा प्रपन्नं वा ऽतिक्रान्तं पश्यति प्रियम्।' इति–'अनुभावो विकारस्तु भावसंसूचनात्मकः' इति च। स्वभावोक्तिरलङ्कारः 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थवर्णनात्।।४४।।

**सा सन्त्रासति भ्रुवा मिलनं दृशा ददाति।**
**नेति वदति कर्षति हितं हितं नतं प्रतियाति।।४५।।**

**भौहनि त्रासति मुख नटति आँखिन सौ लपटाति।**
**ऐंचि छुंटावति करइची आगै आवत जाति।।४५।।**

परकीयायाः प्रथममिलनं सख्या; सखीं प्रति उक्त्या वर्णयति। सेति। सा इति तच्छब्देन पूर्वदृष्ट नायिका नायकानुभावरूपं सखीवचनं तेन परोक्षलक्षितेयम्। 'लक्षयेल्लक्षणैर्युक्तां भोगादि विवधैः सखी। गुप्तमुद्घाटेद्यस्या लक्षिता सा प्रकीर्तिता'–इति लक्षणात्। अस्यास्तु परकीयायामेव

नित्यत्वात्। नन्वप्रकटपरपुरषानुरागा परकीयेति रसमञ्जर्यां प्रतिपादनात्'। कथमस्या सखीषु परानुराग-प्राकट्यमितिचेत्। तत्रैव विश्रामकारिणी पार्श्वचाणिी सखीति लक्षणात्। सखीनामप्यन्तरङ्गबहिरङ्ग-भेदेऽवगन्तव्ये। तेन प्रच्छन्नचेष्टाज्ञानवत्यन्तरङ्ग। प्रकाशचेष्टा ज्ञानवती बहिरङ्गेति स्फुट प्रतिपत्ते। अत्रान्तरङ्गसखी भ्रुवां भ्रू-व्यापारेण संत्रासयति। दृशादृग्व्यापारेण मिलनं ददाति। दृशा दृग्व्यापारेण कर्षति समीपमानयति। हि निश्चयेन तं प्रति न याति। तद्वा नायकं प्रति संघटनानुरागमाविष्कुर्वन्त्याः सख्याः उक्तिः। स्वभावोक्तिरलङ्कारः।।४५।।

**कृष्णः कोऽपि ममाजिरे सहचरि! गतः कदापि।**
**तदवलोकभयजनित मनु तनु कम्पितमधुनापि।।४६।।**

**करौं वदन डरावन्तै कत आवत मो गेह।**
**कैंवा लख्यौ सषी लखै लगै थरहरी देह ।।४६।।**

वृत्तसुरतगोपनां परकीया मुदाहरति। कृष्ण इति। हे सहचरि! ममाजिरे मम गृहे कृष्णः कृष्णवर्णः कोऽपीत्यनेनाज्ञातकुलगोत्रत्वमुच्यते। कदापि कस्मिँचिद्दिने गतः। तस्य कृष्णस्य यदवलोकं तस्माद्यद्भयं तज्जनितम्-अनु पश्चात्तनौ कम्पितमधुनाऽपि वर्तते। इति त्वं पश्येत्यहध्याहारः। अत्र कृष्णसङ्गमोद्भूतकम्पस्य कृष्णः कोऽपीत्यनेन चौरभ्रमजनित कम्पोक्त्या भूतगुप्तेयं परकीया। तदुक्तं भरतसूत्रे-'तत्र गुप्ता द्विधा प्रोक्ता वृत्तसौरत-गोपना, वर्तिष्यमाणसुरतगोपना च द्वितीयका। द्विधर्मत्वे तृतीयापि वर्त्तमानं रतं नहि गोपितुं शक्यते यस्मात्सा वर्ण्या न भवेदिह। अत्र कम्पाख्यः सात्त्विक भावः 'अमर्षत्रासहर्षाद्यैः कम्पो गात्रस्य वेपथुरिति-लक्षणात्। तनुकम्पंदृष्ट्वा सहचरीणां भ्रमो मास्त्विति हेतोर्भयजनितकम्पमिति तद्भूमनिवृत्योक्त्या कृष्णसङ्गमोद्भूतनिन्हवाच्छेका पह्नुतिरलङ्कारः। छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिन्हवे'-इति लक्षणात्।।४६।।

**प्रविष्टेव सा निजतनौ त्रपाभरं तस्तार।**
**अङ्गदृष्टमदृष्टमपि प्रियमभिमुखं चकार।।४७।।**

**देष्यौ अनदेष्यौ कियौ अँग-अँग सबै दिखाइ।**
**पैठत सी तन मैं सकुच बैठी चितहि लजाइ।।४७।।**

संख्याः सखीं प्रति-उक्त्या हेतुगुप्तां वर्णयति। सा प्रियमभिमुखं प्रियस्याभिमुखं निजतनौ प्रविष्टेव-वसती त्रपायाः भरं तस्तार विस्तारितवती। अपि पुनः दृष्टमङ्गं वस्त्रादिनेति शेषः अदृष्टंचकारेत्यन्वयः। एतेनान्यासामधिकलज्जावतीयमिति प्रतीतिरस्त्विति हेतोस्त्रपाभरव्याजेन दृष्टास्याप्यङ्गस्य गोपनात्परकीयाया अप्रकटपरपुरषानुरागत्वं व्यज्यते, तेन सौरतहेतुगोपनाद्धेतु-गुप्तेयमिति। यद्वा दृष्टभङ्गमदृष्टं चकार-अदृष्टं दृष्टानित्यर्थः। एतेन हेतुलक्षितेयं सखीभिः परपुरुषानुरागहेतोर्लक्षिततत्वात्। प्रियाग्रेत्रपाव्याजेनाङ्ग-सन्दर्शनक्रियया स्वानुरागमाविष्करोतीति क्रियाविदग्धैव वा यथा कथञ्चित्। यद्वा प्रियशब्देन पतिर्गृह्यते। तदापि लज्जा मदन

समत्वहेतुस्वाङ्गासाङ्गोपनसन्दर्शनानुभावाद् मध्यास्वीयैवेति। अत्रानुरागेङ्गितरूपोऽनुभावः। तल्लक्षणं यथा भरतसूत्रे–'कापि कुन्तलवस्त्रादिसंयमव्यपदेशतः। बाहुमूलस्तनौ नाभिं वस्त्रमुत्सार्य दर्शयेदिति। अत्र व्रीडा सञ्चारी भावः। नवसङ्गमगुर्वग्रस्तवावज्ञापराधतः। धाष्ट्र्याभावो भवेद्व्रीडा तत्र मौनं विचिन्तनम्। अवगूहन–भूलेखौ तथाधोमुखवीक्षणमिति लक्षणात्। स्वभावोक्तिरलङ्कारः। परकीयायाः क्रियावैदग्ध्यादि स्वभावकथनात्। किञ्च लज्जाव्याजेन स्वाङ्गसन्दर्शनेष्टसाधनात् पर्यायोक्तं तदप्याह 'यद्व्यजेनेष्टसाधनमिति पर्यायोक्तमपि। तिलतण्डुलवत् पृथगुपपत्या संसृष्टिरप्यनयोरिति दिक्।।४७।।

**देवरकरकुसुमाहता फुल्लतनुर्विचकास।**
**सा यथोपचरिताऽलिभिस्तन्वी तदा जहास।।४८।।**

**देवर फूलहन्यौ जुहसि उठे हरषि अँग फूलि।**
**हँसि करत ओषद सषिन देह ददोरनि भूलि।।४८।।**

आकृतिगुप्तामाह–देवरेति। यद्वा सा तन्वी देवरस्य यः करस्तत्सम्बन्धि यत्कुसुमं तत्प्रहितमित्यर्थः। यद्वा देवरकरे यानि कुसुमानि तैराहता सती–अत एव फुल्ला हर्षरोमाञ्चादिभिस्तनुर्यस्याः सा विशेषेण चकास दिदीपे। आलिभिः सहचरीभिस्तु–अयथा–अन्यथैव नवोत्पन्नदद्रुरोगादिभ्रान्त्यैव-उपचरिता सती जहास हसितवती सखीभिरपि तदाकृतेरनवबोदाकृतिगुप्तेयामित्यर्थः। श्यालाःस्यु भ्रातरः पत्या स्वामिनो देवृदेवरावित्यमरः। अत्र देवरकरकुसुमाहत्वात्तत्प्रीतिर्व्यज्यते। कथं तर्हि-अनौचित्यप्रवृत्तत्वमाभासो रसभावयोरित्यादिना रसदोषापत्तिरुक्ता परिहर्तव्या तत्रेयं योजनिका। अत्र देवरपदेन कश्चित्समीपवासिजनो व्यावहारिकरीत्या देवरः कथ्यते, एतेन परकीया व्यज्यते। अप्रकट परपुरुषानुरागत्वात्। यद्वा सख्याः सखीं प्रत्युक्तिस्तदा सख्या एव देवरो गृह्यते। वस्तुतस्तु तत्पत्युर्जेष्ठभातुः पत्न्यावचनमिदम्। एतेन तस्या; पतिस्तस्या देवर एवेति स्वीयैवाकृति–गुप्ताबोधव्या। अयथोपचारवत्वात् सख्योऽपि बहिरङ्गाः विहसनक्रियया–अन्यथोपचरन्तीनां सखीनां भ्रमोत्पादनेन स्वानुरागरूप मर्म प्रकटनाय तद् व्यजनं विवक्षितं तेन युक्तिरलङ्कारः। 'युक्तिः पराभिसन्धानं क्रियया मर्मगुप्तये।' इति तल्लक्षणात्। अत्रावहित्थाहर्षाख्यौ सञ्चारिभावौ। भय गौरवहर्षादेर्जज्जाद्याकार-गुप्तिरवहित्था। इष्टावात्था तु मनसः प्रसादो हर्ष संज्ञक इति।।४८।।

**चतुर्दिक्षुवामासु दृक् प्रचलन्ती प्रियमेति।**
**दिक्प्रबोधपुत्री तथा तत्रैव स्थितिमेति।।४९।।**

**सबहीं तै समुहाति छिन चलत सबन दै पीठि।**
**वाही पैठ हराति यह कविलनु मालौ डीठि।।४९।।**

हेतुलक्षितामुदहरति। चतुर्दिक्ष्विति। सख्याः सखीं प्रत्युक्तिः। वामायाः सदृगदृष्टिः चतुर्दिक्षुचलन्ती सती प्रियमेति, तत्रैवस्थिरी भवतीति भावः। यथादिशः प्रबोधाय निर्मिता, पुत्री पुत्तलिका तत्रैव

तस्यामेवदिशि स्थितिमेतीति समुद्रादौ महानौकास्थैर्जनैर्यन्त्ररूपाया पुत्रिका स्थाप्यते तां दृष्ट्वा दिग्बोधो भवतीति प्रसिद्धिः। अत्र वनितादृशश्चतुर्दिक् चलन पूर्वकं प्रिय एव स्थिरीकरणेन हेतुना सखीषु तत्सौरतचिह्नस्य लक्षिततत्वात् हेतुलक्षितेयम्। प्रियशब्देन यदोपपतिर्गृह्यते तदा परकीया यदा पतिस्तदा स्वीयैव हेतुलक्षिता सम्भवति। अत्र वनितादृग्रूपोपमेयस्य दिक् प्रबोधपुत्री रूपोपमेयस्य दिक् प्रबोधपुत्रीरूपोपमानस्य च चतुर्दिक् चलनं तत्रैवस्थिरीभाव इति, साधारणधर्मवत्त्वे सति यथा शब्दोपमावाचकेन सहोपानात् पूर्णोपमाऽलङ्कारः। अत्र नायिकायां चेष्टारूप उद्दीपन विभावः उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये। आलम्बनस्य चेष्टाद्या देशकालादयस्तथेति भरतोक्तेः।।४९।।

**लोचनवृत्तिरियं तयोरपरदृशं परिहाय।**
**सम्मिलिता गच्छति धनं जनकदम्बमपहाय।।५०।।**

**षरी भीरन्ह भेदिकै कितहू है इत आइ।**
**फिरै डीठि सो डीठि मिलि सबकी डीठि वचाइ।।५०।।**

पुनरपि हेतु लक्षितामाह। लोचनेति। सखी सखीं प्रति वदति तयोः कामिनोर्यूनोः इयमित्यङ्गुल्या निर्देशः लोचनवृत्तिर्नयनव्यापारः-अपरस्य-अन्यस्यजनस्य दृशं दृग्व्यापारं परिहाय वञ्चयित्वा घनं जनानां कदम्बं समूहमपहाय-उलङ्घ्य सम्मिलिता परस्परं श्लिष्टा सती गच्छति-त्वं पश्येत्यध्याहरः। अत्र घनजकदम्बोलङ्घ्नान्यदृग्व्यापारवञ्चनपूर्वकं तयोर्दृग्व्यापारसम्मेलनरूप-चातुर्यहेतोर्लक्षितत्वाद् हेतुलक्षितेयं परकीया। अप्रकटपरपुरुषानुरागलक्षणत्वात्। अत्रान्यदृग्व्यापार-सघनजनकदम्बप्रतिबन्धके सत्यपि परस्पर-दृग्मिलनरूपकार्योपपत्तेस्तृतीया विभावना। किञ्च परकीयायाश्चातुर्यरूपस्वभाववर्णनात् स्वभावोक्तिरपि, चेष्टारूप उद्दीपनविभावश्च तल्लक्षणं पूर्वपद्योक्तं ज्ञेयम्-इति दिक् ।।५०।।

**प्रवदति न वदति परिमिलति परिरंभणं ददाति।**
**जनसमक्षमपि सा दृशा बहुभावान् विदधाति।।५१।।**

**कहति नटति रीझति षिझति मिलति षिलत लपिटात।**
**भरे भौंन मैं कहत है नैननहीं सब बात।।५१।।**

पुनरपि हेतुलक्षितामुदाहरति। प्रवदतीति। सा या पूर्वं दृष्टेति सखीं प्रति सखीव वचनम्। दृशा दृग्व्यापरेण प्रवदति वार्त्तां करोति न वदति मौनमाचरति, परिमिलति समीपमागच्छति परिरम्भणं ददाति श्लिष्यति। जनानां समक्षमपि चातुर्येण एतान् भावान् विद्धाति करोतीत्यर्थः, अत्रापि परकीया हेतु लक्षितेयं सखीषु तत्प्रणयहेतु बहुभावलक्षितत्वात्। जनसमक्षरूपे प्रतिबन्धके सत्यपि बहुभावकरण रूपकार्योत्पत्तेरत्रापि तृतीया विभावना। अत्र बहूनां क्रियाणां यौगपद्यभावेन गुम्फनात्समुच्चयालङ्कारश्च। 'बहूनां युगपद् भावभाजां गुम्फ : समुच्चय इति लक्षणात्। कासांचित् क्रियाणां किञ्चित्कालभेदसम्भवेऽपि

शतपत्रपत्रशतभेदन्यायेन यौगपद्यं प्रेमातिशयद्योतनाय विक्षितमिति लक्षणानुगतिः। विभावनासमुच्चययोः पृथगुपपत्या संसृष्टिरपीत्यलं विस्तरेण।।५।।

सखिसौधाग्रनिबद्धदृढचोलनवृत्तिगुणेन ।
उभयोरभयमनोनटावटतः पश्य सुखेन।।५२।।

डीठि वरत बाँधी अटनि चढ़ि दौरत न डरात।
इत उत तैं मन दुहुन के नट लौ आवत जात।।५२।।

पुनर्यथा। सखीति। उभयोः नायिकानायकयोः। अभयौ च तौ मनसी–एव नटौ सौधाग्रे हर्म्याग्रे निबद्धा च या दृढा लोचनयोर्वृत्तिर्व्यापारः सैव गुणं रज्जुस्तेन करणभूतेन सुखेन अनायासेन अटतः गच्छत इतित्वं पश्यत्यर्थः। अत्र निजनिज सौधाग्रारूढनायिकानायकयोर्नयनव्यापाररूप रज्जुमार्गेण-उभयोर्मानसनटौ परस्परं निर्भयत्वेन गमागमं कुरुत इत्यनेन तत्प्रीतिहेतुक मानसव्यापारयोश्चोपमानो-पमेययोर्दृढसौधाग्रनिबद्ध–रज्जुमार्गेणानायासगमागमधर्मवत्वेनाभेदाभेदाध्यवसायाच्च समाऽभेद-रूपकालङ्कारः।।५२।।

कृत्वा मज्जनमङ्गना कुन्तलविवृतमिषेण।
पश्यति हरिमङ्गुलिविवरगतचञ्चलनयनेन।।५३।।

कञ्जनयननि मञ्जन कियै बैठी व्यौरति बार।
कच अँगुरिन बिच डीठ दै निरषत नन्दकुमार।।५३।।

कृत्वेति। अङ्गना मज्जनं स्नानं कृत्वा कुन्तलानां केशपाशानां या विवृतिविवरणं तद्व्याजेन हेतुना–अङ्गुलीनां विवरेषु गतं यच्चञ्चलं नयनं तेन हरिं पश्यतीति सखीं प्रति सखीवाक्यं तेनेयमपि हेतुलक्षिता। तदनुरागहेतोर्लक्षितत्वात् पर्योक्तमलङ्कारः। स्नानोत्तरकालीनकुन्तलविवरणक्रियया चञ्चलदृग्व्यापार–सामान्यधर्मव्याजेन हरिदर्शनरूपेष्ट–साधनादितिलक्षणानुगतिः। स्वभावोक्तिरलङ्कारो-ऽपि सम्भवति। परकीयायाश्चातुर्यपूर्वकनिजप्रियनिरीक्षणस्वभावादिति। इन्द्रियेण प्रत्यक्षकरणात् प्रत्यक्षालङ्कारोऽपि।।५३।।

भित्वा पटमपि दृक्तयोरलभतः वदनसुखानि।
लघु बलमिव सेनापतिं सेनाविजयधनानि।।५४।।

झमकि मिलै दृग दुहुन के रुके न झीनै चीर।
हलकी फौज हरौ लज्यौ परत गोल पर भीर।।५४।।

पुनर्यथा भित्वेति। तयोर्नायिकानायकयोः दृक् दृष्टिः कर्त्री वदनसुखानि वदनावलोकनसुखानि पटमपि मुखाच्छादकजवनिकां भित्वा अलभत लेभे। एतेन दृशोऽति–तीक्ष्णगामित्वबलेन पटान्तर्गतवदनसम्मेलन सुखलाभ उक्तः। लघुबलं सेनापतिं भित्वा विजयं च धनानि च विजयधनानि

सेनेव-अलभत प्राप्तेत्यर्थः। अत्र सेनादृशोरूपमानोपमेययोर्लघुबलसेनापत्युल्लङ्घ्य धनवत् सूक्ष्मवदनाच्छादकपटभेदनपूर्वक विजयधनप्राप्तिमद्वदनदर्शनसुखावात्यादिसाधारण धर्माणामन्योन्य विम्ब प्रीतिबिम्बभाववत्वादुपमावाचकेन सहोपादानाच्च पूर्णोपमालङ्कारः। अत्राप्यनुरागहेतोर्लक्षित्वाद् धेतुलक्षिता ज्ञातव्या।।५४।।

दूरं गतयोरपि तयोरभवन्निकटसुखानि।
परस्परं भजतोर्दृशा सरसवचनहसितानि।।५५।।

दूर्‌यो परे समीपकौ मानि लेत मनमोद।
होत दुहुन के दृगन ही बतरस हँसी विनोद।।५५।।

दूरमिति। दृशा दृग्व्यापरेण परस्परमन्योन्यं सरसवचनानि हसितानि च भजतोस्तर्योर्नायिका-नायकयोर्दूरं गतयोरपि निकटसुखानि समीपे यानि सुखानि भवचिन्तानि-अभवन् जातानीत्यन्वयः। अत्रापि सख्या नेत्राविलासहसितानुभावरूपप्रीतिहेतुक्षितत्वाद्धेतुलक्षितेयं। किञ्च दूरावस्थानरूपप्रतिबन्धके सत्यपि समीपगतसुखलाभरूपकार्योत्पत्तेस्तृतीया विभावनाऽलङ्कारः।।५५।।

कपटवतामपि सरसचलनयनविलासबलानि।
नालंपङ्कजदृग्दृशोर्वारयितुं हसितानि।।५६।।

जदपि चवाइन चीकनी चलत चहूँ दिस सैन।
तदपि न छोड़त दुहुन के हँसी रसीले नैन।।५६।।

कपटवतामिति। पङ्कजेव दृशौ ययोस्तयोर्दृशोः नेत्रव्यापारयोर्हसितानिवारयितुं प्रतिरोद्धुं कपटवतां पिशुनानामपि सरसानि चलानि नयनानां विलासबलानि नालं समर्थानीत्यन्वयः। अत्रापि तयोर्नेत्रव्यापार कृतहसितानुभावरूपहेतोः सखीषु लक्षिततत्त्वद्धेहेतुलक्षिता ज्ञातव्या। किञ्च सरससचञ्चलपिशुनकृत-नयनविलासबलरूपप्रतिबन्धके सत्यपि तयोर्दृग्व्यापारकृतहसिताभावनाभावरूपकायोत्पत्तेस्तृतीया विभावना।।५६।।

जनलक्षस्य समक्षमपि लक्षीकृतं मुदेव।
अक्षियुगं हरिणाक्षि! तव गच्छति मधुपतिमेव।।५७।।

पहुँचति डीठि रन सुमरलौ रोकि सकै सब नाहिं।
लषि लाखन की भीर मैं आपि उहँ चल जाहिं।।५७।।

पुनर्यथा/सख्या नायिकां प्रत्युक्तिः। जनलक्षस्येति हरिणस्याक्षिणीवाक्षिणी यस्या इति तत्सम्बुद्धौ हेहरिणाक्षि। युगं नेत्रद्वन्द्वं कर्तृजनानांनांलक्षं जनलक्षं तस्य समक्षं प्रत्यक्षमपि। लक्षशब्दो-ऽत्रानन्तसङ्ख्यावाचक उपलक्षणात्। मुदा प्रीत्यैव लक्षीकृतं मधुपतिं कृष्णमेव गच्छति प्राप्नोत्यर्थः। अत्रापि नेत्रद्वन्द्वेन हरिलक्षीकरणरूपप्रीतिहेतुलक्षिततत्वात्-हेतु लक्षिता। जनलक्षसमक्षरूपप्रतिबन्धके

सत्यपि मधुपतिलक्ष्यीकरणनेत्रयुगव्यापार–रूपकार्योत्पतेस्तृतीया विभावना। तल्लक्षणं पूर्वोक्तं ज्ञातव्यम्।।५७।।

बालेमाऽस्तुमतिर्नते तथा हरिस्मरणेन।
यथा भृङ्गिकासङ्गतस्त्वं मतिरापि परेण।।५८।।

कबकी ध्यान लगीं लषौ यह घर लगिहै काहि।
हरियतु भृङ्गी कीट लौ मति वोही ह्वै जाहि।।५८।।

पुनर्यथा। बाले इति। हरति हृदयमिति हरिः। हरेःस्मरणं ध्यानं तेन ते मतिर्बुद्धिः तथा हरेरिव मास्तु मा भूयात्। यथा हरिरन्यस्य हृदयं हरति तथा परहृदयहारिणी मतिस्तवापि मा भूयादिति भावः। तद्ध्यानेन तद्रूपतापत्तिर्भविष्यत्येवेति। यथा ध्यानमागतेन हरिणा तव हृदयं हृतं तेनाद्य गृहकृत्याद्यनवधता वर्तते। तद्वद्वबुद्धौ सत्यामस्माकमपि सहचरीणां गृहकृत्यानवधानता कदाचिद् भविष्यति। तस्मात्ते तथामतिमास्विति निषेधस्याशयः यथा येनैव प्रकारेण लोके भृङ्गिका कीटविशेषषोऽत्यन्तभ्रमणशीलः तत्सङ्गतेन परेणान्येनापि कीटेन तन्मतिराप प्राप्तः सोऽप्यत्यन्त-भ्रमणशीलोऽभवदित्यर्थः। अत्र हरौ हृदयाहारिणी मतिरित्युपमान–वावाक्यार्थस्य च यथा तथा शब्दाभ्यामैक्यारोपान्निदर्शनालङ्कारः। वाक्यार्थयोः सदृशयोरैक्या रोपो निदर्शमिति लक्षणात्। तथा ते मतिर्मास्वित्विति निषेधस्तु–ऐक्यारोपसद्भावपरिपोषक एवेति। किं च हरिध्यानस्थां राधिकां दृष्ट्वा-अप्रस्तुतभृङ्गिकाकीटभ्रमणकारि मतिप्राप्ताऽपरकीटेनोपमानेन हरिध्यानस्थ नायिकायाश्चो–पमेयभूतायाः परस्परं विभिन्नधर्मवत्वेऽपि सादृश्यादभेदरूपबिम्बप्रतिबिम्बभावरूपधर्ममुपादाय दृष्टान्तालङ्कारश्च। 'स्याद्बिम्ब प्रतिबिम्बत्वं दृष्टान्तरत्तदलङ्कृतिरि'ति लक्षणात्। वस्तुतो भिन्नयोरपि उपमानोपमेयर्धर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालङ्कारिकसमय इति। किञ्च निदर्शनदृष्टान्तयोर्नीरक्षीर न्यायेन नैकीभावात्सङ्कर एवेति दिक्।

**टिप्पणी**–यहाँ भाषा में मति शब्द निषेधार्थक है। इसलिए ध्यान करने से, वो ही अर्थात् तद्रूपमत हो जाहि यही अर्थ निकलता है, यही अर्थ बिहारी कवि को इष्ट और जहाँ पर वेदान्त ग्रन्थों में भृङ्गकीटक दृष्टान्त दिया है वहाँ तद्रूप हो जाने का ही है न कि उसकी बुद्धि को प्राप्त होने का है। इसलिए संस्कृत में तन्मतिराप के स्थान पर 'तत्त्वं प्रापि' यह पाठ उचित है।।५८।।

मन्दीकृतलज्जाभयं चित्रितेव न चलासि।
कं पश्यसि वद राधिके ध्यानं किमपि गताऽसि।।५९।।

अचल सी ह्वै मनौलिषी लिखी चित्र की आहि।
तजै लाज डर लोक की कहौ विलोकत काहि।।५९।।

पुनर्यथा। मन्दीकृतेति। राधिके! राधितुमाराधयितुं योग्या तत्सम्बुद्धौ राधिके! इति सख्या

उक्तिः। चित्रिता चित्रोल्लिखिता इव न चलसि स्थगिताऽसि, किमप्यनिर्वचनीयं ध्यानं गतासि। लज्जा च भयञ्च लज्जाभये मन्दीकृते तनूकृते लज्जाभये यया सा कं पश्यसि-इत्यन्वयः। अत्र चित्रोल्लिखिता इवेत्यनुक्तास्पदा वस्तूत्प्रेक्षालङ्कारः। हर्षजः स्तम्भः। स्तम्भो हर्षभयाश्चर्यविषादा-हर्षसम्भवः। तत्र वाक्यादिराहित्यं नैश्चल्यं नूतनादिकृद्-इति लक्षणात्। ध्यानप्राप्त हरियंयोगजन्मा हर्षः अत्रापि प्रीतिहेतुर्लक्षितत्वाद्धेतुलक्षितेयम्।।५९।।

निश्ललमीलितलोचने कं चिन्तयसि चिराय।
कुत्र मनः स्थगिताऽसि किं ध्यानश्लेषसुखाय।।६०।।

पल न चलै जकि सी रही थकि सी रही उदास।
अबहीं तन रित यौ कहौं मन पठयौ किहि पास।।६०।।

पुनर्यथा। निश्चले स्थिरीकृते मीलिते लोचने यस्याः सा तत्सम्बुद्धौ चिराय चिरकालेन कं चिन्तयसि इति सख्या पृष्टेन-उवाच तदा पुनः पृच्छति। किमिति परिप्रश्ने। ध्यानेन यो श्लेषः संयोगः तेन यत्सुखं तस्मै तत्प्राप्तुमित्यर्थः। स्थगितासि निश्चलासि। तत्कथय-सत्याशयः। अत्रापि हेतुलक्षितस्तम्भसात्विकभावः। चिन्तासंचारिभावश्च। ध्यानं चिन्ता हितानाप्तेरिति लक्षणात्।।६०।।

श्रुते यदभिधाने गतिस्तनुमनसोरन्यैव।
भवति न तद्धितगोपनं कुपितकनीनिकयैव।।६१।।

नाउँ सुनत ही ह्वै गयौ तन औरे मन और।
दबै नहीं चित चढ़ि रह्यौ कहाँ चौरैयै त्यौर।।६१।।

पुनरपि हेतुलक्षितामाह। श्रुति इति। हे बाले! इति-सम्बुध्यनुकर्षः सखीवाक्य प्रकरणस्थल त्वात्। कुपिता कोपं प्राप्तेव या कनीनिका नेत्रतारकातयैव तस्य हितस्य प्रेम्णः गोपनमपह्नुतिर्नभवति यत् यस्मात् अभिधाने नाम्नि श्रुते सति तनोर्मनसश्च गतिरन्यैव विलक्षणा बभूवेति क्रियापदस्याक्षेपः। मयोच्चारिते तस्य नाम्नि सात्त्विकाद्याविर्भावात् तनुमनसोविलक्षणत्वं जातमित्यर्थः। एतेन हेतुलक्षितेयम्। अन्यैवेति तस्यैवान्यत्ववर्णनात् भेदकातिशयोक्तिरलङ्कारश्च।।६१।।

परिपृष्टा रुष्टा नु किं हरिकामे मामेव।
त्वयि रोमाञ्चमिषेण यद्धरिद्युतिः प्रथितेव।।६२।।

पूछै क्यौ रूषी परति सगवग रही स्नेह।
मनमोहन छवि परगटी कहै कट्यानी देह।।६२।।

पुनर्यथा। परिपृष्टेति। हरिं कृष्णं कामयते हरिकामा तत्सम्बुद्धौ हे हरिकामे! मया परिपृष्टा सती किं रुष्टा रोषं प्राप्ता। त्वयि तवदेहे। हरेः कृष्णस्य द्युतिः प्रभा यद् यस्मात् प्रथितेव प्रकटभूतवे चकासेति क्रियाक्षेपः। अतो न कोपे तत् प्रीतिगोपनं संभवति। रोमाञ्चादिसात्त्विक भावाविर्भावदर्शानात्

प्रीत्युकर्षो व्यज्यते-इति भावः। अत्रापि हेतुलक्षिता 'विषादोत्साहहर्षेभ्यो भयादाश्चर्यतोऽथवा। रोम्णामभ्युद्गमो देहे रोमाञ्चः स्याच्च शीततः।' इति लक्षणात्। हर्षजो रोमाञ्चसात्त्विकः हर्षसञ्चारी भावः। 'इष्टावाप्त्या तु मनसः प्रसादो हर्ष संज्ञकः'-इति। अत्र कैतवाभिघायिनामिषेणेति पदेन रोमाञ्चमपह्नुतित्यहरिद्युतेरारोपः कैतवायपह्नुतिरलङ्कारः। 'कैतवापह्नुतिर्व्यक्तौव्याजाद्यैर्निह्नुतैः पदैः'-इति लक्षणात्।।६२।।

स्नेहेनाचलताऽबले देहेनाऽचलतापि ।
तव दृक् प्रथयति हृद्गतं चेतोहरं तथापि।।६३।।

प्रेम अडोल डलै नहीं मुष बोलै अनषाइ।
चित उनकी मूरति बसी चितवन माहि लषाइ।।६३।।

पुनर्यथा। स्नेहेनेति। हे अबले! इति सख्योक्तिः। नचलतीत्यचलन् तेन-अचलतास्थिरेण स्नेहेनप्रेम्णा अपि पुनःअचेता थिरीभूतेन देहेनहेतुना तव हृदिगतं चेतोहरं मनोहरम् प्रियमिति यावत् दृक् दृष्टिः प्रथयति प्रकटीकरोति-इत्यन्वयः। यद्वा। अचलता निश्चलेन स्नेहेन सहेतिसहार्थे गम्यमाने तृतीया। देहे न अचलस्य भावः अचलता स्थिरता अपि प्राप्ता अत एव तव हृदयं चेतोहरं दृक् प्रथयतीति भावः। मुखनेत्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मन इति वचनात्। एतेन ध्यानदशायां हृदि हरिस्थितितदङ्कसङ्गानन्दाद् देहेऽपि स्थिरता जातेति निष्कर्षः। अत्र स्तम्भः सात्विकभावः। स्तम्भो हर्षेत्यायुद्यक्तलक्षणात्। यद्वा-अचलतादेहेन सह स्नेहेन अचलता स्थिरता प्राप्तेति पक्षान्तरम्। ध्याननिष्ठा चलदेहेन स्नेहस्यापि स्थिरजातेत्यर्थः। यद्वा हे अबले! तव स्नेहेन प्रेम्णि-अचलस्वभावः अचलता जड़ता न वर्तते किन्तु मृदुतेति देहेन तु अचलता जडता अपि प्राप्तेत्यद्भुतत्वं दृक् दृष्टिर्नेत्र व्यापार इति यावत्। प्रथयति अपि पुनः तथा तेनैव प्रकारेण तव हृद्गतं चेतो हरं प्रथयति प्रकटीकरोतीत्यर्थः। अत्र त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकमिति लक्षणात्' पदार्थावृत्तिदीपकालङ्कारः, श्लेष इति लक्षणात्-श्लेषालङ्कारः।।६३।।

त्वं न विधेहि विमुक्ततां बहुकपटाचरणेन।
समाचरेदपराधिनं दृग्वन्दीकरणेन।।६४।।

तू मति मानै मुकुतई कियै कपट चित कोटि।
ज्यों गुनहीं त्यौं राषिये नैननि माह अगोटि।।६४।।

पुनरपि हेतुलक्षितामाह। त्वमिति। हे बाले! बहुकपटाचरणेन अनेकविधिकपटक्रियया विमुक्तस्य भावो विमुक्तता स्वस्थचित्तता तां न विधेहि मा कुरु मम कपटचातुर्यं कोऽपि न जनातातीत्यतिगर्वेण स्वस्था मा भवेति भावः। सहचरीषु कपटाचरणं केनापि न कृतं त्वयाकृतमिति सापराधां मत्वा लौकिक दृष्टान्तेन दृढयति। पश्येत्यध्याहारः। अपराधिनं सागसं जनं दृशा वन्दीकरणं दृग्वन्दीकरणं तेन दृङ्निरोधेन समाचरेत् सम्यक्तया रक्षेतदिति लोकविधिः। एतेन तव कपटपाटवं दृष्ट्वा अहमपि

दृङ्निरोधेन समाचरामीति भावः। तव कापट्यं सर्वं मया दृष्टमिति परपुरुषानुरागहेतोर्लक्षितत्वात् हेतुलक्षिता बोधव्या अत्र त्वं स्वस्थचित्ततां मा विधेहि तवकापट्यं मया ज्ञातमिति विशेषार्थः। अपराधिनं दृग्वन्दीकरणेन संरक्षेदितिलोकोपदेशरूपसामान्येन दृढीकृतस्तस्मादर्थान्तरन्यासालङ्कारः। 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' तस्मादर्थातरन्यासालङ्कारः। अत्र केचित् समर्थनसापेक्षस्यार्थस्य समर्थनेकाव्यलिङ्गं निरपेक्षस्यपि प्रतीति वैभवात्समर्थनेर्थान्तरन्यास इति काव्याङ्गार्थान्तरन्यासयोर्विवेकं कृतवन्तस्तस्मादत्र काव्यलिङ्गमेवास्तु। तत्रोच्यते-'अर्थान्तरन्यासे हि विशेषस्य सामान्येन समर्थनापेक्षत्वेऽपि सामान्यं विशेषणेन समर्थनमपेक्षत एव निर्विशेषं न सामान्य मिति न्यायेन बहूनामप्यसाराणां संयोगः कार्यसाधकः। तृणैरावध्यते रज्जुस्तेन नागोऽपि बध्यते इत्यादिषु विशेषेण सामान्यसमर्थनस्थले क्वचित्सामान्येन विशषे समर्थनस्थलेऽपि काव्यलिङ्गतापत्तिः स्यात्। सामान्यस्य सर्वत्रलोकसम्प्रतिपन्नत्वनियमाभावात्। वस्तुतस्तु प्रायोवादोऽयम् सामान्यविशेषयोः केनचित्सम्बन्धेन सहोक्तिरर्थान्तरन्यासः। नैरपेक्ष्यसमर्थने काव्यलिङ्गमिति सिद्धान्त इति दिक्। यद्वा। हे बाले-इति सख्या उक्तिः। दृशा वन्दीकरणेन निरोधेन तस्य नायकस्य प्रकरण वशादाक्षेपः। विमुक्ततां स्वस्थचित्ततां न विधेहि मा कुरु किन्तु सदैव तस्य दृशानिरोधः कर्त्तव्य इति भावः। तत्र लोकाचारं प्रमाणयति। अपराधिनं बहुकपटाचरणेन समाचरेत्। कपटपाटवेनैव तस्य प्रीतिराधिक्यन्यूनता-वगन्तव्या दृङ्निरोधादिना नहि समक्षं किञ्चिद् वक्तव्यमित्यर्थः। यद्वा शिष्यं प्रति गुरोरुक्तिः। बहुकपटाचरणेन विमुक्तानां भावो विमुक्ततायोगीश्वरता तां न विधेहि। किन्तु निष्कपटेन ईश्वरं भज ततो विमुक्ता भविष्यतीति भावः। अपराधिनं जीवं यद्वाऽहङ्कारं दृङ्निरोधेन दृगादीन्द्रियनिरोधेन समाचरेदिति।।६४।।

**धृतमाले बाले दृढा भक्तिरद्भुता भाति।**
**तव कदम्बमालायते यत्तनुरतमनुयाति।।६५।।**

**यह मैं तोही मैं लषी भगति अपूरव बाल।**
**लहि प्रसादमाला जुभौ तनुकदम्ब की माल।।६५।।**

पुनर्यथा। धृतमाल इति। हे बाले-इति सख्या उक्तिः। धृता माला यया तत्सबुद्धौ तव दृढा भक्तिर्भाति भक्तानां पूजनोत्तरप्रसादरूपाधारणं तद्भक्ति दृढीकरणार्थमुचितमेव एवमपि भक्तिदार्ढ्येऽपि ते भक्तिरद्भुता लोकोत्तरा शोभते तदाह। यदिति। कदम्बकुसुमानि सकण्टकानीव भवन्ति तवापि तनुमूर्तिस्तदाचरतीत्यद्भुतं सरोमाञ्चा भातीति भाव;। भक्तानाञ्च महाप्रेमानन्दे प्रसादलाभे रोमाञ्चितत्वमित्यर्थः। कीदृशी तव तनुः-अतनुयुता कामाक्रान्ता। एतेनातिशयभक्तिदार्ढ्याद्भुतत्व-प्रशंसनेन तन्मूर्त्तेः कदम्बकुसुममालोपमया च तन्मित्रदत्तैव माला नहि देव पूजाप्रसाद-लब्धेत्युक्तेस्तात्पर्यान्तरवर्णनच्छलेन तन्मित्रस्पर्शजनितरोमाञ्चलक्षणसात्त्विकभाव दर्शनाद्धेतुलक्षितेयम्। अत्र तत्तनुरूपोपमेयस्यकदम्बमाला रूपोपमानस्य च इवेत्युपमा वाचकेनकण्टकिताकारसाधारणधर्मेण च सहाऽनुपादानाद् धर्मवाचक लुप्तोपमालङ्कारः। वर्ण्योपमानधर्माणामुपमावाचकस्य च।

एकद्विव्यनुपादानैर्भिन्नतालुप्तोपमाष्टधेतिलक्षणात्। अत्र शब्दार्थोभयशक्तिसम्भव संलक्ष्यक्रमव्यङ्ग्यरूपो ध्वनिः। भक्तिदादूर्यप्रशंसनेनाद्भुतत्व प्रशंसनेन च वस्तुना कदम्बमालायत इत्युपमालंकारेण च परपुरुषानुरागरूपं वस्तु व्यज्यते-इति सख्यभिप्रायः। तल्लक्षणं तु साहित्यदर्पणे। शब्दार्थोभयशक्त्युथे व्यङ्ग्येनुस्वारसन्निभे। 'ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः।' क्रमलक्ष्यत्वादनुरणनरूपो यो व्यापारस्तस्य शब्दस्य शक्त्युद्भवत्वेनार्थ शक्त्युद्भवत्वेनोभय-शक्त्युद्भवत्वेन त्रैविध्यत्संलक्ष्यक्रम-व्यङ्ग्यनाम्नोध्वनेः काव्यस्यापि त्रैविध्यमित्यर्थः। तत्र वस्त्रालङ्कारस्रूप-त्वाच्छब्दशक्त्युभवोद्विधा। अलङ्कारे शाब्दपृथगुपादानादनलङ्कारं वस्तुमात्रं गृह्यते-इति दिक्।।६५।।

दृष्ट्वा नभसि कपोतकं कीर्तिं तस्य तनोषि।
वद विकसितवदनं कथं रोमाञ्चितं तनोषि।।६६।।

ऊँचै चितै सरहियतु गिरह कबूतर लेत।
झलकित दृग प्रफुलित वदन तन पुलकित किहि लेत।।६६।।

पुनर्यथा। दृष्टवेति। नभसि गगने कपोतकं कपोतबालं दृष्ट्वा तस्य कीर्तिं चक्राकारगतिचातुर्य-कलाकौतुक-रूपां तनोषि विस्तरद्वर्णयसि हे बाले-इति पूर्वसम्बुद्धानुकर्षः। विकसितवदनं यथा भवति तथा सहसितवदनमिति यावद् रोमाञ्चितं कथं चिनोसि वर्द्धयसीति वद-इति सख्या-उक्ते प्रियस्यायं कपोतक इति तत्कलाकौतुकोड्डीनदर्शनोद्भूतरोमाञ्चितरूपसात्विकहेतोर्लक्षितत्वाद्धेतुलक्षितेति भावः। अत्रव्याजोक्तिरलङ्कारः। रोमाञ्चितहेतौ सख्यापृष्टे सहसितवदनक्रियया कपोतककीर्त्तिवर्णनेन तत्प्रीतिगोपनमिति लक्षणानुगतिः। किञ्च छेकापह्नुतिरेवास्तु। तत्रायमनयोर्विशेषः। छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवेइति लक्षणात्-छेकापह्नुतिरेवास्तु। तत्रायमनयोर्विशेषः। छेकापह्नुतौ वचनस्यान्यथानयनेनापह्नवः। अस्यां तु हेत्वान्तरेणाकारस्यगोपनमिति भेदः। सख्यास्तु तत्प्रियप्रीतिहेतुक रोमाञ्च भ्रमरूपःप्रश्नः। तया कृते कपोतकीर्तिवर्णनेतत्कलाकौतुकगतिदर्शनजनितोत्साहसम्भवोऽयं रोमाञ्च इत्याकारस्यगोपनादिति।।६६।।

चतुर प्रेम न गोपितुं शक्यं यत्नशतेन।
प्रथिता तव सस्नेहता नवकोपागमनेन।।६७।।

कोटि जतन कीजे तऊ नागर नेह दुरैन।
कहै देत चित चीकने नई रुषाई नैन।।६७।।

पुनर्यथा। चतुरेति। हे बाले! इतिपूर्वसम्बुद्ध्यनुकर्षः। सख्या-उक्तिः-चतुराणां प्रेम। यत्नानां शतं यत्नशतं तेन करणभूतेन गोपितुं न शक्यम्। प्रेम्णि सञ्जाते चतुराणां सम्पूर्णरतिभावाभिज्ञतया संयोगवियोगावसरे तत्तदनुभावप्राप्तसात्त्विकादिसङ्गोपनाय नूतनचातुर्यकलाविरचनात् कथमपि गोपनं

न भवतीति भावः। ग्राम्याणां तु तादृश रतिभावानुभावाऽनभिज्ञता प्रीत्युकर्षं जनितप्रमोदादिलक्षणानां चातुर्यं विनैव प्रतीतेरिति फलितोऽर्थः। तव तु तव तु सस्नेहता सप्रेमता नव कोपागमनेन प्रथिता प्रतीतिं गतेत्यर्थः। मुखनेत्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मन इतिवचनात्। अत्रापि नव कोपागमनरूप प्रीतिहेतोर्लक्षितत्त्वाद्हेतुलक्षिता। नवकोपरूपहेतुना सहचरीष्वपि प्रीत्याकारेसङ्गोपनाद्व्याजोक्तिरलङ्कारः। व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपन मिति लक्षणात्।।६७।।

सर्वा देवरपरिणये ता हर्षयुता विहसन्ति।
किं वधु तव वदनप्रभा मालिन्यं प्रतियन्ति।।६८।।

और सभी हरषीं हसैं गावैं भरी उछाह।
तुहीं बहू विलषी फिरौं कत देवर के व्याह।।६८।।

पुनरपि हेतुलक्षितामाह। सर्वा इति। सख्योक्तिः। देवरस्य ममेति शेषः। यद्वा तवैवेति। परिणये विवाहे हर्षेण युताः सर्वाः समीपवासिन्यो विहसन्ति परिहासं कुर्वन्ति। वैवाहिकोत्साहभरणेति भावः। हे वधु! तव वदनप्रभाः मुखकान्तयः किमिति परिप्रश्ने मालिन्यं प्रतियन्ति प्रतिगच्छन्तीत्यवयः। अत्र सख्या देवरविवाहे मुखमालिन्यरूपौदासीन्यधारणात् भाविसपत्नीसंयोगतज्जनितदुःखमनुमीयते तेन च तत्प्रीतिहेतोर्लक्षितत्वात्–हेतुलक्षितेयमित्यर्थः। यदा तस्या एव देवरस्तदापि हेतुलक्षिता। किन्तु देवरानुरागस्य–अनौचित्य रतिभाव प्रवृत्तिलक्षणत्वाद्रसाभासदोषापत्तिस्तत्राह। यस्या देवरः सैव वक्ति अन्यां समीपवासिनीं प्रति व्यावहारिकरीत्या वध्विति सम्बोध्य तद्वदनमालिन्यहेतुलक्षणात् तत्प्रीतिर्व्यज्यत इति भावः। अत्र सख्या देवरविवाहरूपगुणेन मुखमालिन्यरूपदोषप्राप्त्या उल्लसालङ्कारः। 'यदान्यगुणदोषाभ्यामुल्लासो न्यस्यते यदि।' इति लक्षणात्। लक्षितायास्तु परकीयाभेदेषु परिपठित त्वात् परकीयैवेयमिति दिक्।

युग्मेयं तिथिरुत्तमा नयन सुखं विदधाति।
यत्राऽपूर्व सुधानिधिः पूर्वदिशि प्रतिभाति।।६९।।

धनि यह द्वैज लषौ जहाँ तज्यौं दृगन दुषदन्त।
तव भगिनी पूरव उवौ अहो अपूरव चन्द।।६९।।

पुनर्यथा। युग्मेति। अन्यां परकीयां पूर्वदिशावस्थितहर्म्यस्थनायकमुखचन्द्रदर्शनलुब्धां दृष्ट्वा सखी सखीं प्रति लक्षयन्ती प्राह–हे सखि! इयं युग्मातिथिः द्वितीया तिथिः सर्वातिथिष्विति शेषः। उत्तमा श्रेष्ठा यतो नयनयो सुखं विशेषेण दधाति पुष्याति–इति–अनेन–ऊर्ध्वं पश्येत्युक्तं भवति। यत्र तिथौ पूर्वदिशि–अपूर्व सुधानिधिरद्भुतचन्द्रः प्रतिभाति, एतेन पूर्वदिगवस्थानहेतुना नायकवदने पूर्णचन्द्रत्वोपाद् द्वितीयातिथौ तद्भावाच्चाद्भुतत्वमितिभावः। अत्र युग्मेयं तिथि रुत्तमेति स्त्रीलिङ्गेन पूर्वदिगवस्थितपूर्वसुधानिधिशब्दगतपुल्लिङ्गेन च सार्धावरणवसनावृतवदनच्छविरूपोपमानरूपयुग्मतिथि–चन्द्रसदृशनायिकामुखप्रतीतिवैभवात् पूर्वादिग्गतहर्म्यस्थसम्पूर्णकलानिधिरूपोपमानरूपापूर्वचन्द्र

सदृशनायकवदनप्रतीतिवैभवाच्च परस्परावलोकनासक्तनायिकानायकवृत्तान्तः प्रतीयते तेन समासोरिलङ्कारः। 'समासोक्तिःपरिस्फूर्तिः प्रस्तुतेऽप्रस्तुतेस्य चेदिति लक्षणात्। इयं समारोपात्समासोक्ति-र्ज्ञातव्या। प्रस्तुतयुग्मतिथौ चन्द्रदर्शनमाहात्म्योपदेशेनाऽप्रस्तुतनायिकानायककृताकृतान्तसमारोपस्य चारुतातिशयप्रतिपादकत्वात्। यदा चोभयोः प्रस्तुतत्वं तदा प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुर इति लक्षणात् प्रस्तुताङ्कुरालङ्कारः।।६९।।

वामे! कथमपि वामता प्रकृतिस्ते नापैति।
हृदि स्नेहवत्यपि धृता रुक्षत्वं समुपैति।।७०।।

एरी यह तेरी दई कैहू प्रकृति न जाइ।
नेह भरे हिय राषियै तूँ रुषियै लखाइ।।७०।।

पुनर्यथा। वामे! इति। ते तव वामतया कुटिलतायाः प्रकृतिः कथमपि केनापि प्रकारेण नापैति न गच्छति। मया स्नेहवति सप्रीतिके हृदि मनस्यपि धृतास्थापिता सती रुक्षत्वं समुपैति गच्छतीत्यन्वयः। अत्र परपुरुषानुरागवार्तां पृच्छन्तीं सखीं प्रति दया तद्गोपनायरुक्षत्वं प्रदर्शितमिति तत्प्रकृतेर्वामिता रुक्षत्वातिशय प्राकट्येन परपुरुषप्रीति हेतोर्लक्षितत्वाद्धेतु लक्षिता। अत्र च सस्नेहमानसे तदवस्थानरूपप्रतिबन्धके सत्यपि रुक्षत्वकार्योत्पत्तेस्तृतीया विभावनालङ्कारः। यद्वा, मानिनीं प्रति सख्या उक्तिः। हेवामे। हे सुन्दरि! ते तव वामताया प्रकृतिः कथमपि नापैति। सस्नेहमानसे तेन प्रियेण घृताऽपि रूक्षत्वं समुपैति। अनुनयशतेनापि ते मानव्यपगमो मया न दृष्ट इति भावः। लोके हि सस्नेहकस्थानावस्थानत्वे न रूक्षात्वाभावो भवति। तव तुनेति प्रकृतेवमितातिशय इत्यर्थः। स्नेहशब्दे श्लेषमहिम्ना विरोधपरिहारः। एतेन विरोधाभासोऽलङ्कारः। 'आभासश्चेद्विरोधस्य विरोधाभास इष्यते।' इति लक्षणात्। वामा सुन्दरमूढयोरित्यमरः। अत्र च स्नेह शब्दस्थश्लेषमहिम्नाऽलङ्कार द्वयस्यापि प्रतीतेनीरक्षीरन्याये नैकीभावाद्विभावनाविरोधाभासयोः सङ्कर इति दिक्।।७०।।

लोचनयुगमाजीवनं तव लग्नं सह तेन।
कर्त्तुं क्षमा विभिन्नता कथय कथय सखि केन।।७१।।

नैन लगे तिहि लगन जू न छुटैं छुटैहु प्रान।
काम न आवत एकहू तेरे सैक सयान।।७१।।

पुनरपि हेतुलक्षितामुदाहरति। लोचनेति। तव लोचनयोर्युगमाजीवनं जीवनमभिव्याप्य-जीवनपर्यन्तमिति यावत्। तेनेति तच्छब्देन मित्रो गृह्यते सह लग्नं तद्रूपदर्शनाभिलाषीत्यर्थः। हे सखि! युवयोर्विभिन्नता यद्वा त्वन्नेत्रयुगतद्रूपयोर्विभिन्नता पृथग् भावः केनान्येन क्षमा। यद्वा केन हेतुना क्षमा न केनापीत्यर्थ;। इति कथय-कथय-इत्यादरे वीप्सा। तव चातुर्यं मया ज्ञातं तत्प्रीतिहेतु-गोपनं कथमपि न भवतीति फलितोऽर्थः। अत्र च जीवनपर्यन्तं त्वन्नेत्रयुगयोस्तद्रूपलग्नत्वेन

तत्प्रीतिर्व्यज्यते तेन हेतु लक्षितेयम्। अत्र तद्विना केन कर्त्तुं क्षमेति कथय-कथयेत्यादरपूर्वक प्रश्नेन न केनापीति काक्वा च तत्प्रीतेव्यज्यमान त्वाद्वक्रोक्तिरलङ्कारः। वक्रोक्तिः श्लेषकाकुभ्यापरामर्शत्वकल्पनमिति लक्षणात्।।७१।।

अन्या गतिरन्यद्वचो वरदच्छविरन्यैव।
जाने प्रियमनसि स्थितामक्षिकनीनिकयैव।।७२।।

औरै गति औरै वचन भयो वदन रँग और।
घौसकतै पियचित चढ़ीं कहै चढ़ौहै त्योर।।७२।।

पुनर्यथा। अन्येति। हे बाले! इति पूर्वसम्बुध्यनुकर्षः। तव गतिरन्या विलक्षणा वचोऽन्यदेव वदनस्य मुखस्यच्छविः कान्तिरप्यन्यैव अक्षिकनीनिकयैव हेतु भूतया विलक्षणया त्वां प्रियस्य मनसि स्थितामहं जाने-इत्यक्षिकनीनिकाया वैलक्षण्याद्धेतुलक्षिता। भेदकाशयोक्तिः स्यात्तस्यैवान्यत्वर्णनादिति लक्षणाद्भेदकःति अशयोक्तिरलङ्कारः।।७२।।

किं करोषि विमुखं मुखं चित्तं सन्मुखमेव।
इति दृष्ट्युद्भवपृथुगतपुलकं प्रथयत्येव।।७३।।

रहि मुँह फेरि कि हेरिइत हित समुहैं चित नारि।
डीढि परत उठि पीठि के पुलके कहत पुकारि।।७३।।

पुनर्यथा हे बाले! इतिसम्बुद्ध्यनुकर्षः सख्या उक्तिःमुखं वदनं विमुखं किमिति करोषि। मां पृष्टतः कृत्वा किमर्थमन्यत्रव्यापारयसि तव चित्तं मानसं तस्य प्रियस्येत्याक्षेपः सन्मुखमेव वर्तत इति चित्तसामुख्यं तद्दृष्टिपातसम्भूतत्वपृष्टगतं पुलकं रोमाञ्चं प्रथयत्येव प्रकाशयत्येवेत्यर्थः। अत्र दृष्टिपातसम्भूत पृथुगतपुलकदर्शनहेतोर्लक्षिततत्वाद्धेतुलक्षिता। वैमुख्यरूपप्रतिबन्धके सत्यपि चित्तसाम्मुख्यहेतुना दृष्ट्युद्भव-पृष्टगतरोमाञ्चरूपकार्योत्पत्तेस्तृतीया विभावना।।७३।।

बाले! यत्र मनोगतं किं नालिङ्गसि तेन।
शमं नोपैति वाडवो विना समुद्रजलेन।।७४।।

वे ठाढे उमदाउ उत जल न बुझै वडवागि।
जाही सौ लाग्यो हियौ ताही के हिय लागि।।७४।।

पुनर्यथा। उपपतिं दृष्ट्वा कामाग्निसन्तापतप्तां सखीमालिङ्गन्तीं नायिकां प्रति सख्योक्तिः। हे बाले! इति। यत्र ते मनोगतं प्राप्तं तेन प्रियेण किं नालिङ्गसि। ममालिङ्गनेन नैतत्तापशान्तिर्भविष्यति-इति भावः। एतल्लोकदृष्टान्तेन प्रढयति। इह-अस्मिन् लोके समुद्रजलेन विना वडवानलः शमं शान्तिं नोपैति न प्राप्नोतीत्यर्थः। अत्र 'लोकप्रवादानुकृतिर्लोकोक्तिरितिमन्यते'-इति

लक्षणाल्लोकोक्तिरलङ्कारः। यथा समुद्रेतरजलप्रशनेन हि वाडवाग्निशान्तिस्तथा ममालिङ्गनेननैतत्काम-जन्यतापशान्तिरिति बिम्बप्रतिबिम्बभावाद् दृष्टान्तालङ्कारोऽपि। 'स्याद्विम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिरिति लक्षणात्।।७४।।

सानन्दं रमितासि यत्सुन्दरि नन्दसुतेन।
तत्कथितं ते शाटिका सङ्कुचितेनानेन।।७५।।

नटि न सीस सावित भई लुटी सुखन की मौद।
चुप करिये चोरी करत सारी परी सरौट।।७५।।

सौरतलक्षितामुदाहरति सानन्दमिति। हे सुन्दरि! इति सख्योक्तिः। सानन्दं यथा भवति तथा नन्दसुतेन श्रीकृष्णेन यत्त्वं रमिताऽसि क्रीडिताऽसि तत् ते तव रमणम्-अनेन शाटिकाया, सङ्कुचितेन कथितं भवति सूचितं भवतीत्यर्थः। अनेनेत्युङ्गुल्या निर्देशेन नूतनकृत सौरतलक्षणसौरतलक्षितेयम्। अत्राचेतनस्य शाटिकाया सङ्कुचितेनैव कथितं त्वमावदेति भावः। इह तु वाच्यस्य प्रस्तुतत्वेन तत्राभिधायां पर्यवसितायामर्थसौन्दर्य-बलेनाभिमतार्थव्यक्तिध्वनिरेव नहि कश्चिदलङ्कार इति तन्न। उक्तं हि ध्वनिकृता-'शब्दार्थ शक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थ कविना पुनः। यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालङ्कृतिध्वनेः।' इति। यत्र कार्येण कार्यस्यावगमनं भवति तत्रानुमानालङ्कार एव यथा-

परिम्लानं पीनस्तनजघनसङ्गादुभयातस्-
तनोर्मध्यस्यान्तः परिमलिनमप्राप्यहरितम्।
इदं व्यस्तन्यासं प्रशिथिल भुजक्षेपचलनैः
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम्।।

इत्यादाविवेति दिक्।।७५।।

न सञ्चरिष्यति चातुरी सखी कथमपि कपटेन।
यत्प्रीतिः प्रथिता जने शिशिरस्वेदजलेन।।७६।।

मो सौं मिलवत चातुरी तूँ नहि मानत भेव।
कहै देत यह प्रगटिहीं प्रगट्टो पूस पलेव।।७६।।

पुनर्यथा नेति। हे सखीति सख्योक्तिः। कथमपि कपटेन तव चातुरी न संचरिष्यति। यत् यस्मात् शिशिरे स्वेदजलं शिशिरस्वेदजलं तेन जने-इति। जात्यमिप्रायेणैकत्वं प्रीतिः परपुरुषानुराग-रूपप्रथिता प्रकाशं गतेत्यन्वयः। अत्र शिशिरर्त्तावहेतुस्वेदवारि प्रसक्त्य भावात्तत्प्रीतिप्राकट्यमिति-कार्यमुखेन कारणावगत्यानुमानालङ्कारः। स्वेदजलरूप प्रत्यक्षसौरत चिह्नदर्शनात् सुरतिलक्षितेयमिति दिक्।।७६।।

जागरणं कृतमङ्गने! निशि सत्यं रसिकेन।
जाने तत्पङ्कजनयनहसितविलासबलेन ।।७७।।

सही रँगीले रति जगै जगी पगी सुष चैन।
अलसौं है सौंहे कियैं कहै हसौं है नैन।।७८।।

पुनर्यथा जागरणमिति। हे अङ्गने! रसिकेन प्रियेण सहेति गम्यमाने सहार्थे तृतीया। निशि रजन्यां सत्यं त्वया जागरणं कृतं तत् रसिकेन सह केलिकृतसकलरात्रिजागरणं पङ्कजे-इव नयने तयोर्हसितं विलासाश्च तेषां बलेन-अहं जाने पङ्कजयोपमत्वेन रात्रिकृतजागरारुण्यमनुमीयते। हसितविलासाभ्यां क्रीडितमनुमीयते-इत्यनुमानालङ्कारः। अत्र यदा रसिकशब्देन पतिर्गृह्यते तदा स्वीयैव सुरतलक्षिता बोधव्या। यदोपपतिर्गृह्यते तदा परकीयेति। 'लक्षयेल्लक्षणैर्युक्तां भोगादिविविधैः सखी। गुप्तमुद्घाटयेद्यस्या लक्षिता सा प्रकीर्तिता। इति लक्षणात्।।७७।।

पतिप्रियतया तारिकाऽपरां श्रियं विदधाति।
लज्जावसनसमुज्वला मणिप्रभेव विभाति।।७८।।

औरे ओपकनी निकनि गनी घनी सिरताज।
मनी घनी के नेह की बनी छनी पटलाज।।७८।।

हे सुन्दरीति। पूर्वं सः बुद्धानुकर्षः। पुनर्यथा पतीति। तारिका नेत्रकनीनिका। पत्युःप्रियता पतिप्रियता तया हेतुभूतया परामुत्कृष्टाम्, यद्वा-अपरामन्यामेव श्रियं शोभां विशेषेण दधाति पुष्णाति। केव मणिप्रभेव विभाति शोभते कीदृशी तारिका लज्जा-एव वसनं तेन समुज्ज्वला निर्मलीकृता। कीदृशी मणिप्रभालज्जा इव वसनं तेन समुज्ज्वला उज्ज्वलीकृता। मणि प्रभा तु वसनसमुज्ज्वला शोभते तारिकाऽपि लज्जया निर्मलीकृता लसतीत्यर्थः। अत्र तारिकारूपोपमेयस्य मणिप्रभारूपोपमानस्य च लज्जावसनाभ्यामुज्ज्वल-मणिप्रभेव भासमानत्वेन च पत्युः प्रीतेरुत्कर्षस्वय्येवेति प्रतिपदनात् सुरतलक्षिता बोद्धव्या सा च स्वीयै वेति प्रतिपादनात्।।७८।।

नात्युष्णे न च शीतले मरुति वसन्ते वाति।
कथं धर्मरोमाञ्चिता तव तनुरियं विभाति।।७९।।

इह वसन्त न षरी अरी गरम न शीतल वात।
कहि क्यों झलक्यौ देषि यतु पुलकि पसीजौ जात।।७९।।

पुनर्यथा। हे सुन्दरि! इति सम्बुध्यनुकर्षः। नात्युष्णे इति। वसन्ते वसन्तर्त्तौ। नात्युष्णे न चाति शीते मरुति पवने शीतलमन्दसुगन्धाख्ये त्रिविधे समानसुखे वाति गच्छाति सति-इयं तव तनुः ते मूर्तिः धर्मेण स्वेदजलेन रोमभिश्च अञ्चिता पूजिता कथं विभातीत्यन्वयः। अत्युष्णे मरुति धर्मप्रवृत्तिः, अतिशीते रोमाञ्च प्रवृत्तिः समानवृत्तौ धर्मरोमाञ्चासम्भवात् प्रियेण सहकृतसौरतसम्भवे धर्मरोमाञ्चे-

अवगन्तव्ये इति सखीवचनाभिप्रायः। तेन सौरतलक्षिता समानवृत्तिमारुतागमनरूपप्रतिबन्धके सत्यपि तनोर्धर्मरोमाञ्च-रूपकार्योत्पत्ते तृतीया विभावनाऽलङ्कारः।।७९।।

सुन्दरि! सुरतविपर्ययं प्रच्छादितं छलेन।
प्रिय भालस्थितविन्दुना कथितं जगति बलेन।।८०।।

मेरे बूझै बात तूँ कत बहलावत बाल।
जगजानी विपरीत रति लषि विन्दुली पिय भाल।।८०।।

पुनर्यथा। ये सुन्दरि-इति। सुरतस्य क्रीडितस्य विपर्ययं वैपरीत्यं त्वया छलेन प्रच्छादितं किन्तु प्रियस्य भाले स्थितश्चासौ विन्दु; विन्दुसदृशललाटभूषरं काचादिनिर्मितं तेन जगति संसारे बलेन हठेन कथितमित्यर्थः। अत्रापि प्रियभालस्थितविन्दुना विपरीतरतिवृत्तास्तस्य लक्षितत्वात् सौरतलक्षिता। किं च कपटादिना विपरीतरतिचिह्नप्रच्छादनरूपे प्रतिबन्धके सत्यपि प्रियभालस्य काचादिनिर्मितविन्दुलक्षणेन जगद्विख्यातिरूपकार्योत्पतेस्तृतीया विभावना।।८०।।

श्रुति मण्डनचामीकरद्युतिकपोलसुषमासु।
बभौ विभाऽरुणमणिभवारदनक्षतोपमाऽऽसु।।८१।।

तरवनि कनक कपोल दुति बीचहिं बीच विकान।
लाल-लाल चमकत चुनी चौका चिह्न समान।।८१।।

पुनर्यथा। श्रुति मण्डनेनेति। श्रुत्योर्मण्डने श्रुतिमण्डने तयोर्यच्चामीकरं सुवर्णं तस्या या द्युतयः ताश्च कपोलयोर्याः सुषमाः परमकान्तयश्च-आसु-इत्यङ्गुल्या निर्देशः। श्रुतिमण्डन चामीकर द्युतिकपोलसुषमासु रदनक्षतम्-उपमा यस्याः सा-अरुणमणिभवा विभा आरक्तमणिजा कान्तिर्बभौ चकासे-इति सख्या उक्तिः। एतेन श्रुतिमण्डनचामीकरद्युतीनां कपोलसुषमानां च तुल्यतया भासमानत्व मुक्तं तदन्तर्गता रक्तमणिप्रभाया रदक्षतौपभ्यवर्णनेन नूतनकृतसुरतसम्भवरद क्षतादि चिह्नयुते कपोले इति व्यज्यते तेन सौरतलक्षिता। अत्र धर्मलुप्तालङ्कारः धर्मलोपस्त्वैच्छिकः आरक्ततराऽरुणमणिप्रभेति वक्तुं शक्यत्वात्।।८१।।

कथमपि शशिमुखि! सौरतं गुप्तं प्रभवति नैव।
निमृष्टेऽपि त्वयाऽधरोऽरुणता भाति परैव।।८२।।

सुरति दुराई दुरति नहि प्रगट करत रति रूप।
छुटी पीक औरै उठी लाली औठ अनूप।।८२।।

पुनर्यथा शशिवन्मुखं यस्याः सा तत्सम्बुद्धौ कथमपि केनापि प्रकारेण सौरतं क्रीडितं क्रीडितं तवेति शेषः। गुप्तं प्रच्छन्नं नैव प्रभवति। त्वयाऽधरे निर्निष्टेऽपि निश्शेषेण मार्जितेऽपि परैव-अन्यैव-अरुणता आरक्तत्वं भातीत्यन्वयः। अत्र नायकेन कृताधरपान प्रभूत-ताम्बूलरागानुरञ्जिताधर

निर्मज्जनरूपप्रतिबन्धके सत्यपि उत्कृष्टारुणतानुमिततत्कालीन सौरतलक्षणरूपकार्योत्पत्तेस्तृतीया विभावना। किञ्च-अन्यैवारुणतेति तस्या एवान्यत्वर्णनाद भेदकातिरपि। अनयोः पृथगुपपत्या संसृष्टिरिति दिक्।।८२।।

इति सत्यं रतिललासे सर्वनिशं रमितैव।
मन्दं मन्दं सालसं गच्छसि गर्वयुतैव।।८३।।

रँगी सुरति रँग पिय हियैं लगी जगी सब राति।
पैड़ पैड़ पैठ ठकियै ऐड़ भरी ऐंठाति।।८३।।

पुनर्यथा। इतीति। सख्या उक्तिः। रतौलालसा यस्या इति तत्सम्बुद्धौ। सर्वनिशं यथा भवति तथा। अत्र विभाषासेनासुराच्छायाशालनिशानामिति क्लीब त्वम्। त्वं तेन प्रियेण रमिता-एवेति सत्यं मया निश्चीयते। यतो मन्दं मन्दं सालं गर्वयुतैव गच्छसि चलसीत्यन्वयः। गर्वस्तु सपत्नीदलनाय तत्प्रीतिरेव अत्र रतिलालसे-इति सम्बुद्ध्या मन्द मन्दायमानसालसगमनेन च सकल रात्रिकृतं सौरतं लक्ष्यते तेन सुरतलक्षिता बोधव्या। किञ्च अलङ्कारः परिकरः। 'परिकरः साभिप्रायविशेषणे' इति लक्षणात्। तथा च 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनात्'-इति लक्षरात्। स्वभावोक्तिरपि। अनयोर्नीरक्षीरन्यायेनैकी भावात्सङ्करोऽत्रावगन्तव्यः इति दिक्।।८३।।

लज्जागर्वालसयुतं नयनयुगं हसतीव।
तवप्रभा प्राभातिकी रमणि! रतं वदतीव।।८४।।

लाजगरव आलस उमंग भरे नैन मुसकात।
राति रमी रति देत कहि औरै प्रभा प्रभात।।८४।।

पुनर्यथा। लज्जेति। हे रमणि! कान्ते! लज्जया गर्वेण-आलसेन च युतं तेन यनयोर्युगं हसतीव परिहासं कुर्वदिव लसतीत्यर्थः। किञ्च तव प्राभातिकी प्रभातकालीना प्रभा छविः-रतं क्रीडितं वदतीवेत्युत्प्रेक्षा। अत्र नेत्रयुगस्य लज्जाहङ्कारालस्यपरिहासवत्वरूपप्रभातकालीनप्रभारूपेण हेतुना कान्तेन सर्वनिशं क्रीडितमित्यनुमीयते तेन सुरतलक्षिता अनन्तरङ्गसखीषु तद्गोपनार्थं लज्जा। सपत्नीषु च स्वीयसौभाग्यसूचनार्थं गर्वः। सकलरात्रिजगरेणालस्यम्-अन्तरङ्गसखीषु तदानन्दसन्दोहसूचनार्थं परिहास इति नेत्रयुगे तत्तभावयुक्ता प्रभातकालीना प्रभेति उत्तमा सखी ब्रूते, एतेन स्वीयैवावगम्यत इत्यर्थः। 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनादि'ति लक्षरात् स्वभावोक्तिरलङ्कारः।

सद्यो यद्रदनक्षतं लसति कृतं रमणेन।
बहुवारं वारिजकरे! किं छादयसि करेण।।८५।।

पट के ढिग कत ढापियतु साहत सुभग सुवेष।
हद रद छद छवि देत यह सदरदछद की रेष।।८५।।

पुनर्यथा सद्य इति। वारिजे इव करौ यस्यास्तत्सम्बुद्धौ हे वारिजकरे। बहून् वारानिति बहुवारं यथा भवति तथा यद्रमणेन प्रियेण सद्यः तत्कलं रदनक्षतं दन्तक्षतं कृतं लसति शोभते सौभाग्यातिशयं प्रकाशयतीत्यर्थ; तत् पटेन वस्त्रेण किं छायसि किमर्थं गोपयसीत्यन्वयः। अस्मास्वन्तरङ्गसहचरीषु रमणकृतदत्तक्षतगोपनं न सम्भाव्यमिति भावः। अत्र नायिकाकृतदन्तक्षतसूचितसुरतिप्राकट्य रूपोत्पत्तेस्तृतीया विभावना।।८५।।

पथिक! विरम यमुनातटे मिलददलि पुञ्जं तत्र।
सतमालं मालतिकृतं ललितनिकुञ्जं यत्र।।८६।।

धाम धरी कनि वारिये कलित ललित अलिपुञ्ज।
यमुनातीर तमालतरु मिलत मालती कुञ्ज।।८६।।

(अत्र '**ललित**' शब्दो नियोजितः सम्पादकेन पादपूरणार्थम्)

स्वयं दूतिकामुदाहरति। पथिकेति। अत्र–अस्मिन् ग्रामे पथिकविश्रामस्थलमिति पृच्छन्तं पथिकं प्रति नायिकाया उक्तिः। हे पथिक! हे मार्गस्थ! तत्र यमुनातटे विरम विश्रामं कुरु। यत्र यस्मिन् यमुनायास्तटे मालत्यायुतं जातीपुष्पैर्गभितं मिलत् अलीनां भ्रमराणां पुञ्जो यस्मिन् तत् सतमालं तमालतरुभिर्युतं ललितं रमणीयं निकुञ्जं लतादिगृहं वर्तते–इति क्रियापदस्याक्षेपः। 'निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे'–इत्यमरः। ललितनिकुञ्जमित्यनेन विहारयोग्यस्थलं सूचयति। सतमालमित्यनेन–छायाघनत्वमुच्यते। 'पुष्पे जाती प्रभृतयः स्वलिङ्गाव्रीहयः फले' इत्यमरकोशवाक्यात्–मालतीशब्दोऽत्र मालती पुष्पवाचकः। मालतीपुष्पैर्युक्तमित्यर्थः। एतेन तमालतरूणां मध्ये–मध्ये सपुष्पमालतीलंतायुक्तं निकुञ्जमिति भावः। मिलददलिपुञ्जमित्यनेन मारुतस्यापि सुगन्धत्वं व्यज्यते। तस्य च यमुनातटस्थत्वात्–शीतलत्वं ध्वन्यते। निकुञ्जगतत्वात् मन्दत्वमपीत्यर्थः। किंचात्र पथिकं प्रति निकुञ्जनिर्देशेन वाग्वैदग्ध्यशालि–सङ्केतस्थलसूचकनायिकावचनात् वाग्विदग्धा किन्न स्याद् 'विदग्धाऽपि द्विधा प्रोक्ता वाचापि क्रियया तथे'ति लक्षणात्। स्वयमेव दूतत्वं वाचा चाक्रियया करोतीति स्वयं दूत्या लक्षणमुक्तम्। ननु स्वयं दूती वाग्विदग्धयोः को भेदस्तत्राह भरतः–

स्वयं दूती भवेद् वाण्या पान्थमुत्साहकारिणी।
वाग्विदग्धातु सा प्रोक्ता स्वदेशस्यानुरागिणी।।

इति वचनात्। अत्र पथिकेति सम्बुध्यात्वस्याः स्वयं दूतीत्वमिति भावः। 'किञ्चिदाकूतपिहितं स्याद् गूढोत्तरमि'तिलक्षणाद् गूढोत्तरालङ्कारः।।८६।।

**कण्टकेन सञ्जीविता पदलग्नेनानेन।**
**यन्मित्रेण समुद्घृतं प्रीतिं वदसि भयेन।।८७।।**

**इह काँटे मो पाइ गड़ि लीनी भरत जिवाइ।**
**प्रीति जनावत भीति सौ मीजतु काढौ आइ।।८७।।**

वाग्वैचित्र्येण पुनरपि हेतुलक्षितामाह–कपटेनेति। सखीं प्रति नायिकोक्तिः। पदलग्नेनानेनेत्युङ्गुल्या निर्देशः। कण्टकेनाहं सञ्जीविता यत् यस्मात्–मित्रेण सूर्येण वासमुद्धृतं तदा सञ्जीवितास्मीति एतेन पूर्वं तज्जनितदुःखेन मृता मृतेवजाता पुनर्मित्रकरस्य स्पर्शात्। यद्वा सूर्यकरप्रकाशात् तदुद्धरणे जाते सञ्जीवितेतितात्पर्यः। एतेन रात्रौ लग्नं प्रातरुद्घृतमिति लक्ष्यते। सूर्यकरप्रकाशेन–उद्घृतं तदपि सूर्येणैवोतमिति लक्षणया निर्वाहः। नहि साक्षात्सूर्येण। गत्योद्घृतमित्यर्थः। अत्रमित्र पदे श्लेषः। वास्तवोऽर्थस्तु मित्रेणगत्योद्धृतं तदा सञ्जीवितास्मीति भावः। एतेन पूर्वदिवसकृतसान्धाकाररजन्यभि-सारेण पदलग्नकण्टक–जनितमरणसमदुःखनिवेदनानन्तरं मित्रकरोद्धरणसञ्जीवनसमसुखानुभवकथनं मित्राब्दवाच्यप्रियसूर्य–संयोगद्वारा वाग्वैचित्र्येणानुवादात् तस्याः परकीयात्वं व्यज्यते तदा सख्योक्तिः। भयेन भयेन गुप्ततयैवेति प्रीतिं वदसि मास्तुते मद्भयमिति स्पष्टतयैव वक्तव्यमिति प्रीतिहेतोर्लक्षितत्वाद् हेतुलक्षिता बोधव्या। यद्वा प्रीतिं भयेनेति पाठे प्रीतिं वदति सति प्रकाशयति सति भयेन मदुद्धरणेन तत्पदे व्यथा माभूदिति भयेन सम्यक्तया यत् यस्मात् मित्रेण प्रियेण तत्कण्टकमुद्धृतं तस्मादहं सञ्जीवितेति नायिकाया एवोक्तिः सम्भवति तत्र प्रेमगर्विता वक्तव्या, सखीषु प्रियप्रेमकथनात्। विवृतोक्तिरलङ्कारः अत्र मित्रपदश्लेषेण तया चौर्यरतं गुप्तम्। प्रीतिं वदसि भयेनेति सहचरीवचन-द्वारा कविना प्रकाशितमिति लक्षणानुगतिः। यद्वा कण्टके पदलग्ने सति–अनेन मित्रेण प्रियेण सूर्येण वा न सज्जीविता, सज्जीवितैवेति काकुः–यत् यस्मात् तत्कण्टकं सम्यक्–उत् ऊर्ध्वं धृतं स्थापितं स्वकरेणेति–उभयार्थे शेषः।।८७।।

दृष्ट्वा नन्दसुतं प्रिया सहचरिवृन्दगतैव।
करं ददार सकौतुकं हृदये शिरसि तथैव।।८८।।
हरषि न बोली लषि ललन निरषि अमिल सँग साथ।
आषिन ही मैं हँसि सीस हियै धरि हाथ।।८८।।

क्रियाविदग्धामुदाहरति। दृष्ट्वेति। कवेरुक्तिः। नन्दसुतं हरिं दृष्ट्वा सहचरीणां वृन्दे गतैव प्राप्तैव सा प्रिया सकौतुकं सोल्लासं यथा भवति तथा हृदये तथा शिरसि करं हस्तं दधार धृतवती। त्वां हृदये धारयामीति हृदयदत्तकरस्याशयः। शिरसि श्यामतरकेशपाशपट्टिका स्पर्शेन रात्रौ मिलनं भविष्यतीति क्रिया वैदग्ध्यम्। यद्वा हृदयस्य शिवोपमवक्षोजस्पर्शेन ापथपूर्वकं सत्यं वदामीति तदाशयः। पुनः केशपास पट्यिकास्पर्शेन कृष्णपक्षेऽपि मिलनं भवष्यितीति वाशयः। पट्किायुगस्पर्शेन कृष्णपक्षेऽपि युग्मतिथौ द्वितीया तिथौ संयोगो भविष्यतीति वार्थो ध्वन्यते। यद्वा यमुनातटस्थ-हरसन्निधौ सम्मेलनं स्नानमिषेण भविष्यतीति वार्थः। एतेन केशपट्टिकयोर्यमुना हृदोपमा व्यज्यते। वक्षजयोस्तु तटस्थहरमूर्तित्वं गम्यते–इति सङ्केतस्थानरक्षार्थं चातुर्यं विदधाति या। क्रिया विदग्धा सा ज्ञेया सुरतस्यानुकाङ्क्षिणीति भरतः। यद्वा शिरःस्पर्शेन गिरिद्वयतटवर्तिनिकुञ्जस्थलं सङ्केत इति सूचयति।।८८।।

जिगमिषुः सुकृतमज्जना रमणं दृशा ननन्द।
छलयित्वा सहचरिजनं बिन्दुमिषेण ववन्द।।८९।।

न्हाई पहिन पट डिठि कियौ बैदी मिस परनाम।
दृग चलाइ घर को चली विदा किए घनस्याम।।८९।।

पुनरपि क्रिया विदग्धामाह। जिगमिषुरिति कवेरुक्तिः। कृतं मज्जनं स्नानं यया सा रमणी जिगमिषुर्गन्तुमिच्छन्ती सहचरिजनं सखीगणं छलयित्वा वञ्चयित्वा। रमणं प्रियं दृशा दृष्ट्या ननन्द बिन्दुमिषेण बिन्दुधारणव्याजेन ववन्द चेत्यन्वयः। अत्रानुदात्तेत्वलक्षणमात्मनेपदमनित्यं चक्षिङोङित्कारणाज्ज्ञापकादित्यादिना ववन्देति साधुः। अत्र च सखी गणदृग्वञ्चनपुरःसरं नन्दनवन्दनक्रिययोर्नायिकाया वैदग्ध्यशालित्वप्रतिपादनात् क्रियाविदग्धा बोधव्या। विधग्धाऽपि द्विधा प्रोक्ता वाचाङ्गे क्रियया तथेति भरतोक्तेः। वन्दनेन स्वकीयाया गन्तुमिच्छा तस्याश्च विज्ञापनं लक्ष्यते। नन्दनेनात्रैव प्रत्यहं मज्जनावसरे दर्शनं साध्विति सूचनमित्यर्थः। विन्दुधारणव्याजेन वन्दनविज्ञापनादिकार्य–साधनात्पर्यायोक्तमलङ्कारः इति।।८९।।

तनुतस्तिरोवलोकनं वृत्तौ सजलवसनेन।
न विरेममतुरपि जम्पती कम्पिततनू जपेन।।९०।।

चितवत जितवत हित हियै कियै तिरीछे नैन।
भीजे तन दोऊ कँपे कैहू जप विवरै न।।९०।।

अथ नायिकानायकयोः परस्परं क्रियावैदग्ध्यमाह तनुत इति। जाया च पतिश्च जम्पती नायिकानायकौ सजलवसनेन वृतौ सार्द्रवाससौ एतेन स्नानोत्तरं तत्रैव जलान्तः स्नानाङ्गजपकणं लोकप्रसिद्धमार्द्रवाससैव भवति तिरिस्तर्यगवलोकनमन्योन्यस्य जपविरामविलोकनायेत्यर्थः। परस्परं तनुतः विस्तारयतः, उभौ–कम्पिते तनू ययोस्ते तादृशे अपि जपे जपन क्रियया न विरेमतुः न जपं विसर्जतुः। अत्रान्योन्यस्यान्योन्याभ्यां तिरोवलोकनानन्दप्राप्तये, परस्परजपानुष्ठानाऽविरति रूपोपकारकरणादन्योन्यालङ्कारः। 'अन्योन्यं नाम यत्र स्यादुपकार; परस्परमिति लक्षणात्। यथोर्ध्वाक्षः पिबत्यम्भः पथिको विरलाङ्गुलिः। तथा प्रपापालिकापि धारां वितनुते तनुमित्यन्योन्या-लङ्कारोदाहरणवत्।।९०।।

विहसति धृष्टत्यङ्गं कालिन्दी तीरेषु।
दलदिन्दी वरलोचना न निमज्जति नीरेषु।।९१।।

अँग धोवति ऐड़ी घिसति हँसति अँनग वै तीर।
धसति न इन्दीवर नयनि कालिन्दी के नीर।।९१।।

पुनरपि क्रियाविदग्धामाह। विहसतीति। दलदिन्दीवरे इवलोचने यस्याः सा प्रफुल्लितेन्दीवरनयना

कालिन्दीतीरेषु कलिन्दजातटेषु अङ्गं घृष्यन्ती परिमृजन्ती सती विहति सखीष्विति विशेषः। किञ्चनीरेषु जले न निमज्जति तदन्तस्थित्वा न स्नानं करोत्यर्थः, तटस्थनायकप्रतिबिम्बदर्शनानन्दलोपाभावेति भावः। तीरेष्विति बहुवचनात् तीरे-तीरे गत्वा सखीषु परिहसति। तत्र-तत्र चाङ्गानि परिमार्ष्टीति स्नानक्रियाविलम्बोऽतिवेलनं नायकदर्शनायेति क्रियावैदग्ध्यात् क्रिया विदग्धा। व्याजेनेष्ट-साधनात्पर्यायोक्तालङ्कारः। अत्रापि कवेरुक्तिः सम्भाव्या।।९१।।

न च स्नाति न गृहं व्रजति कौतुकमाचरतीव।
तटे वीक्ष्य नागरनटं विहसति विस्फुरतीव।।९२।।

नहि न्हाइ नहि जाइ घर चित चिहुट्यौं तकि तीर।
परस फुरहु रूलै फिरति विहसति धसति न नीर।।९२।।

पुनर्यथा। न चेति। तटे यमुनाया इति शेषः। नागरनटं चतुरनटं श्रीकृष्णं वीक्ष्य न स्नाति तत्प्रतिबिम्बदर्शनानन्दायेति भावः। गृहमपि नो व्रजति तद्विरहसन्ताप भयादिति भावः। किन्तु विस्फुरन्तीव कम्पत्तीव कपटकम्पेन कौतुकमाचरतीव विहसति सखीष्विति शेषः कम्पव्याजेन सहचरीष्वपि तदा नन्दसन्दोह-गोपनायेति भावः। अत्रापि क्रियाविदग्धापर्यायोक्तालङ्कारश्च। अत्रापि कवेरुक्तिः।।९२।।

कृत्वा तिरोऽवलोकनं सस्पृहदिशा मुखेन।
स्पृष्ट्वा विभयाऽपि सा गच्छति गृहं छलेन।।९३।।

चितही ललचौहै चपन डिटि घूँघट पट माँह।
छल सौं चली छुवाइ कै छिनक छबीली छाह।।९३।।

पुनर्यथा। सा बाला तिरः तिर्यगवलोकनं स्पृहा साकाङ्क्षादृग् यस्मिन् तेन मुखेन कृत्वा-अपि पुनस्तनोर्विभया कान्त्यास्पृष्ट्वा प्रियमिति शेषः। छलेन केनचिद् व्याजेन गृहं गच्छति -अत्रापि कवेरुक्तिः क्रियाविदग्धा चेति। केनचिद् व्याजेन गृहगमनकाले स्वकीयतनुप्रभया कान्तस्पर्शरूपकार्यसम्पादनात् पर्यायोक्तमलङ्कारः।।९३।।

न त्रपसे किं शठतया न गृहं त्यजसि ममैव।
अतस्त्वमिच्छसि गोरसं न हि गोरसं तथैव।।९४।।

लाज गहौ वेकाज कत घेर रहे घर जाहि।
गोरस चाहत फिरत हौ गोरस चाहत नाहि।।९४।।

अथ काचिद् गोपी दधिदुग्धादिविक्रयव्याजेन नायकं सङ्गच्छन्ती वाग्वैपरीत्यवैचित्र्येण स्वपरिवार शङ्कितेवाह-नेति। हे धूर्ते! इति सम्बुध्याक्षेपः त्वं न त्रपसे जनानां समक्षं शठतया वर्तते, अनया शठतया किं न किमीत्यर्थः। ममैव गृहं न त्यजसि-अन्यासामपि गोपीनां दध्यादिकं नेच्छसि किं

यद्वा हे शठेति सम्बुद्धिः तया पूर्वरीत्या-इदानीं किमिति ममैव गृहं न त्यजसीति सङ्गतिः। अतो हेतोर्मया विज्ञातं त्वं गवामिन्द्रियाणां रसं स्वादुविशेषं वागादिविलासं यथा-इच्छसि तथैव गोरसं दध्यादि नहि-इत्यर्थः अत्रापि वाग्वैदग्ध्यवैचित्र्यस्य नायकवाविशेषरूपस्वेष्टसाधनाद् वाग्विदग्धा पर्यायोक्तालङ्कारेण सम्पाद्यते।।९४।।

(गोरसं गोरसमितिशब्दौभिन्नार्थकावतो यमकालङ्कारोपीति-सम्पादकः)

साहसाऽली वचसा प्रिया प्रियागमनमवधाय।
विकसित विधुवदनाऽजिरे विलसति हितमिलनाय।।९५।।

कहि पठई जियभावनी पिय आवन की बात।
फूली आँगन मैं फिरत आँगिन आँग समान।।९५।।

मुदिता मुदाहरति। सहसेति। सहसा-अकस्मात् सा प्रिया-आलीवचसा सखीवाक्येन प्रियस्य पत्युर्वा प्रियस्य मित्रस्य-आगमनं देशान्तराद् देशविशेषातु अवधाय ज्ञात्वा अजिरे-अङ्गणे तस्य पत्युर्वाहितस्य मित्रस्य मिलनाय सङ्गमाय विकसितं प्रफुल्लं विधुवदनं यस्याः सा एतदृशा विशेषेण लसति शोभते-इत्यर्थः। अत्र स्वीयापि मुदिता भवितुमर्हति प्रियवार्ताश्रवणजानन्दस्य सद्भावात्। लक्षणेऽपि प्रियवार्ता श्रवणदर्शनजनितप्रमोदान्मुदितेति विख्याता प्रहर्षणालङ्कारश्च। 'उत्कण्ठितार्थ-संसिद्धिर्विना यत्नं प्रहर्षणमिति लक्षणात्'।।९५।।

अशणमनिक्षु समीक्ष्य वनं मयि दूना कथमेव।
हरितदलं पश्यसि न किं तुवरीवनमिद मेव।।९६।।

सन सूषौ बीत्यौ वनौ ऊषौ लई उखारि।
हरी-हरी अरहरि अजौ धरि धरहर जिय नारि।।९६।।

अनुशयाना मुदाहरति। अथ क्षुण्यशणेक्षु सङ्केतीकृतगणक्षेत्रेषु क्षेत्रस्थलसन्दर्शनाद् भग्नसङ्केताया वदन मालिन्यादिलक्षणं लक्षयित्वा सखी नायिकां प्रत्याह-अशणेति। हे बाले-इति। सम्बुध्याक्षेपः। अयीति कोमलालापे-अशणं शणरहितमनिक्षु इक्षुरहितं वनं समीक्ष्य दृष्ट्वा कथमेव दूनाऽसि दुःखिताऽसि हरितानि दलानि यस्मिन् तत् तुवरीवनम् आढक्याः क्षेत्रं किं न पश्यसि-अस्मिन्नेव क्षेत्रे सङ्केतस्थलं भविष्यतीति भावः। अठिकीतुवरीतुस्यादिनिनिघण्टुः। एतेन सङ्केताभावशङ्का मा कुरु-इत्यन्तरङ्गायाः सख्या वचनं तस्या दुःखापनोदनार्थमिति। अत्र नायिकायाः सङ्केतभङ्गजनित परितापापनोदनाय सम्प्रति हरितददलाढकीवन सन्दर्शनात्सङ्केतस्थलसमर्थनं सहचरी वाक्येन कृतमिति काव्यलिङ्गालङ्कारः। 'समर्थनीयस्यार्थस्य काव्यलिङ्गे समर्थनमिति लक्षणात्।।९६।।

विरसवचनकुटिलभ्रुवा कठिनीकृतं मनोऽपि।
हरिमवलोक्य विलोचने हसतः सुखं ततोऽपि।।९७।।

सतर भौंह रुषे वचन करत कठिन मन नीठि।
कहा करौ ह्वै जात हरि हेरि हँसौ ही डीठि।।९७।।

अथ परकीयाया अनुरागेङ्गितानि। विरसेति। सखीं प्रति नायिकाया उक्तिः हे सखि! विगतरसानि वचनानि कुटिला च भ्रूर्यस्याः एतादृश्या मया हरिं कृष्णमवलोक्य मनोऽपि कठिनीकृतं ताताऽपि-इमे विलोचन्ते सुखं यथा भवति तथा हसतः-इत्यन्वयः। एतेन विरसवाक्यमपि मया कथितं भ्रूरपि कुटिलीकृता मनोऽपि कठिनं कृतं तथापि हर्म्यवलोकनेन सहसितलोचनाऽहमासेति प्रेमातिशयद्योतनाय नयनयोरात्माऽवश्यत्वमुपपादितम् अत्र च विरस वाक्यादिरूपप्रतिबन्धके सत्यपि तदवलोकनावसरे सहासलोचनावत्वरूपकार्योत्पत्तेस्तृतीया विभावनाऽलङ्कारः।।९७।।

अतिदुष्टे दहतामिमे ह्यनुशिष्टे बहुधापि।
दृष्ट्वा मोहनमीक्षणे हसतः सुखं तथापि।।९८।।

दहै निगोड़े नैन ये गहै न चेत अचेत।
हौ कसिकै रिसकौ करौ येन सिषै हसि देत।।९८।।

पुनर्यथा। अतीति। हे सतीति सम्बुध्याक्षेपो नायकोक्तिदर्शनादवगन्तव्या। नायिकायाः सखीं प्रत्युक्तिः। इमे मम-ईक्षणे नेत्रे-अति-अत्यन्तं दुष्टे-अत एव दहतामिति कोपोक्तिः, मया बहुधा-अपि-अनुशिष्टे शिक्षिते-अपि-अनुशिक्षणानन्तरमपि मोहनं हरिं दृष्ट्वा सुखं यथा स्यात्तथा हसतः सहसितविलासं कुरुत एवेति अनुराग विशेष प्रतिवादनात् नयनयोरात्मनोऽवश्यत्वं सूचितम्। अत्राप्यलङ्कारः पूर्ववत्।।९८।।

त्वं सहचरि सत्यं वदसि स्वयमपि तज्जानासि।
कथं मनोहरमोहनं प्रतिमानं विदधासि।।९९।।

तुहूँ कहत हौ आपहू समुझत सबै सयान।
लषि मोहन जो मन रहे तो मैं राषौ सान।।९९।।

पुनर्यथा। त्वमिति। हे सहचरि! त्वं सत्यं वदसि तं तवोपदेशं स्वयमप्यहं जानामि वेद्मि। किञ्चन मनोहरतीति मनोहरः स चासौ मोहनश्च तं प्रति कथं केन प्रकारेण दधामि तद्दर्शनानन्तरे मम मानसं मोहनाधीनं भवतीति मानविधेसवकाश इति भावः। एतेन प्रेमाधिक्यसूचनं सम्पादितमित्यनुरागेङ्गित वर्णनं सहचरीषु समुचितमिति। अत्रापि मानविधायकसहचरीवाक्यरूप-प्रतिबन्धके सत्यपि मानविधिनाशक्यत्वरूपकार्योत्पत्तेस्तृतीया विभावनालङ्कारो नायिकावचनेनोप-पादितः।।९९।।

स्वयमुपयाति हरिं मुदा गात्राणि स्वयमेव।
खलु मानो भानूदये विलीयते स्वयमेव।।१००।।

मोहि लजावत निलजये हुलसि मिले सब गात।
भानु उदय की ओस लौ मानन जान्यै जात।।१००।।

पुनर्यथा। हे सखि! इमानि मम गात्राणि करचरणादीनि हरिं प्रति स्वयमुपयान्ति, हरिदर्शनानन्दसद्भावे स्वयमेव तत्सङ्गमाय विनैव प्रेरणमुपगच्छन्तीति भावः। मनसि वर्तमानानि लघुमध्यमादिमानानि खलु निश्चयेन द्रवन्ति शिथिली भवन्ति भानूदये हिमानि तुहिनानीवसूर्योदयकाले हिमानि। यथा स्वयमेय द्रवीभूय जल प्रवाहरूपेण विलीयन्ते तथा मानोऽपि हरिदर्शनसमये तदानन्दसन्दोहसद्भावे स्वयमेव विलीयन्त इत्युपमानोपमेययो बिम्बप्रतिबिम्बभावप्रतिपादनात् दृष्टान्तालङ्कारः।।१००।।

नयने कृष्टे मानतः सञ्चलिते विरहेण।
मानं जहतु रिमे तदा मिलिते यदा प्रियेण।।१०१।।

षिचे मान अपराध तै चलिगो डीढै अचैन।
जुरत डीठि तजि रिसषिसी हँसे रसीले नैन।।१०१।।

अथ काचित्प्रथमं कथञ्चिन्मात्रं विधाय प्रियं दृष्ट्वा स्वीयनेत्रदशां सखीषु वर्णयन्ती प्राह-हे सखि इमे मम नयने पूर्वं मानतः हेतोः प्रियापराधजनितकोपावेशात् कृष्टे कर्षिते पुनस्तद्विरहेण हेतुना सञ्चलितेचञ्चलिते चञ्चलीकृतेयदा यस्मिन् काले प्रियेण मिलिते सङ्गते तदा तस्मिन्नेव काले मानं जहतुरित्यर्थः। गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नति-इत्यमरः। 'मानः कोपः स तु द्वेधा प्रणयेर्ष्या समुद्भव' इति भरतसूत्रोक्तेर्मानशब्देऽप्यर्थद्वयानुसन्धाना कोपगर्वौ सहैव जहतुरिति भावः। अत्र लोकप्रसिद्धयानानुनयरूपा समग्रहेतुसद्भावे मानभङ्गरूपसम्पूर्णकार्यसम्पादनाद् द्वितीया विभावनाऽलङ्कारः। हेतूनां समग्रत्वे कार्योत्पत्तिश्च सा मतेति लक्षणात्।।१०१।।

मानस्त्वयि रजनीदिनं न हि निश्चलतामेति।
प्रिये विचिन्वति तेऽगुणे तद्धस्ते गुण एति।।१०२।।

राति दिवस हौं सै रहै मानन ठिक ठहरात।
जे तौ औगुन ढूँढिये गुनै हाथ परिजात।।१०२।।

पुनर्यथा। मानः कोपः रजनीदिनं दिवारात्रौ त्वयि कदापि निश्चलता नहि-एति न प्राप्नोति किन्तु चञ्चलत्वेन वर्त्तते ते तव अगुणे कोपाद्युत्थदुर्वाक्यरूक्षाधिके विचिन्वति सति यः कोऽपि विचिनोति तस्य हस्ते गुण; सौशील्यसुवाक्यादिकम्-एति प्राप्नोति नत्वगुण इत्यर्थः। यद्वा प्रिये नायके-अगुणे विचिन्वति सति तस्य नायकस्य हस्ते ते गुण एव-एति पतति परोक्षमपित्वद्-गुणवर्णनानुरागादिति भावः। अनेनैव तवानुरागेङ्गितमवगतं भवति। अत्र मानदर्शनाभिलाषिणः प्रियस्य तव मानदर्शनरूपेष्टार्थसमुद्यमे कृते त्वयि च मानचाञ्चल्यसौशील्यादि तदनिष्ट रूपगुणलाभात्तृतीयोऽयं

विषमालङ्कारः। 'अनिष्टस्याप्यवाप्तिः तदिष्टार्थसमुद्यमादितिलक्षणात्। इष्टार्थमुद्दिश्य किञ्चित्कर्मारब्ध्वतः ततो न केवलमिष्टस्यानवाप्तिः किन्तु तत एवानिष्टस्यापि प्रतिलम्भश्चेत्तदपि तृतीयं विषममिति तदर्थः।।१०२।।

नन्दसुतो नयनातिथिर्यावत्प्रभवति नैव।
तावदेव सखि! कुलकथा राजति यथा स्थितैव।।१०३।।

जौलौं लषौ न कुलकथा तौलौं ठिक ठहराइ।
देषै आवत देषही कैहू रहौ न जाइ।।१०३।।

अथ काचित्स्वानुरागं प्रकाशयन्ती सखीं प्रत्याह। हे सखि ! नन्दसुतः कृष्णे यावन्मे नयनातिथिर्न भवति मम नयनाग्रे न याति तावदेव कुलकथा कुलवार्ता लज्जासौशील्यादिका यथा यथावद् वर्तते सा तथैव यथास्थितैव वर्तते पुनस्तस्मिन् दृष्टे कुलकथायाः कुत्रापि स्मृतिर्नभवति–इति भावः। किन्तु तद्दर्शनानन्द सन्दोहमग्नत्वे सति लज्जासौशील्यादिकं विस्मृतं भवतीति स्वानुराग प्रकाशनाय सखीषु तत्स्वरूपदर्शनाह्लादो वर्णितः। अत्र नन्द सुतस्य सौन्दर्यातिशय वर्णने तदन्यपुरुषस्य तादृशसौन्दर्यातिशयाभावात् निन्दाचावगम्यते तेन व्याजस्तुत्यलङ्कारः। उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोरिति लक्षणात्।।१०३।।

भ्रूलतिका कुटिलीकृता विरसं वचो वदामि।
किन्तु सहसिते लोचने तं प्रति कथं नयामि।।१०४।।

कपट सतर भौहै करी मुष सुतरौ है बैन।
सहज हसौं है जाति कै सोहै करत न नैन।।१०४।।

अथ काचित्सखीषु स्वानुराङ्गेङ्गितभाविष्कुर्वन्ती प्राह। भ्रूलतिकेति। हे सखीति सम्बुध्याक्षेपो नायिकाया उक्तिवशादवगन्तव्यः। मया भ्रूलतिका कुटिली कृता वक्रतां नीता नायकं दृष्ट्वेति शेषः। पुनर्वचो विगतरसं वदामि कथयिष्य इति भविष्यदर्थे लट् किन्तु इमे सहसिते सदैव हासयुक्ते विलोचने तं प्रति कथं नयामि नयिष्ये इति लोचनयोः साम्मुख्ये भ्रुकुट्यादि कुटिलीकरणं वृथैवेति भावः। एतेन नयनयोः सहजहसितवत्वहेतोर्वचनवरस्यादीनामपि कपटकृतत्वं द्योत्यते, तस्मान्त्वत्कृता मानशिक्षापि कर्तुमशक्येति तस्या आशयः। अत्र लोचने इति विशेष्यस्य सहसिते–इति साभिप्रायविशेषणात् परिकरालङ्कारः।।१०४।।

नहि पश्यसि नर्तितदृशा न वदसि वचः स्मितेन।
यदा करोषि मनोऽरसं मग्नं तदा रसेन।।१०५।।

नहि नचाइ चिवत दृगनि नहि बोलत मुसकाइ।
ज्यौं ज्यौं रूष रूषौ करत त्यौं त्यौं चित चिकनाइ।।१०५।।

सखीवाक्येनापि कस्याश्चिदनुरागेङ्गितमाह। न हीति। हे सुन्दरि-इति सम्बुद्ध्याक्षेपः सखीवाक्यादवगन्तव्यः। नर्तिता चासौ दृक् तया प्रियत्वं हि निश्चयेन न पश्यसि किन्तु सहजसामान्य दशैव पश्यसीति भावः। स्मितेन मन्दहसितेन सहितं वचः वाक्यं न वदसि किन्तु सामान्यतयैव वदसि, यदा यस्मिन् समये स्वीयं मनः स्वान्तमरसं विगतरसं करोषि तदा तस्मिन्नेव काले नायस्येति शेषः मनः स्वान्तं रसेन शृङ्गारेण प्रेम्णा व हेतुना त्वयि मग्नमित्यर्थः। एतेन तव मनो वैरस्यादिप्रतिबन्धके सत्यपि नायकस्य मनस्तेऽनुरागमग्नत्वरूपकार्यसम्पादनात् तृतीया विभावनालङ्कारः।।१०५।।

**मानः कृष्ण समागमे प्रवब्राज मनसोऽपि।**
**किन्तु मुहूर्त्तं मानजा त्रपा न याति ततोऽपि।।१०६।।**

**तोही कौ छुटि मान गौ देखत ही व्रजराज।**
**रही घरिक लौ मानसी मान करे की लाज।।१०६।।**

पुनरपि सखी नायिकां प्रत्याह। हे सुन्दरीति सम्बुद्ध्यनुकर्षः सखी वाक्येन बोधव्यः। कृष्णसमागमे सति मानः कोपः तवेति शेषः, मनोऽपि हृदयादपि प्रवव्राज जगामेति किन्तु मुहूर्त्तं मुहूर्त्तपरिमितकालं यथा स्यात्तथा ततोऽपि हृदयादपि मानजा त्रपा मयाऽस्मिन् प्रिये वृथा मानं कृतमित्यादि पश्चात्तापरूपा न याति न गच्छति। अनेन पूर्वं केनापि हेतुना मानः कृतः पश्चात्तत्सङ्गमे सति-अनुनयाद्युपायं विनैव मानभङ्ग इत्याशयेर्नहेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मतेति लक्षणात् द्विवतीया विभावनेति दिक्।।१०६।।

**कम्पितकरपतिता कृतं कुटिलतिलकवरमेव।**
**तेन कुटिलतिलकेन सा विहरति कुटिल कृतेव।।१०७।।**

**कियौ जु चिबुक उठाइ कै कम्पित कर भरतार।**
**टेढ़े पै टेढ़ी फिरति टेढ़े तिलक ललार।।१०७।।**

स्वीयां प्रेमगर्वितामाह। कम्पितेति। कम्पितकरश्चासौ पतिः तेनकुटिलं च तत्तिलकवरं वक्रतरं तिलकमित्यर्थः। नायिकाया वदने स्वीयकरेण तिलककार्यकरणे तत्स्पर्शरूपालम्बनाविभाववत्त्वकम्प सात्त्विकप्रयुक्ततिलकवक्रत्व मिति भावः। तेनैव कुटिलतिलकेहेतुना सा बाला कुटिलकृतेव वक्रकृतेव विहरति विचरतिअत्र कुटिलेति साभिप्राय विशेषणोपादानात् परिकरालङ्कारः। किञ्च कुटिलगत्यापिप्रेम्णो गर्वभावप्रदर्शनात् सखीवर्गेषु स्वनायकस्य स्वस्मिन् प्रेमाधिक्यं सूचितं तेन स्वीया प्रेमगर्वितेयम्। 'नायकस्याधिकं प्रेम सखी वर्गेषु वक्ति या, गर्वभावसमायुक्ता सैवेयं प्रेमगर्विता।' इति लक्षणात्।

**किल सपत्निका सन्मुखं पतिदत्ता प्रिययाऽपि।**
**सा विभाति नूतनतरा माला रतिमृदिताऽपि।।१०८।।**

**तिय सौतिन देषत दई अपनै हिय तै लाल।**
**फिरत सबन मैं डह डही वहै भरगजी माल।।१०८।।**

पुनर्यथा। किलेति। किल निश्चयेन सपत्नी एव सपत्निका तस्याः सन्मुखं समक्षं यथा स्यात्तथा पत्या प्रियेण रतिमृदिताऽपि माला पुष्पकृतेत्यर्थः दत्ता यदा प्रिययाऽपि प्राप्ता तदा सैव माला नूतनतरा नवीनेव विभाति सपत्नीवर्गेषु तस्याः सौभाग्यवत्तयेति भावः। पतिदत्तरतिमृदितामालया तस्याः पत्युः प्रेमाधिक्यमपि सूचितं तेन प्रेमगर्वितेयम्। किञ्चमालाया रतिमृदितत्वरूपकार्योत्पत्तेस्तृतीया विभावना। अत्र सख्याः सखीं प्रत्युक्तिः। सपत्नीमुखमालिन्यतन्मुखसौन्दर्यादिदर्शनात् पतिदत्तमालाधारणरूप पतिप्रेमाधिक्यसूचके स्वरूपसौभाग्यवत्वगर्वाद्याविर्भाव इति भावः।।१०८।।

क्षणं क्षणं प्रियखण्डितं स्पृशति पिधत्ते करेण।
दर्शयति कदाचित्साधरं स्वं पश्यति मुकुरेण।।१०९।।

छिनकु उधारत छिन छुवत राषत छिनक छुपाइ।
सब दिन पियषण्डित अधरदर्पन देखत जाइ।।१०९।।

पुनर्यथा पतीति। सा बाला पत्या खण्डितमधरं क्षणं क्षणं करेण पिधत्ते, एतेन वारवारं पतिखण्डित रदनच्छदपिधान दर्शनक्रियया पत्युः प्रेमातिशयः सखीवर्गेषु दर्शित इति सख्याः सखीं प्रत्युक्तिर्बोध्या तेन गर्वभावोऽपि व्यजते तेन स्वीया प्रेमगर्विता पतिशब्दोपादानात्। आत्मनः सौभाग्यवत्व सगर्वत्वसूचनस्वभाव सम्पदाकाधरदर्शनादिस्त्रीजातिस्वभाववर्णनात् स्वभावोक्तिरलङ्कारः। गर्वाख्यः सञ्चारी भावः। 'सौभाग्यरूपतारुण्यगुणसर्वोत्तमाश्रयैः, इष्टलाभादिना चान्यहेलनं गर्व उच्यते। इति भरतोक्तेः।।१०९।।

सा लब्ध्वा प्रियमुद्रिकामभिनवहार्दितयैव।
हृदि धत्ते पुनरीक्षते पुनः प्रणिङ्क्षति चैव।।११०।।

छला छबीले लाल कौ नव सनेह लहि नारि।
चूमत चाहत लाइ उर परिहरति धरति उतारि।।११०।।

परकीयां प्रेमगर्विता माह। सेति। अभिनवाचासौ सौहार्दिता प्रेमाधिक्यतया हेतुभूतया प्रियस्य मित्रस्य मुद्रिका–अङ्गुलिभूषणं लब्ध्वा तां हृदि धत्ते पुनः ईक्षते पश्यति पुनः प्रणिङ्क्षति चुम्बति–एतेन मुद्रिकाया हृदि धारणेक्षणचुम्बन क्रियया स्वमित्रस्य प्रेमातिशयः स्वान्तरङ्गसखीवर्गेषु दर्शित इति परकीयायाः प्रेमातिशयवत्याः स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः।।११०।।

भाविसपत्नीपरिभवं परिभवन्ती युवतीषु।
सादधार गुणचारुता गर्वं सर्वसखीषु।।१११।।

दुःसह सौति सालै जु हिय गनतिय नाह विवाह।
धरै रूप गुन कौ गरबु फिरै अच्छेह उछाह।।१११।।

स्वीयां रूपगुणगर्वितामाह। भावीति। सा पत्युद्र्वितीयपरिणयारम्भे भावी यः सपत्नीकृतः

परिभव: तिरस्कार: तं परिभवन्ती तिरस्कुर्वन्ती सती। 'अनादर: परिभव:' परीभावस्तिरक्रियेत्यमर:। युवतीषु वा सर्वासु सखीषु गुण: सौशील्यचातुर्यादि: चारुतास्वरूपसौन्दर्यं च गुणचारुते तयो:-गर्वं यद्वा गुणानां चारुतां गुणचारुता तस्या: गर्वं दधार धृतवती पत्युद्वितीयपरिणयारम्भकाले सहर्षा बभूवेति भाव:। मद्गुणचारुत्ववशीकृत: पतिर्मयि एव रंस्यते इति हर्षहेतुरपि गर्वधारणक्रिययाऽनुमीयते अत्रापि सख्या सखीं प्रत्युक्ति:। किञ्च पत्युद्वितीयपरिणयारम्भे दु:खप्रादुर्भावभावि सपत्नीकृत परिभवरूपप्रतिबन्धके सत्यपि सहर्षं गर्वभावसमायुक्तत्वरूपकार्यसम्पादनात् तृतीया विभावना।।१११।।

मुमुदे चतुरसपत्निकाधीनं प्रियमवधाय।
गर्व: सहसितलज्जया कथित:सखीजनाय।।११२।।

सुघर सौति प्रियवस सुनत दुलहिन दुगुन हुलास।
लषी सषी तन डीठ कर सगरव सलज सहास।।११२।।

पुनर्यथा समुदे–इति। चतुरा चासौ सपत्निका तस्या: आधीनं वशीभूतं प्रियम्–अवधाय श्रुत्वा सा बाला मुमुदे सहर्षा बभूवेत्यर्थ:। किं च हसितं च लज्जा च हसितलज्जे ताभ्यां सहिता सहसितलज्जा तया गर्वोऽहङ्कार: स्वकीयरूपगुणादिकृत: सखीजनाय कथित इत्यर्थ:। चतुरसपत्निकावशीभूत पतिवार्ताश्रवणकाले सहसितलज्जावक्रियया स्वकीयरूपगुणादिकृत: सखीजनाय कथित इत्यर्थ:। चतुरसपत्निकावशीभूत–पतिवार्ताश्रवणकाले सहसित लज्जावक्रिया स्वकीयसौन्दर्यगुणगर्व: सखीवर्गेषु सूचित इति भाव:। सपत्नीनां चातुर्यं मम चातुर्यान्नूनमितिहेतो: सहासवत्वं पतिविषयकवार्तासूचनात्स लज्जत्वमिति भाव:। अत्र चतुर सपत्न्याधीनपतिवार्त्ता श्रवणरूपहर्षप्रतिबन्धके सत्यपि हर्षप्रतिपत्तिरूपकार्यसम्पादनात् तृतीया विभावना, हर्षाख्य: सञ्चारी भाव:।।११२।।

अनुनीता नतलोचना स्मितवदना रमणेन।
तदा नागवल्लीदलं बाला ददौ करेण।।११३।।

हँसि औठन बिच कर उचै कियै निचौहै नैन।
षरे अरे प्रिय को प्रिया लगी बिरी सुख दैन।।११३।।

पुनर्यथा अनुनीतेति। नते लोचने यस्या: सस्मितं वदनं यस्या: सा बालारमणेन प्रियेण यदा-अनुनीता तदा करेण स्वीयेनेति शेष:। नागवल्लीदलं ताम्बूलं ददौ प्रियाय–इति शेष:। अत्र स्मितवदनेति विशेषणेन स्वरूपसौन्दर्यकृतो गर्व: सूचित:। नतलोचनेति विशेषणेन स्वरूपसौन्दर्यकृतो गर्व: सूचित:। नतलोचनेति विशेषणेन प्रियवदनेवीटिकादानकाले व्रीडाभाव आविष्कृत:। यदा अनुनीता तदानाग-वल्लीदलं ददावित्यनेन सगर्वतया ताम्बूलदानमिति पत्यु: स्वरूपगुणाधीनत्वमपि ध्वनितम्। किञ्च सगर्वसलज्जसहसितताम्बूलदानक्रियया सात्त्विकादिभावाविर्भावस्वभाववर्णनात् स्वभावोक्तिरलङ्कार:।।११३।।

दृष्ट्वा विदलितजतुरसं सपत्निकापदमेव।
हसितं तामनु सत्रपां वीक्ष्य निःश्वसितमेव।।११४।।

विथुरौ जाबक सौति पग निरषि हँसी गहि गाँस।
सजल हसौं ही लषि लियौ आधी हँसी उसास।।११४।।

सपत्नीसम्भोगदुःखितां स्वीयामुदाहरति। दृष्ट्वेति। विदलितं विगतारक्तिकं जतुरसं लाक्षारसं यस्मिन् तत् सपत्निकाया पादं चरणं दृष्ट्वा तया-इति कर्तुराक्षेपः हसितं कृतमित्यर्थः। विस्तृतलाक्षारसानुरक्त सपत्नीचरणावलोकनात् तस्याः क्रूरत्वसूचनाय सखीवर्गसमक्षं तया हसित मिति भावः। अनुपश्चात् तां सपत्नीं सत्रपां सलज्जां वीक्ष्य दृष्ट्वा निःश्वसितमेवेत्यर्थः। अत्र सव्रीडसपत्नीदर्शनात् पूर्वं विस्तृत लाक्षारसानुरक्ततत्पददर्शनात् स्वनायकतेयं लाक्षारसानुरक्तिमेति कम्पादि सात्त्विकाविर्भावाद् विस्मृतेति बुध्वा निःश्वासमुखेन स्वकीयमनःसन्तापसम्भूतदुःखाधिक्यमिति न्यङ्ग्यम्। अत्रापि सख्याः सखीं प्रत्युक्तिः। सहेतुकहसित निःश्वसितादि प्रियप्रेमगर्विताया: स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः।।११४।।

प्रियेस्येयमिति मुद्रिका सखी करादादाय।
सा दर्शयति प्रकुपिता सहसितमुखी प्रियाय।।११५।।

छला परोसिन हाथ तै छल करि लियौ पिछानि।
पियहिं दिषायौ लषि विलषि रिस सूचक मुसुकानि।।११५।।

स्वकीयामन्य सम्भोगदुःखितामाह। प्रियस्येयमिति। इयं मुद्रिका प्रियस्येति हेतोः सखीकराद् आदाय गृहीत्वा सा प्रकुपिता सती प्रहसितं मुखं यस्याः सा प्रियादर्शयतीत्यन्वयः। अत्र सख्याः करे प्रियदर्शनानुमित प्रियप्रीतिदानपूर्वक सम्भोगोत्पन्नकोपाकुला सती कोपं मनसि धृत्वा सहसितमुखी तां मुद्रिकां प्रिया दर्शयति-इति स्वीयाऽन्यसम्भोगदुःखिता प्रादुष्कृत दुर्वचनाद्यनुक्त्या स्वीयात्वमिति दिक्। अत्रापि स्वभावोक्तिरलङ्कारः।।११५।।

स्वीयशयनमेणीदृशा वेणीलक्ष्मयुतं च।
दृष्ट्वा मानविरागयुतदृग्वृत्तिभिरानञ्च।।११६।।

विलषी लषै षरी षरी भरी अनष वैराग।
मृगनैनी सैनन भजै लषिबै नीके दाग।।११६।।

पुनर्यथा। स्वीयेति। एणीदृशाविवदृशौ यस्या; सा एणीदृशा मृगीदृक् अत्र भागुरिमतेन हलन्तानां टाप्विधानम्। वाचा निशा दिशा-इत्यादिवत्। स्वीयं च तच्छयनं शय्यावेण्या; लक्ष्म चिह्न मनस्या इति शेष;। तेन युतं युक्तं दृष्ट्वा चेति पादपूरणे या न एव विरागः तेन युताया दृशावृत्तयो व्यापारास्ताभिः आनञ्च शिषेवे-इत्यन्वयः। अञ्चुगतिपूजनयोरित्यस्य लिटिरूपम्। अत्रान्यनायिकायाः वेणी-

लक्षणयुक्तस्वीय-शयनावलोकतनितमानाधिक्याविर्भावात् किमपि नोवाच। किन्तु तच्छयनं केवलं दृष्टवृत्तिभिरानेन चेति सखी वर्गेषु एतत्क्रियया दुःखितत्वमपि व्यज्यते। तेन स्वीया-अन्यसम्भोगदुःखिता ज्ञातव्या। स्वभावोक्तिरलङ्कारश्च। यद्वा स्वीयशयनम्-अन्यवेणी लक्ष्ययुतं दृष्ट्वा सा एणीदृशा मा मां विरागयुतदृग्वृत्तिभिर्न आनञ्चन शिषेवे मानं सम्यग् ददर्शेति भावः। इति सख्याः सखी प्रत्युक्तिः। यद्वा विशेषो रागो विरागः सरसत्वं तेन युतदृग्वृत्तिभिर्मानं शिषेवे किन्तुअन्यथैव ददर्शेत्यर्थः।।११६।।

हितमकारि नागरि चतुरसन्देशेनानेन।
अपि सर्वासु सगर्वता विदिता स्मितवदनेन।।११७।।

ढीठि परौसिन ईठ ह्वै कहे जुगहै सयान।
सबै सँदेंसे कहि कह्यौ मुसक्याहट मैं मान।।११७।।

पुनर्यथा। हितेति। हे नागरि! हे चतुरे! इति नायिकाया सखीं प्रत्युक्तिः। त्वया-अनेन चतुरसन्देशे न चातुरस्यं नागरस्य यः सन्देशः तेन, यद्वा चतुरश्चासौ सन्देशः तेन। यद्वा चतुरं प्रियं प्रति यः सन्देशो मयोक्तः तेन मम हितं मत्प्रियम्-अकारि कृतम्, अपि पुनः सर्वासु सखीषु तवस्मितवदनेन स्मितं च तद्वदनं तेन सगर्वता साहङ्कारता विदिता-इत्यन्वयः। अत्र नागरीति सम्बुध्या चातुर्यतया यः सन्देशः कथितस्तेन त्वया मम हितमकारि-इति विपरीत लक्षणयाअहितंकृतमितिसूच्यते। पुनः स्मितवदनत्वेन तव सगर्वता विदितेति नायकसंभोगन सगर्वतेति तात्पर्यार्थः। तव सगर्वता सर्वासु विदितेति कोपोक्त्या दुःखितत्वमपि व्यज्यतेन स्वीयान्यसम्भोगदुःखिता ज्ञातव्या। साभिप्राये विशेष्ये तु भवेत्परिकाराङ्कुर इति लक्षणात् परिकराङ्कुरालङ्कारः। अत्र नागरीति सम्बुद्ध्या तस्या धृष्टत्वं चतुरत्वं च सूचितमित्यभिप्रायगर्भितत्वाल्लक्षणानुगतिः।।११७।।

वामेमौनमिता कथं दूतीकृता त्वयापि।
वीक्षोभावपि सत्रपौ दध्रे त्रपा मयापि।।११८।।

गह्यो अबोलौ बोलिय्यौ आपइ पठै वसीठि।
दीठि चुराइ दुहुन की लषि सकुचौही दीठि।।११८।।

परकीयामन्यसम्भोगदुःखितामाह। वामे-इति-हेवामे-इति दूतिकाया उक्तिः, हे सुन्दरि कथं, केन हेतुनात्वं मौनं-इता प्राप्ता, प्रिये समागते-इति शेषः। अपि पुनः त्वयाऽहं दूतीकृता दूतित्वेनप्रेषिता प्रियाह्वानायेत्यर्थः। तदा नायिका प्राहं प्राह-अपीति-सम्भावनायायुभौ युवां त्वां नायकञ्च सत्रपौसलज्जौ वीक्ष दृष्ट्वा मयाऽपि कृपा दध्रे त्रपां धृतवत्यस्मि। उभयोः सलज्जवीक्षणानुमितसंभोगलक्षणान्ममापि लज्जा सञ्जेति कोपोक्त्या दुःखितत्त्वं व्यज्यते तेन परकीयान्यसंभोगदुःखिता ज्ञातव्या-स्वभावोक्तिरलङ्कारः।

केशग्रथने पाटवं प्रिय! पश्यामि तवैव।
नीररहितकेशेषु यन्नीरं स्रवति तथैव।।११९।।

रहौ गुहे वैनी लषे गुहिबे के त्योनार।
लगे नीर चुचानजे नीठ सुखाए बार।।११९।।

स्वीयां स्वाधीनभर्तृकामाह। केशेति। हे प्रिय! इति नायिकाया उक्तिः। केशग्रन्थने केशानां ग्रथनकर्मणि पाटवं चातुर्यं तवैव पश्यामि नान्यस्येत्यर्थः। यथैव येनेव ग्रथनेन यत् यस्मात् नीररहितकेशेषु मदीयेषु नीरं स्रवतीत्यद्भुततत्वप्रतिपादनमुखेन पाटवाधिक्य प्रशंसया स्वीयकेशस्पर्शजनितस्वेद-सात्त्विकभावोक्त्या तत्स्वाधीनत्वं प्रेमाधिक्यं च सूचितमिति स्वीया स्वाधीनभर्तृका बोधव्या। अत्र नीररहितकेशेषु नीरस्रवणोक्त्या 'विभावनाविनापि स्यात् कारणं कार्यजन्म चेति लक्षणाद् विभावनाऽलङ्कारश्च बोधव्यः।।११९।।

परकीयेति प्रथा पुरे यासामिह कथितातिं।
ता निर्दोषं प्रापिता निजकमनीयतयाति।।१२०।।

ढुनहाई सब टोल की रही जु सौति कहाइ।
सूतैं ऐंचि पिय त्यौँ करी अदोषि लआइ।।१२०।।

पुनर्यथा। सख्या उक्ते पुनस्तामेवोदाहरति। परकीयेति। हे सुन्दरि! इति सम्बुध्यानुकर्षः। इह पुरे ग्रामे-अति अतिशयेन यासां नायिकानां परकीया इति प्रसिद्धिः सर्वैरिति शेषः। कथिता ताः परकीयाः निजकमनीयतया स्वीयसौन्दर्यतया निर्दोषं प्रापिताः किन्तु त्वत्सौन्दर्यवशीकृतः कान्तस्त्वस्त्वय्येव रमते नान्यत्रेति भावः। एतेन तासां परकीयेति प्रथा त्वया दूरीकृतेति स्वीया स्वाधीनपतिकेति बोधव्या अत्रापि नायिकायाः स्वरूपसौन्दर्यगुणादन्यासां परकीयात्वदोषनिरसनपूर्वकं स्वीयात्वगुणलाभरूपोल्लासालङ्कारः। 'यदान्य गुणदोषाभ्यामुल्लासो न्यसतौयदि'-इति लक्षणात्।।१२०।।

कान्तवशीकरणक्षमं तव रूपं प्रतिभाति।
सपत्नीषु सन्तापमिति तेने वामतयाति।।१२१।।

प्रिय प्रानन की पाहरू करत जतन अति आप।
जाकी दुःसह दसा पर्यौ सौतिन हू सन्ताप।।१२१।।

पुनर्यथा। हे सुन्दरीति। सम्बध्यनुकर्षः। सख्या उक्तिः। तव रूपमतिवामतया-अति सौन्दर्यतया 'वामासुन्दरमूढयोरि'त्यमरः। कान्तवशीकरणक्षमं पतिवशीकरणसमर्थं प्रतिभाति, इति हेतोः सपत्नीषु सन्तापं तेने-इत्यन्वयः। अत्र सपत्नीष्विति परकीयानामपि सापत्न्यभावरहितानां तत्प्रीतिविक्षोभात्सन्तापा-धिक्यमित्याशयः। पतिपत्नी सभर्तृकेत्यमरः। अत्र तापनिर्वतकसौन्दर्याधिक्यरूपगुणात् सपत्निकाद्यासु सन्तापाधिक्यरूपदोषप्राप्तिरुक्ता तेन 'यदान्यगुणदोषभ्यामुल्लासोन्यस्यतौ यदि'-इति लक्षणाद्-

उल्लासालङ्कारः। अन्यस्य गुणेनान्यस्य गुणः, अन्यस्य दोषेणान्यस्यदोषः, अन्यस्य गुणेनान्यस्य दोषः, अन्यस्यदोषेणान्यस्य गुण इति तस्यचातुर्विध्य प्रतिपादनात्। अत्रान्यस्यगुणेन अन्यस्य दोष इति तृतीयकोटिगत लक्षणानुगतिरित्यलं पल्लवितेन।।१२१।।

**सखि निमेषमपि यद्विना न प्राणा विरमन्ति।**
**तस्मिन् गमनं चिन्तयति कथय कथं वत्स्र्यन्ति।।१२२।।**

**रहि है चञ्चल प्रान ये कहि धौ कौन अगोट।**
**ललन चलन की चित धरी कलन पलन की ओट।।१२२।।**

प्रवत्स्यत्पतिकां स्वीया मुदाहरति। सखीति। हे सखि! इति नायिकाया उक्तिः। यद्विना येन विना निमेषं पलमात्रमपि प्राणा न विरमन्ति न विश्रमन्ति तस्मिन् प्रिये गमनं चिन्तयति सति ध्यायति सति मम प्राणाः कथं केन प्रकारेण वत्स्र्यन्ति वर्तिष्यन्ति इत्यन्वयः। अत्र पत्युः प्रवासचिन्तन-काल एव तद्वियोगजसन्तापव्याकुलीकृतमानसा क्षणमपि तद्वियोगासहत्वप्रतिपादनमुखेन तत्प्रवासं निवारयन्ती सखीं प्रत्याह। सखीषु विरहाधिक्यकथनात् तद्वारैव तत्प्रवासनिवरणमिति भावः। तेन समानलज्जा-मदनपराधीनतया मध्याप्रवत्स्यत्पतिकेयं बोधव्या। अत्र च गमनचिन्तनरूपाऽसमग्रहेतोस्तद्वियोगासहत्वसन्तपाधिक्य रूप समग्रकार्यसम्पादनात्' विभावनाऽलङ्कारः।।१२२।।

**तव वियोगकृशतनुरियं निजं वर्णमधुनापि।**
**प्रिया नाप सुन्दर! कथं कथयसि गन्तुमथापि।।१२३।।**

**अजौ न आये सहज रँग विरह दूबरे गात।**
**अब ही कहा चलाइयतु ललन चलन की बात।।१२३।।**

पुनर्यथा। तवेति। नायकं प्रति सख्या उक्तिः। वियोगेन कृशा तनुर्यस्याः सा-इयं तवप्रिया-अधुना-इदानीमपि निजं स्वाभाविकं वर्णेन-आप प्राप्ता अथापि कथं केनापि प्रकारेण गन्तुं प्रवासगमन वार्तां वदसीत्यन्वयः। एतेन पूर्वप्रवासकृतविरहवैवर्ण्यप्राप्तायाः पुनरपि गमनवार्ताश्रवणेन वैवर्ण्याधिक्य प्राप्तिर्भविष्यतीति त्वदीया निर्दयत्वं प्रतिभाति, अत इदानीं गमनवार्ताऽपि न कार्येति गमनवार्त्ता निषेधेन तद्गमनं निषिध्यते-इति सखी वचनाभिप्रायः सखीमुखेन तन्निषेधान्मुग्धा प्रवत्स्यत् पतिकेयं बोधव्या। संयोग-रसमग्नाऽति वियोगस्यानुभावतः। 'तत्सुखे दुःखसंलीना प्रवत्स्यत्प्रेयसी तु सा।' इति भरतोक्तेः अत्र गमन प्रसक्तिमात्रेण विरहवैवर्ण्याधिक्य प्रतिपादनात् 'चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे? इति लक्षणाच्च चपलातिशयोक्तिरलङ्कारः।।१२३।।

**प्रातः पति विदेशगमनं मत्वा सखीमुखेन।**
**घनरागो धृतवीणया पौषे जगे कलेन।।१२४।।**

पूस मास सुनि सषिन सौ साँई चलत सवार।
कर गहि वीन प्रवीन तिय गायो राग मलार।।१२४।।

पुनर्यथा। प्रातरिति। प्रातरेव पत्युर्गमनं प्रवासायेति शेषः। इति सखीमुखेन मत्वा ज्ञात्वा पौषे पौषमासे धृतवीणा यया तया कलेन गम्भीरेणेत्यर्थः घनरागो मेघराग जगे गीत इत्यर्थः। अत्र पौषमासे मेघरागोचारणात्–मेघागमसूचितदुर्दिनप्राप्तिरूपतत्प्रवासविच्छेदकदुर्निमित्तदर्शनाभिप्रायगर्भितक्रियया प्रौढात्वं प्रतीयते तेन तेन प्रौढा प्रवत्स्यत्पतिका बोधव्या। एतद् दुर्निमित्ते जाते सर्वे निराकरिष्यन्त्येवेति तस्या आशयः। यद्वा मेघरागालापमात्रश्रवणेन, भाविदुर्निमित्तं ज्ञात्वा कान्तोऽपि तदाशयं मत्वा न गमिष्यतीति तद्गमनं क्रियैव निषिध्यते। कलोमन्द्रस्तु गम्भीरे–इति, मेघच्छन्नेह्नि दुर्दिनमितिचामरः। पिहितवरवृत्तान्तज्ञातुः साकूतचेष्टितमिति लक्षणात् पिहितालङ्कारः। दुर्निमित्ते जातं कदापि न गमिष्यतीति ज्ञातवत्या धृतवीणाया मेघरागोच्चारणरूपसाकूतचेष्टा दर्शनाल्लक्षणानुगतिः।।१२४।।

गच्छन्तं श्रुत्वा हितं ह्रिया किमपि नोवाच।
सदगद्गदेन गलेन वा रुद्धो दीनदृशा च।।१२५।।

ललन चलन सुनि चुप रही बोली आयु न ईठ।
रष्यो गहि गाढ़े गरै मनौ गलगली डीठ।।१२५।।

परकीयां प्रवत्स्यात्पतिकामुदाहरति। गच्छन्तमिति। हितं मित्रमुपपतिमित्यर्थः। गच्छन्तं प्रवासायेति शेषः। श्रुत्वा सा ह्रिया–लज्जया किमपि नोवाच किन्तु तस्याः सगद्गदेन गलेनेव तस्याः–दीनया दृशा च स नायको रुद्धः गमनान्निवृत्तः। अत्र–अप्रकट परपुरुषानुरागा परकीया इति लक्षणात्। मित्रस्य प्रवासगमनकाले–आगत्य–अप्रकटानुरागत्वात् प्रत्यक्षं तं निवारितवती किन्तु उपवासिनी गणे मिलित्वा सगद्गदेन गलेन दीनदृशा च व्यवस्थितां मामेतादृशीं दृष्ट्वा न गमिष्यतीति वैदग्ध्तया तद्गमन निषेधात्। परकीया प्रवत्स्यत् प्रेयसी बोधव्या। अत्र सख्याः सखीं प्रत्युक्तिः कल्पनीया। 'व्याजोक्तिरन्य हेतूक्त्या यदाकारस्य गोपन मिति लक्षणाद् यात्राकाले सगद्गदत्वदीन दृक्त्वेनावस्थिता सर्वासां दृष्ट्वा स्वयमपि तथा आसेति क्रियया स्वीयप्रेमाकारगोपनाद् व्याजोक्तिर्बोधव्या। अत्र प्रवासाख्यो विप्रलम्भशृङ्गारः। तल्लक्षणं प्रवासो भिन्नदेशत्वं कार्याच्छापाच्च सम्भवात्। तत्र कार्यजस्तु भावी भवन् भूत इति त्रिधास्यात्तत्र कार्यजः। अत्र भाविकार्यजो विप्रलम्भः, तस्मिन् दशकामदशा भवन्ति तासु रुदिताख्या दशमीति दिक्।।१२५।।

श्रुते मित्रगमने यदा जातं नयनमुदश्रु।
जृम्भयैव सहचरिगता तदा जुगोप तदश्रु।।१२६।।

ललन चलन सुनि पलन मैं असुवा झलके आइ।
भई लषाइ न सषिनहू झठै झूठ जभाइ।।१२६।।

पुनर्यथा। श्रुते-इति। अत्रापि सख्या सखीं प्रत्युक्तिः। अथवा कवेरुक्तिः कल्पनीया। मित्रस्य गमने श्रुते सति यदा नयनं नेत्रयुगमित्यर्थः। जातित्वादेक वचनम्। उद्-ऊर्ध्वं अश्रु यस्मिन् तत् तादृशं जातं तदा सहचरिगता सखी वर्गे वर्त्तमाना तदश्रुजृम्भयैव जृम्भामिषेण जुगोप अत्र मित्र गमनश्रवणमात्रेण भावितद्वियोगजन्माश्रु समागमात् तत्प्रीति प्रादुर्भावगोपनं जृम्भमिषेण कृतमित्याशयः। परकीयाया अप्रकट पर पुरुषानुरागवत्वात् अत्राश्रुसंज्ञकः सात्त्विकभावः। 'हर्षरोषविषादेभ्यो नेत्राभ्यां तु जलोद्गमः। अश्रुसंज्ञकमित्युक्तं हर्षजं शीतलं स्मृतम्।' इति भरतोक्तेः। अत्र मित्र गमनश्रवणमात्ररूपासमग्रहेतोस्तद्वियोग-जनिताश्रुसन्निपातरूप समग्र कार्यसम्पादनाद् विभावनाऽलङ्कारोऽपि। यथाकथञ्चिद् विभाति। वस्तुतस्तु-अत्र चपलातिशयोक्तिर्ज्ञातव्या। 'चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे।'-इति लक्षणात्। प्रवासप्रसक्तिमात्रेण तद्वियोगजन्याश्रु सन्निपातरूपकार्यसम्भवात्। किञ्चास्मिन् पद्ये नीरक्षीरन्यायेनैकी भावेनानयोः सङ्कर इत्यलं विस्तरेण। जृम्भते स्फोटयेदङ्गं बालमाश्लिष्य चुम्बतीत्यादि परकीयाया अनुभावेङ्गितवर्णनात् परकीया प्रवत्स्यत्पतिका बोधव्या। जृम्भाङ्गभङ्गक्रियया तत्प्रवासप्रतिषेधोऽपि व्यज्यते-इति दिक्।।१२६।।

**नीत्वा सर्वसुखानि वै गच्छसि रमण! सहैव।**
**शिशिरनिदाघनिशादिने त्यक्ते कथमत्रैव।।१२७।।**

**चलत लचत लौ ले चले सब सुष संग लगाइ।**
**ग्रीषमवासर सिसिर निस पिय मो पास बसाइ।।१२७।।**

पुनरपि स्वीयां प्रवत्स्यत्प्रेयसीमुदाहरति। नीत्वेति। रमयतीति रमणस्तत्सम्बुद्धौ हे रमण! इति नायिकाया उक्तिः। सर्वाणि सुखानि सहैव नीत्वा वै-इति निश्चयेन त्वं गच्छसि, शिशिरश्च निदाघश्च शिशिरनिदाघौ निशा च दिनञ्च निशादिने, शिशिरश्च निदाघश्च शिशिरनिदाघौ निशा च दिनञ्च निशादिने शिशिरनिदाघनिशादिने यथाक्रमं शिशिरर्तुनिशा निदाधर्तुदिनञ्च-अत्रैव मत्समीपे कथं त्यक्ते इति त्वद्विरहसन्तापाधिक्यान्निशा-दिनयोरप्याधिक्यमत्रभविष्यतीति स्वस्य विरहासहत्वं द्योत्यते, रमणेति सम्बुध्याऽपि विरहासहत्वसम्पादन मिति भावः। अन्यथा शिशिरर्तुनिशा शिशिर्विव निदाघर्त्तुदिनं निदाघ एव। इदानीं निशातु शिशिरर्तुनिशावन्महती भविष्यति दिनमपि निदाघदिनवद्दीर्घं भविष्यति-इति तस्या आशयः। एतेन तन्मध्यवर्तिनि वसन्तर्तौ तत्प्रवासप्रसङ्गः समायातीति भावः। निद्राभावात् निशा न व्यतीता भविष्यति, भोजनादिव्यवहाराभावात्। दिनमपि न व्यतीतं भविष्यतीति त्वद्वियोगे निशादिनयोरपि सुखं नास्तीति सर्वसुखानि सहैव नीत्वा गच्छति, मत्समीपे दुःखमेव केवलं स्थितमित्यनेन वाग्वैचित्र्येण प्रतिषेधो व्यज्यते। तेन प्रौढा प्रवत्स्यत्पतिकेयम् बोधव्या। शिशिर्तुनिशादिनावस्थितिहेतुना समर्थनीयप्रवासप्रतिषेधः समर्थितः। तेन समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्। इतिलक्षणात्काव्यलिङ्गमलङ्कारो विभाति। वस्तुतत्वाक्षेपालङ्कारः। 'आक्षेपोऽन्योविधौव्यक्ते निषेधे च तिरोहिते'-इति लक्षणात्।।१२७।।

तामपि सजलविलोचनां दृष्ट्वालं गमनेन।
सगद्गदं हृदये धृता सा रमणी रमणेन।।१२८।।

विलषी डबकौ है चषन तिय लखि गमन वराइ।
पिय गहवर आयौ गरै राबी हियै लगाइ।।१२८।।

पुनर्यथा। तामपीति। सख्याः सखीं प्रत्युक्तिः। सा रणमी रमणेन प्रियेण सगद्गदे यथा भवति तथा हृदये धृता यात्राकालोपयुक्तसम्मेलनं कृतत्वानित्यर्थः। किं कृत्वा सजले साश्रुणी विलोचने यस्याः सा तामपि साश्रुनयनयुगलां दृष्ट्वा स्वयमपि सगद्गदस्वरेण युक्तः क्रोडीकृतवान् अत एव गमनेन यात्रया-जलं निवारितम्। प्रेमाधिक्याद्भाविवियोगजनसन्तापसम्भूतखेदादिना रोदितीति हेतोः यात्राया अकरणं श्रेय इति भावः। सख्योप्यन्तरङ्गा अन्तरङ्गवार्त्ताकरणाद्यूनोः सम्मेलनमेकान्त एव भवतीति प्रसिद्धेः। अत्र नायकस्येष्टतरयात्राकालोपयुक्तसम्मेलने कृतेऽपि यात्राभङ्गरूपानिष्ट-प्रतिलम्भाद्विषमालङ्कार;। 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमादि' तिलक्षणात्। नायिकास्तूत्कण्ठार्तसिद्ध्या प्रहर्षणालङ्कारः अत्रानयोः समविमयोरेकपद्ये निवेशात् तिलतण्डवत् पृथगुपन्यासात्संसृष्टिः। वस्तुतस्तु-अधिकारिभेदाद्भिन्न-मेवालङ्कारद्वयमिति दिक्।।१२८।।

वामे भामे कामिति प्रोक्तास्म्यहं यथैव।
किमिति नीरदागमगमे प्रवदसिप्रियस्तथैव।।१२९।।

वामा भामा कामिनी कहि बोलौ प्राणेस।
प्यारी कहत लजात नहिं पावस चलत विदेश।।१२९।।

पुनर्यथा। वामे-इति। हे नाथ! इतिम्बुध्यनुकर्षः। वामे! इति सम्बुध्या-अथवा भावे! सति सम्बुध्या कामिनि इति सम्बुद्ध्या यथैव येन प्रकारेण-अहं त्वया प्रोक्तास्मि यथैव येन प्रकरेण तथैव-इदानीमपि वक्तव्येति निष्कर्षार्थशेषः। किन्तु नीरदानां मेघानामगमो यस्मिन्निति नीरदागमः वर्षर्तुकालः तस्मिन् नीरदागमे यो गमः प्रवासः नीरदागमगमः वर्षर्तुकलीनप्रवाससमयः तस्मिन् काले प्रिये-इति सम्बुध्या किमिति मां प्रवदसि-इत्यन्वयः। यद्वा नीरदागमस्य यो गमः-अवसानं शरदागम इत्यर्थः। तसिमन् शारदागमे सर्वेषां यात्रौचित्यकालः शरदिति प्रसिद्धेः। तत्समयेऽपि मां प्रिये-इति सम्बुध्या किमिति प्रवदसि यात्रा काले प्रिये-इति सम्बुद्धिसमञ्जसेव भाति-इति तस्या आशयः। वामे-इत्यादि सम्बुद्धैवाहूता भविष्यामि प्रिये इति सम्बुद्धिस्तु प्रीत्युकर्षविधानसूचिका, अतोऽस्मिन् काले मावेदेति निषेधमुखात् त्वं कपट पाटवारूढः, अप्रियं कुर्वन् प्रिये' इति वदसीति भावः। प्रियास्तु न कदाचित्त्यक्तव्याः यदा प्रिये-इति वदसि तदा मां त्यक्त्वा मा गच्छेति गमननिषेधो वाक्यार्थजनितध्वनिमूलको ज्ञातव्यः वाग्विशेषवैचित्र्य सद्भावात् प्रौढा प्रवत्स्यत्प्रेयसी बोधव्या। 'आक्षेपोऽन्योविधौव्यक्ते निषेधे च तिरोहिते।' इति लक्षणादाक्षेपालङ्कार इति दिक्।।१२९।।

प्रातः पतिगमनक्षणे चलति मिलति पुरेव।
आलिन्दायामब्जपतिरस्ताचलं सिषेव।।१३०।।

मिलि मिलि झिलमिलि मिलि चलत आँगन अथयौ भानु।
भयौ मुहूरत भोर पौरहिं प्रथम मिलान।।१३०।।

पुनर्यथा। प्रातरिति। सख्याः सखीं प्रत्युक्तिः। प्रातः प्रभाते पत्युर्गमनसमये पतिप्रवास मुहूर्ते काले पत्यौचलति सति पुनर्मिलति सति–अरविन्दानां पतिः सूर्यः अस्ताचलं सिषेव अस्तं जगामेत्यर्थः। 'प्रघाणप्रघणालिन्दा बहिद्र्वारप्रकोष्टकेत्यमरः। अत्र प्रातःकालीन पतिप्रवाहमुहूर्त्ते पुनः पुनश्चलनमिलनक्रियया विलम्बाधिक्याद्बहिद्र्वारप्रकोष्टक एव सूर्यास्तमानकालः प्राप्त इति रात्रौ यात्रा न भविष्यति। किञ्च पुनः चलनमिलनक्रियाकलापात्प्रीत्युत्कर्षो व्यज्यते तेन प्रौढा प्रवत्स्यत्पतिकेयं बोधव्या, 'सौकार्येण निबद्धापि क्रिया कार्यविरोधिनी–इति लक्षणाद् द्विवतीयो व्याघातालङ्कार;। कार्यविशेषनिष्पादकतया 'केनचित्सं भाव्यमानादर्शान्तदन्येन कार्यविरोधिनी क्रियासौकर्येण समर्थ्यते चेत् सोऽपि व्याघातः' इति कुवलयानन्दकारैस्पष्टीकृतम्–अनुदात्तेत्व लक्षणात्मने पदस्यानित्यत्वं चक्षिङोङित्करणाज् ज्ञापकादिति सिषेवेति साधुः।।१३०।।

सव्यथसरससकामिका बहुसन्देशकथापि।
गमक्षणेऽतीतेतयोर्न विरमति साथापि।।१३१।।

चाहभरे अतिरसभरे विरहभरे सब गात।
कोरि सँदेसे दुहुन के चले पौरि लौ जात।।१३१।।

पुनर्यथा सव्यथेति। सख्याः सखीं प्रत्युक्तिः, यद्वा कवेरप्युक्तिः कल्पनीया तयोर्नायिकानायकयोः बहवश्च ते सन्देशाः बहुसन्देशाः तेषां कथा सख्यादिद्वारा सन्देशकथनमित्यर्थः। कीदृशी बहुसन्देशा तेषां कथा सख्यादिद्वारा सन्देशकथनमित्यर्थः। कीदृशी बहुसन्देशकथा सव्यथसरससकामिका भावितद्वियोगजन्य दुःखसहिता सरसा रसेन प्रेम्णा सहिता सकामिका कामेन मनोरथेन सहिता सकामिका सा च सव्यथसरसकामिका गमनक्षणे गमनमुहूर्ते व्यतीतेऽपि गतेऽपि सति तथापि तदापि न विरमति न विरामं प्राप्नोति, अत्रापि सव्यथसरसकामिकबहुसन्देश कथारूपक्रियया गमनमुहूर्तातीतकालः समायातःमुहूर्तेऽतीते न गमिष्यति–इति सौकार्यतया पतियात्रारूपकार्यविरोधसम्पादनं कृतमिति द्वितीयो व्याधाताऽलङ्कारः। 'सौकार्येण निबद्धापि क्रिया कार्य विरोधिनीति लक्षणात्।।१३१।।

त्यक्तं प्रेम विभिन्नता जाता मयाऽधुनैव।
प्रथमकथा कथनेन किं त्रपते मनो ममैव।।१३२।।

भये बटाऊ नेह तजि बाद बकत बेकाज।
अब अलिदेत उराहिनौ उर उपजत है लाज।।१३२।।

परकीयां प्रवत्स्यत्प्रेयसीमाह। त्यक्तमिति। सखीं प्रति नायिकाया उक्तिः। हे सखि! इति सम्बुध्यनुकार्यः। मया प्रेम त्यक्तं यद्वा तेनतत्प्रीतिस्त्यक्ता ममाधुनैव तेन विभिन्नता जाता। किञ्च प्रथमा चासौ कथा च तस्याः कथानेन किं न किमपीत्यर्थ;। ममैव मनःस्वान्तस्तद्वार्त्ताकथनेन त्रपते लज्जते-इत्यन्वय (एवं च यदा प्रथमनेनमित्रेण प्रीतिर्जाता तदास्य गमनागमनं मदधीनमिदानीमेतस्य निष्ठुरत्वं पश्य-इति तस्या आशयः। तस्मान्मयपि प्रेम त्यक्तं मित्र! त्वं हि प्रीतिमूलमेव-विभिन्नता जातेत्यर्थ;। अत्र स्वात्मनोऽति विरक्तसूचक वाग्वैचित्र्यात्सखीद्वारातत्प्रवासप्रतिषेधनमिति व्यज्यते। स्वभावोक्तिरलङ्कारश्च।।१३२।।

**धुरं ददति सदनस्य सा उपवासिनी प्रियाय।**
**पत्यौ प्रवसति कामिनी सहसितमश्रु निनाय।।१३३।।**

**चलत देत आभार सुनि उही परौसिन नाह।**
**लसी तमासे के द्रगन हाँसी आसुन माह।।१३३।।**

पुनर्यथा। धुरमिति। सख्याः सखीं प्रत्युक्तिः। सा कामिनी पत्यौ प्रवसति प्रवासोन्मुखे सति हसितेन सहितं सहसितं च तद्-अश्रुनेत्रजलं निनाय किं कुर्वति सति सदनस्य गृहस्य धुरं भारं कस्याश्चिद्-उपवासिन्याः प्रियः तस्मै ददति सति-इत्यन्वयः। उपवासिनीप्रियस्तस्या उपपतिः तेन यथा कथञ्चित् परकीया प्रवत्स्यत्पतिका-उपवासिनीप्रियस्य गृहकार्यादिषु सङ्गमो भविष्यदितिहेतोर्हसितं पतिप्रवासकाले भाविताद्विरहसन्तापाधिक्यदर्शनाश्रुनिपातः। वस्तुतस्तु परकीयभेदेषु मुदितेयं बोधव्या। स्वस्यानुकूल-देशादिकालप्राप्तो प्रहर्षिता, भवेद् यदा सखीमध्ये मुदितोक्ता मनीषिभिः।'-इति लक्षणात्, स्वभावोक्तिरलङ्कारश्च परकीयाया जातिस्थस्वभाववर्णनात्।।१३३।।

**विरहोद्रुपदसुतावसनमिव वर्द्धते चिराय।**
**अवधि दिवस दुःशासनो यस्यान्तं न जिगाय।।१३४।।**

**रह्यो ऐंचि अन्तत लह्यौ अवधि दुसासन वीर।**
**आली बाढ़त विरह ज्यौं पाञ्चाली की चीर।।१३५।।**

स्वीयां प्रोषितभर्तृकामुदाहरति। विरह इति। नायिकायाः सखीं प्रत्युक्तिः। विरहो वियोगः पतिवियोगकृतः सन्ताप इत्यर्थः। द्रुपदसुताया द्रौपद्याः वसनमिव चिराय चिरकालं यथा भवति तथा वर्द्धते। किञ्च अवधेर्दिवसएव दुःशासनो नाम यस्यान्तं यस्यावसानं न जिगाय, नानाकार्यवशा-सक्तो देशान्तरं गतः प्रियः। 'सा मनोभवदुःखार्ता भवेत्प्रोषितभतृका'-इति लक्षणात्। अत्र विरहस्योपमेयभूतस्य द्रौपदीवसनरूपस्योपमानस्य च - अवधिदिवस्योपमेयस्य दुःशासनस्य चोपमानभूतस्य प्रतिक्षणप्रवर्धमानरूपेण चावसनानप्राप्त्यभावरूपेण साधारणधर्मेण सहोपमानात् पूर्णोपमाऽलङ्कारः।।१३४।।

अवधिदिनेऽतीतेऽथ सा कृशतरतनुरपरेव।
कृताचूतकलिकाभिरपि विलसति विकलतरेव।।१३५।।

हिय औरे सी ह्वै गई टरै अवधि के वाम।
दूजै करि डारी षरी वौरी वैरे आम।।१३५।।

पुनर्यथा। अवधीति। अथाऽनन्तरम्। अवधिदिनेऽतीते गते सति सा बाला कृशतरा तनुर्यस्याः सा अपरा इव जाता अपि पुनः चूतस्य रसालस्य कलिकाभिः चूतमञ्जरीभिः, अतिशयेन विकला विकलतरेव कृता विलसतीत्यन्वयः। एतेन वसन्तागमे पत्युरागमनावधिर्विज्ञायते किञ्च पूर्वमेव कृशाङ्गी। पुनः पति विरहजनित सन्तापात् कृशतरा जाता, पुनरप्यवधौ गते सति वसन्तागमे चूतमञ्जरीर्दृष्ट्वा विकलतरेवजातेत्यर्थः। अत्र प्राक्सिद्धः स्वगुणोत्कर्षोऽनुगुणः परसन्निधेरिति लक्षणात् पूर्वं कृशाङ्ग्या विरहजन्य तापेन वसन्तागमे रसलमञ्जर्यादिदर्शनेन च अतिकार्श्यरूपगुणप्राप्ति-लक्षणानुगामित्वादनुगुणालङ्कारः। स्वीया प्रोषितभर्तृका मुग्धैव बोधव्येति सख्याः सखीं प्रत्युक्त्या तत्कार्श्यादिवर्णनादिति दिक्।।१३५।।

प्रेमहृदयपत्रानुगतमलक्षितं यदुवास।
तद्वज्राक्षरमिव तनौ विरहाग्निना बभास।।१३६।।

छप्यौ नेह कागद हियै भइ लखाइ न ठाँकु।
विरहत चै उधरौ सु अब सैहुड़ के सौ आँकु।।१३६।।

अथ सख्या सखी प्रत्युक्त्या परकीयां प्रोषितभर्तृकामुदाहरति। प्रेमेति। हृदयमेव पत्रं हृदयपत्रं हृदयपत्रे-अनुगतं प्राप्तं हृदयपत्रानुगतं प्रेम तस्या इत्यर्थः। अलक्षितं गुप्तं सत् यद्-उवास स्थितिं तत्प्रेम अधुनेति शेषः। विरहाग्निमित्रवियोगजसन्तापाग्निना तनौ बभास दिदीपे पण्डुता कृशतादिना प्रकटी बभूवेत्यर्थः। किमिव वज्राक्षरमिव। 'व्रज स्नुक्स्त्रीस्नुही गुडेत्यमरः। यथा पत्रोल्लिखित-सीहुण्डक्षीराक्षरम्-अग्नितप्तं प्रकाशते तथाऽप्रकटपरपुरुषानुरागात्वाद् हृदयगतं मित्रप्रेम तद्विराहग्निना तप्तं सत् पाण्डुकार्श्यादिना प्रसिद्धं जातमिति भावः। तेन परकीयेयं प्रोषितभर्तृका बोध्या। अत्र हृदयपत्रानुगतप्रेमवज्राक्षरयोरुपमेयोपमानयो-र्विरहाग्निना सप्तप्तभासमानतारूपसाधारणधर्माभेद सम्बन्धेनानुरञ्जनात् समाभेद रूपकालङ्कारः (यद्वा-उपमेयस्य प्रेम्णे वज्राक्षस्योपमानस्य च विरहाग्नि-सन्तापरूपसाधारणधर्मस्य-इवेत्युपभावाचकेन सहोपादानात्पूर्णोपमाऽलङ्कारः। वस्तुतस्तु-अनयोस्तिलतण्डुलवत्पृथगुपपत्या संसृष्टिरिति दिक्।।१३६।।

नूतनविरहकृतव्यथा यथाऽबला विचकास।
तथाविधामुपवासिनीं दृष्ट्वा तदा जहास।।१३७।।

नये विरह बढ़ती व्यथा षरी विकलजिय बाल।
विलषी देषि परौसिनौ हरषि हँसी तिह काल।।१३७।।

अथैकस्मिन् पद्ये स्वीयापरकीये प्रोषितपतिके उदाहरति। नूतनश्चासौ विरहे नूतनविरहो नूतनविरहेण कृता व्यथा दुःखं यस्याः सा नूतनविरहकृतव्यथा प्रथमपतिप्रवासजनित सन्तापदुःखवती-अबला यथा येन प्रकारेण वदनमालिन्यसाश्रुनयनादिलक्षणेन विचकास शुशोभ तथाविधात्तैरेव लक्षणैर्युक्तामुपवासिनीं समीपवासिनीमन्यां नायिकां दृष्ट्वा-उपलक्ष्य तदा तस्मिन् काले हर्षेणेति शेषः-जहास हसितवतीत्यन्वयः। अत्रापि सख्याः सखीं प्रत्युक्तिर्बोध्या। किञ्च 'स्मितरुदितक्रोध-त्रासादीनां साङ्कर्यं किलकिञ्चितमि'ति लक्षणात्। किलकिञ्चितसंज्ञो हाव विशेषः स्फुरति। अत्र चत्वारो रसवत्प्रेय ऊर्जस्वित समाहितम्। भावस्य चोदयः सन्धिः सबलत्वमिति त्रयः। अष्टौ प्रमाणालङ्कारा प्रत्यक्षप्रमुखा क्रमादित्यादि लक्षणाद् रसवदलङ्कारः विभावानुभावव्यभिचारिभिरभि-व्यजिञ्जतो रतिशोकहासादिश्चित्तवृत्ति विशेषो रसः स च यत्र परस्पस्याङ्गं भवति तत्ररसवदलङ्कारः। अत्र च विप्रलम्भशृङ्गारस्य हास्यरसोऽङ्गं तेन लक्षणानुगतिर्बोध्येति दिक्।।१३७।।

**वामदृश; स्फुरणेन सा जाता मुदिततरैव।**
**दध्रे नूतनवसनमपि रमणागमं विनैव।।१३८।।**

**मृगनैनी दृग की फरक उर उछाह तन फूल।**
**विनहीं पिय आगम उमग पलटन लगी दुकूल।।१३८।।**

आगमष्यिष्यत्पतिकां स्वीयामुदाहरति। वामेति। सा बाला वामदृशः वामनेत्रस्य स्फुणेन हेतुना एव अतिशयेन मुदिता मुदिततरा जाता, अतएव विनैव रमणागमं विनैवपत्युरागमनं नूतनवसनमपि दध्रे धृतवतीत्यर्थः। स्त्रीणां वामदृशः स्फुरणं प्रियागमसूचकमित्याशयः तेनागमिष्यत्पतिकेयं स्वीया बोधव्या प्रहर्षणाऽलङ्कारश्च अत्रापि सख्या सखीं प्रत्युक्तिः।।१३८।।

**वामभुजास्फुरणे यदा मिलनं नन्दसुतस्य।**
**मिलिस्यामि तेनैव सखि! दक्षिणभुजं निरस्य।।१३९।।**

**बाम बाहु फरकत मिलै जो हरि जीवनमूर।**
**तौ ताही भरि भैटिहौ राषि दाहिनौ दूर।।१३९।।**

पुनर्यथा। वामभुजेति। वामश्चासौभुजश्च तस्य स्फुरणे सति यदा कृष्णस्य मिलनं सङ्गमो भविष्यति तदाऽऽह-हे सखि! अहमपि दक्षिणभुजं निरस्य दूरीकृत्यतेनैव वामभुजेनैव तं मिलिष्यामीत्यन्वयः। स्त्रीणां वामाङ्गस्फुरणं प्रियागमसूचकमित्याद्यगमस्य सत्यता यदा जाता तदा तेनैव मिलिष्यामीति वामबाहोः स्वस्यातिप्रेमास्पदत्वं सूचितमित्यर्थः। अत्रापि हर्षसञ्जारिणा प्रहर्षणालङ्कारेण च भवितव्यम्। एतेन स्वीयागमिष्यत्पतिकेयम्। नायिकायाः सखीं प्रत्युक्तिः।।१३९।।

मलिनतनुर्विरहेण सा बभौ मलिन वसनैव।
अनुपमया रमणागमे निजवदनप्रभयैव।।१४०।।

मलिनदेह वेदी वसन मलिन विरह के रूप।
पिय आगम औरे चढ़ी आनन ओप अनूप।।१४०।।

पुनर्यथा। मलिनेति। सख्याः सखीं प्रत्युक्तिः सा बाला रमणागमे श्रुते सतीति शेषः। अनुपया-औपम्यरहितया। अद्भुतयेति यावत्। निजवदनप्रभया निजमुखदीप्त्यैव बभौ शोभितवती। रमणागमनश्रवण समये वदनप्रभाविशेषशोभिता जातेत्यर्थः, कीदृशी सा बाला विरहेण पूर्वं जातेनैव मलिनशृङ्गारादि राहित्यात् तनुर्मूर्तिरस्याः सा-अत एव मलिनं वसनं यस्याः सा पातिव्रत्य-धर्मपालनान्नूतनवस्त्रादानमपि न योग्यमित्यर्थः। किञ्च तस्यास्तनुवसनादिमालिन्येऽपि पत्यागमवार्त्ता श्रवणे वदनप्रभाया अनौपम्य मिति भावः। तेनागमिष्यत्पतिका स्वीयेयम्। अत्र स्तोकभूषणधारणेन कान्तिपोषणकारिणी विच्छित्तिरिति लक्षणात् विच्छित्तिसंज्ञिकाहावदशेयं ज्ञातव्या। किञ्च वसन भूषणादि कान्तिपोषकहेतुनामसमग्रत्वेऽपि कान्त्याधिक्यरूपकार्योपादानाद् विभावनाऽलङ्कारः।।१४०।।

हितागमनमोदः प्रिये कुसुमामोद इवेह।
प्रसरति किं चातुरतया चतुरालीषु तवेह।।१४१।।

कियौ सयानी सखिन सौ यह सयान मति भूल।
दुरै दुरायै फूल लौ क्यौ पिय आगम फूल।।१४१।।

आगमिष्यत्पतिकां परकीया माह। हितागमेति। हे प्रिये ! तव हितागमनमोदः। मित्रागमश्रवणानन्दः कुसुमानां पुष्पाणामामोद इव। 'आमोदः सेति निर्हारी सुरभिघ्राणतर्पण' इत्यमरः। इह सदने-इत्यर्थः। प्रसरति विस्तारं करोति। किञ्च-इहास्मासु चतुरालीषु चतुराश्च ता आलयः तासु चतुरतया किं भवति न किमपीत्यर्थं चतुरसखीषु चातुर्यं नोचितमिति भावः। एतेन परकीयेयमागमिष्यत्पतिका बोधव्या। अत्र मित्रागमश्रवणानन्दोपमेयस्य कुसुमामोदरूपस्य चोपमानस्य प्रसरणरूप साधारणधर्मस्य च-इवेत्युपमावाचकेन सहोपादानत् पूर्णोपमाऽलङ्कारः। किञ्च किञ्च-उपमेये मित्रागमानन्दे प्रससणरूपधर्मस्तु प्रकाशपर्यावासायी उपमाने कुसुमामोदे विस्तारपर्यवसायी तर्हि कथमियं वैधर्म्योपमेति नाशङ्कनीयम्। गुणदोषौ बुधो गृह्णन्नित्यादिपूर्वोपमोदाहरणेषु कुवलयानन्दकारैरप्पयदीक्षितैः-एतद्दोषपरिहारस्योक्तत्वादिति दिक्। अत्राप्युपमानोपमेययोविम्बप्रतिबिम्ब भावेनाभिभेदाध्यवसायाच्च साधारणधर्मता विज्ञेया।।१४१।।

बहु दिवसैरागमनमिति मिलति चलति पुनरेव।
मिलनघटी जाता तदा सा विरञ्चि घटिकेव।।१४२।।

रहे बरोठे मौ मिलत प्रिय प्रानन के ईस।
आवत आवत ह्वै भई विधि की घरी घरीस।।१४२।।

स्वीयामागतपतिकामाह। बहुदिवसैरिति। बहवश्चते दिवसास्तैस्तवागमनमिति हेतोर्मिलति सति पुनरेव चलति सति सा नायिका नायकयोर्मिलनघटी सम्मेलनघटिका तदा महत्त्वाद् विरञ्जेर्ब्रह्मणो घटिकेव जाता। एतेन स्वीयाऽऽगतपतिका। 'विदेशादागतं श्रुत्वा प्रियं स्वानन्दभावतः। प्रफुल्लितास्या वदति सा स्यादागतभर्तृका।'–इति लक्षणात्। अत्रोपमेयभूतायाः सम्मिलनघटिकाया; विरञ्चिघटिकायाश्चोपमानभूतायाः–अतिविलम्बावसाना रूपसाधारणधर्मस्य च इवेत्युपमावाचकेन सहोपदानात्पूर्णोपमाऽलङ्कारः।।१४२।।

प्रिया ह्रिया न मिलति यदा मिलनायाभिससार।
प्रियभूषण वसनानि सा हृदये परं दधार।।१४३।।

भैटत बनत न भाव लै चित तरसत अति प्यार।
धरति लगइ-लगइ उर भूषन वसन हथ्यार।।१४३।।

पुनर्यथा। प्रियेति। सा प्रिया। यदा प्रियस्येति शेषः। मिलनाय सङ्गमाय–अभिससार जगाम तदा ह्रिया लज्जया न मिलति यत्तदोर्नित्यसम्बन्धः परं केवलं प्रियस्य भूषणानि वसनानि च हृदये दधार धारितवती तन्मिलापानन्देनेत्यर्थः। एतेन समलज्जामदनवत्वं समायाति तेन मध्या–इयमागतभर्तृका–इति व्यज्यते। मध्याजातिस्थस्वभाववर्वनात् स्वभावोक्तिरलङ्कारः।।१४३।।

विरहे जीवनमावयोरिति लज्जाकलनेन।
नोचतुरापि सम्मिमिलतुर्नतनयनौ हृदयेन।।१४४।।

बिछुरै जिये सकोच यह बोलत बनै न वैन।
दोउ दौरि लगे हियै कियै निचौहै नैन।।१४४।।

पुनर्यथा। विरह इति। विरहे वियोगे आवयोर्जीवनं जातमितिहेतोर्या लज्जा पश्चात्तापरूपतस्याःकलनं विचारः। तेन–उभौ नायिका नायकश्च नोचतुः परस्पर–कुशलप्रश्नादि वार्त्तां न चक्रतुः, किन्तु न ते नयने ययोस्तौ सन्तौ हृदयेन सम्मिमिलतुः सङ्गमं चक्रतुरित्यन्वयः। एतेनान्योन्यं प्रीत्युकर्षो व्यज्यते। अत्र व्रीडाख्यः सञ्चारी भावः। तल्लक्षणं यथा। 'नव सङ्गममुर्वग्रस्तवावज्ञापराधतः। धाष्ट्र्याभावो भवेद् व्रीडा तत्र मौनं विचिन्तनम्। अवगूहनभूलेखौ तथा ऽधोमुखवीक्षणमि'ति। अस्याश्च लज्जामदनपराधीनत्वं तेन मध्यैवागत भर्तृका बोध्या। स्वभावोक्तिरलङ्कारः।।१४४।।

यथा यथाऽग्निशिखेव सा श्लिष्यति पति हृदयेऽपि।
तथा तयोरःस्थलकमलजलसेकजसुखमेति।।१४५।।

ज्यौः ज्यौं पावक लपट सी तिय हिय सौ लपटाति।
त्यौं त्यौं छुडी गुलाब सी छतिया अति सियराति।।१४५।।

पुनर्यथा। सा बाला यथा यथा अग्निशिखेव तनुकान्त्या–अग्निज्वालावद्भासमानेति यावत् पत्युर्हृदयेऽतित्यतिशयेन श्लिष्यति मिलति तथा तथा तयोरिति शेषः उरः हृदयं स्थलकमलस्य तस्यः सेकः सिञ्चनं स्थलकमलस्य जलसेकः तस्माज्जातं यत्सुखं तदेति शीतलत्वं प्राप्नोतीत्यर्थः। अत्र विरह सन्ताप–वत्वादग्निशिखोपमायाः सामञ्जस्यं पत्यौ–आगतं तस्य–अत्याश्लेषादिना तस्या; प्रौढत्वं ध्वन्यते। उपमेय–भूतायास्तस्या अग्निशिखायाश्चोपमानभूतायाः स्थलकमलजलसेकसम्भूत–शीतलत्वादिना सङ्गमसुखोत्पन्न शीतलत्वादभेद सम्बन्धेनान्वयात् साधारणधर्मतामुपादाय–इवेत्युपमावाचके नोपादानात् पूर्णोपमालङ्कारः।।१४५।।

जातं मित्रागमनमिति वाचं काचिदुवाच।
सा हसिता रसिता तदा हसिता लसिता सा च।।१४६।।

आयौ मीत विदेश तै काहू कह्यौ पुकार।
सुनि हुलसी विहसी हसी दोऊ दुहुन निहार।।१४७।।

आगतपतिकां परकीयामाह। जातमिति। काचित्सखी मित्रागमनं जातमिति वाचं यदा–उवाच तदा तद्वाचं श्रुत्वा सा हसिता हसितमस्य अस्तीति हसिता, रसिता रसेन प्रेम्णा युक्ता रसिता च। यद्वा रसः शृङ्गारस्तेन युक्ता जाता सा च सखी तस्या हसितरसितादि दशां दृष्ट्वा स्वयमपि हसिता रसिता जाता, एतेन परकीयाया अन्तरङ्गसख्यावचनमिति ज्ञातव्यम्। 'किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधै'रिति भारतोक्तेः। 'इष्टावाप्त्या तु मनसः प्रसादो हर्षसंज्ञक' इति लक्षणात्। हर्षाख्यः सञ्चारी भावः। 'उत्कण्ठितार्थसंसिद्धि विना यत्नं प्रहर्षणमि'ति प्रहर्षणालङ्कारश्च बोध्यः। यद्वा सा जहास सरसा तदा हसिता लसिता सा च–इति पाठे स्वीयापरकीये–आगतपतिके ज्ञातव्ये कस्याश्चित्परकीयायाः काचित्सखी तां प्रति तन्मित्रागमं जातमिति वदति तदा सा स्वीया स्वपत्युरागमानन्दात्सरसा सती जहास हर्षेणेति भावः। सा च परकीया हसितेन युक्ता लसिता जातेत्यर्थः। यद्वा काचित्सखी प्रभातवर्णनव्याजेन मित्रस्य सूर्यस्यागमनं मित्रागमनमिति मित्रपदं श्लेषेण सा–इति तत्सम्बन्धवशात् पद्मिन्याः कुमुदिन्याश्च प्रकाशा–प्रकाशदशां वर्णयन्ती नायिकां प्रत्याह–जात मिति। मित्रागमनं जातं सूर्योदयो जात इति त्वं पश्य–इति–अध्याहारः पद्मिनी तु स्वभर्तुरागमे सरसा जहास त्वमपि तथा भवेति भावः। कुमुदन्यपि सूर्योदयं ज्ञात्वा स्वपत्युर्वियोगाद् अहसिता अलसिता च जातेत्यर्थः। किञ्चस्वीयानामेष एव परमो धर्म इति भावः। अत्र प्रस्तुतपद्मिनीकुमुदिन्योः प्रकाशाप्रकाशवृत्तान्तवर्णनेन। प्रस्तुतस्वीयाधर्मसमारोपश्चारुताहेतुरिति समासोक्त्यलङ्कारः। एतेन तस्याअपिस्वीयात्वं ध्वन्यते तेनालङ्कृतेर्वस्तुध्वनिरिति दिक्।।१४६।।

नन्दनन्द सन्देशमपि कथय कथं कथितासि।
विपुलनयनमानेन किं सखि समानवचनासि।।१४७।।

अहे कहै न कहा कह्यौ तो नन्दकिसोर।
बड़ बोली कत होत बलि बड़े दृगन के जोर।।१४७।।

अभिसन्धितामाह। अयीति कोमलालापे हे सखि! इति नायिकाया उक्तिः। नन्दस्य नन्दः नन्दनन्दः कृष्णः तस्य सन्देशं मद्वचनोत्तरं कथय तेन त्वं कथं केन प्रकारेण कथिताऽसि–उक्तासि पुनः पुनः प्रश्ने कोपोक्तिरवगन्तव्या तदा सख्या उक्तिःविपुलनयनयोर्मानिन गर्वेण किं सगर्ववचनासि सगर्ववचनासीत्यन्वययोजना। एतेन कृष्णानयनाय प्रेषिता सखी यदा किमपि नोवाच तदा कृष्णप्रीतियात्रां तां ज्ञात्वा त्वं कथं कथितासि–इति सापेक्षोक्तिरेव बोध्या तज्ज्ञात्वा सख्या अपि तां प्रति सापेक्षोक्तिरिति भावः। यद्वा विपुले नेत्रगर्वेण त्वं सगर्ववचनासीति नायिकाया उक्तिः सखीं प्रति बोध्या तदापि कोपोक्तिरिति। यद्वा नन्दनन्दनस्य यः सन्देशस्त्वदर्थे प्रेषितः तं कथयेति कथं कथितासि–उक्तासि तेनेति नायिकां प्रति सखीवाक्यम्। दीर्घनयनगर्वेणहेतुना किं सगर्ववाक्यासि प्रश्ने कृते न वदसीति सख्या उक्तिः। तेनापि प्रीत्यभिसन्धिता ज्ञातव्या–इति दिक्।।१४७।।

नातीतं क्षणमपि पुरा सङ्केतागमनाय।
पदमपि योजनशतसमं पथि बभूव सदनाय।।१४८।।

जदपि तेज रौ हाल चलि लगी न पल की वार।
त्यों वैड़े को घर भयौ पैड़ो को सहजार।।१४८।।

विप्रलब्धामाह। नातीतमिति। सखीं प्रतिनायिकोक्तिः। पुरा पूर्वं सङ्केतागमनाय क्षणमपि–अतीतं नासीत्। किञ्च सदनाय सदनं गतुमित्यर्थः। पदमपि पदमात्रमपि योजनशतसमं पथिमार्गे बभूव जातमित्यन्वयः। एतेन तत्प्रीत्युकर्षेण दूरस्थमपि सङ्केतस्थलं क्षणेनाहं प्राप्ता पुनस्तत्र प्रियाऽलाभात् सदनाय पदमात्रमपि योजनशतोपापसीत्तदलाभजनितसन्तापभूतकार्श्यनैर्बल्यादिनेति भावः। एतेन परकीयेयं विप्रलब्धा पूर्वं सङ्केतस्थलं गत्वा तत्र तदलाभात्–शीघ्रं सदनायागता पत्यादिभयादिति। सखीषु स्वकीयवृत्तान्तवर्णनात्सख्यपि–'अन्तरङ्गा वेदितव्येति विश्वासविश्रामकारिणी पार्श्वचारिणी सखीति लक्षणात्। अत्र शीघ्रगमनविलम्बागमनकथनाद् अनुक्तोऽपि प्रियतमालाभो व्यज्यते तदलाभे सन्तापाधिक्यं च ध्वन्यते। तेन वाक्यार्थजन्मा भावध्वनिरवगन्तव्यः। अत्र स्तम्भाख्यः सात्त्विकभावः स्तम्भो हर्षभयाश्चर्यविषादामर्षसम्भवे'–इति लक्षणात्। अत्र–'अनिष्टास्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमादि'ति लक्षणात् तृतीयोऽयं विषमालङ्कारः। 'सङ्केतस्थान उद्दिष्टे यस्या नायाति स प्रियः। विप्रलब्धा तु सा ज्ञेया प्रियस्यानवलोकनात्।' इति लक्षणाद् विप्रलब्धा बोधव्या।।१४८।।

गगनमंशुमाली करैररुणतरं प्रतिभाति।
जातश्चटकाली ध्वनिर्वनमाली नायाति।।१४९।।

नथ लाली चाली निसा चटकाली ध्वनि कीन।
रति पाली आली अनत आए वनमाली न।।१४९।।

उत्कण्ठितामाह। गगनमिति। सखीं प्रति नायिकाया उक्तिः। हे सखीति सम्बुध्याक्षेपः। अंशुमालीकरैः सूर्यकरैः गगनमाकाशमरुणतरं प्रतिभाति चटकालीध्वनिश्च जातः वनमाली कृष्णः अथापि नायातीति-औत्सुक्य चिन्तासञ्चारिभावौ ज्ञातव्यौ। 'इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता। चिन्ता तापत्वरा खेदः चिन्ता निश्वसितादिकृत्। स्वीयचौरा पराधाद्यैः परक्रौर्यादितस्तथा स्वानिष्टचिन्तनं यत्तु सा शङ्केत्यभिधीयते'-इति तल्लक्षणात्। आगन्तुं कृतचित्तेऽपि प्रिये नागमनकारणम्, चिन्तयन्ती च दुःखार्ता भवे दुत्कण्ठिता वधूः।-इति लक्षणादुत्कण्ठिता ज्ञातव्या सा च परकीयेति वनमाली पदोपादानात्। एतेन रजनी सर्वा गता प्रभात समयोऽपगतः। तेनान्यत्रैव रमितमिति वाक्यार्थजना ध्वनिः। तेन विषादाख्यः सञ्चारीभावो व्यज्यते। 'इष्टानवाप्ति प्रारब्धकार्यासिद्धिविलोपतः। अपराधादितोऽपिस्याद् विषादो ह्यनुतापते'ति लक्षणात्। अत्र वनमाली पदोच्चारणात्। कयाऽपि नायिकया कस्मिञ्चिद् वने रमिते इति-अनुमानालङ्कारोऽपि व्यज्यते। तेन पदार्थजन्या ध्वनिरिति। अलं पल्लवितेना।।१४९।।

वारं वारं जृम्भते रम्भोरुः शमनाय।
सख्यस्तया विवापिताः प्रियागमनमवधाय।।१५०।।

झुकि झुकि झपको है पलनि फिर फिर मुरिज सुहाइ।
जानि आगमन नींद मिस दीं सब सखी उठाइ।।१५०।।

अथ स्वीयां वासकसज्जा मुदाहरति। वारंवारमिति। अत्रापि सख्याः सखीं प्रत्युक्तिः, यद्वा कवेरुक्तिरियं सम्बोध्या। रम्भेव-ऊरु यस्याः सा रम्भोरुःशयनाय शयनं कर्तुमित्यर्थः। वारं वारं जृम्भते प्रियस्य पत्युरागमनमवधाय ज्ञात्वा सख्या तया विवापिता विसर्जिता-इत्यन्वयः। अत्र पुनः पुनर्जृम्भादिक्रियया सहचरीणां विसर्जनं कृतमिति शयनाभिलाषिणी प्रौढा वासकसज्जा बोध्या। 'कुरुते मण्डनं यस्य सज्जिते वासवेश्मनि। सा तु वासकसज्जास्यात्तद्दिने चाति हर्षिता। इति लक्षणात्। पर्यायोक्तालङ्कारश्च ज्ञातव्य इति।।१५०।।

यथा यथैव विभावरी निकटं तथा तथैव।
गृह कृत्यानि करोति सा सप्रेमा चपलैव।।१५१।।

ज्यों ज्यों आवत निकट निशि त्यौं त्यौं खरी उताल।
झमकि झमकि टहलै करै लगी रहचटै बाल।।१५१।।

परकीया वासकसज्जामाह। यथा यथेति। सा वनिता प्रेम्णा सहिता सप्रेमा चपलैव चञ्चलतरा गृहस्य कृत्यानि कार्याणि मार्जनलिम्पनादीनि यथा-यथा विभावरी रात्रिर्निकटमेति तथा तथैव

करोतित्यन्वयः। एतेन मित्रससङ्गमाभिलाषो व्यज्यते। निशासुमित्रसङ्गमो भावीति सङ्केतस्थल-सम्मार्जनादिककर्मणा परकीयेय वासकसज्जा किं च गृहएव तस्याः सङ्केतस्थलमिति स्वहस्तेनैव-कार्यकरणात्-शून्यत्वमपि द्योत्यते। तल्लक्षणं पूर्वोक्तमेव। पर्यायोक्तालङ्कारश्च बोध्यः। गृहकार्य-सम्पादनमिषेण सङ्केतमार्जनरूपस्वेष्टसाधनादिति दिक्।।१५१।।

चलसि विजितचन्द्रानने पतिं मन्दगमनेन।
जिता इन्दुवदनाश्च या तदा ऋक्षनिचयेन।।१५२।।

फूली फाली फूल सी फिरै जु विमल विकास।
भोरत रै याहौं हिते चलत तोहि पिय पास।।१५२।।

अभिसारिकां स्वीया माह। चलसीति। विजितश्चन्द्रो येन तद्विजितचन्द्रमाननं यस्यास्तसम्बुद्धौ। यदा यस्मिन् काले त्वं पतिं प्रति मन्दगमनेन धीरगत्या चलसि गच्छसि। तदा तस्मिन् काले इन्दुवदनवद्वदनं यासां ताः-इन्दुवदनाश्च ऋक्षनिचयेन नक्षत्रैर्जिता आसन्नित्यन्वयः। मन्दप्रकाशा जाता इत्यन्वयः। तेन त्वद्वदनं कोटिचन्द्रचमत्कृतशालीतिध्वन्यते। एतेन त्वं पतिमिलनायाधुनापि गच्छेति सख्युपदेशोद्योत्यते। अत्र विजितचन्द्रानने इति साभिप्रायविशेषणोपन्यासात्परि-करालङ्कारः।।१५२।।

अपि चन्द्रालोके नभसि तमसावृते सुखेन।
प्रियमभिसर चन्द्रानने सखि सस्मितवदनेन।।१५३।।

छप्यौ छपाकर छिति छयौ तमस सिहरन सहनार।
हसति हसति चल ससिमुखी मुषतै घूँघट हार।।१५३।।

पुनर्यथा। अपीति। हे सखीति सख्या-उक्तिः। चन्द्रस्य-अलोकम् अदर्शन यस्मिन् तस्मिन्-अत एव तमसावृत्ते नभसि गगने सति हे चन्द्रानने! सस्मितवदनेन त्वं लसतीति विशेषः। प्रियं प्रति सुखेन अभिसर गच्छेत्यन्वयः। एतेन सान्धकार समयेऽपि मन्दहसितकौमदुी प्रकाशेन न च चन्द्रवदनप्रकाशेन तवाभिसारे न काऽपि क्षतिरिति भावः। अत्रापि साभिप्राय विशेषणोपन्यासात्परि-कारालङ्कारः। 'अभिसारयते कान्तं या मन्मथवशङ्गता, स्वयं वाभिसरेद् वासं प्रोक्तासाऽभिसारिका।' सखीवाक्येन सख्या अभिसारो व्यज्यते इति दिक्।।१५३।।

( चल चल चञ्चललोचने! जलदागम समयेषु।
त्वं तडिदिव काशिष्यते निजकान्त्या सघनेषु।।१५४।। )

( चलहु चलहु चञ्चल नयनि! यह बदराई रात।
बदरी विजुरी सी लगै प्रिये! तुम्हारो गात।।१५४।। )

(लिपिकार ने इसे १५४ दोहे के मूल तथा अनुवाद को छोड़ दिया ता, अतः संपादक द्वारा निर्मित है)।

अभिसारिकां परकीयामाह। चलेति। हे चञ्चललोचने चपलनयने। सघनाः सान्द्रा घना येषु तेषु जलदागमसमयेषु वर्षर्तुकालेषु चल-चल-इत्यादरे वीप्सा शीघ्र प्रत्यागमनार्था। अन्धकाराभिसरणेऽपि मदीयकान्त्या प्रकाशो भविष्यतीति चेत्तर्हि त्वं तडिदिव काशिष्यसे शोभिष्यसे सर्वेषां तडित्प्रकाशभ्रमात् तवाभिसरणं कोपि न ज्ञास्यतीति। परकीयानां सान्धकारकाल एवाभिज्ञो योग्य इति ध्वन्यते। तस्माच्छ्रीघ्र चलचलेतिवारद्वयमुक्तम्। अत्र तडिदिवेत्युत्प्रेक्षाऽलङ्कारेण विनानिष्टं च तत्सिद्धिर्यदर्थं कर्तुमुद्यमइति तृतीयासमालङ्कारो व्यज्यते। त्वत्कान्तिस्तडित् कान्ति निभेति धनीभूतान्धकारे तत्साम्यभ्रमो न कस्यापि भविष्यतीत्यनिष्टलाभं विनैव कार्यसिद्धिवर्णनात्।।१५४।।

मार्गे गोरजसा वृत्ते गोपजनेषु गतेषु।
न चलसि हितमिलनाय किं सखि! सन्ध्या समयेषु।।१५५।।

गोप अथाइन तै उठे गोरज छाईं गैल।
चलि चलि अलि अभिसार की भली सझौसी सैल।।१५५।।

पुनर्यथा। मार्गे इति। हे सखीति सख्या उक्तिर्नायिकां प्रति। सन्ध्यासमयेषु सन्ध्याकालेषु हितमिलनाय मित्र सङ्गमाय किं न चलसीति। प्रतिदिन सन्ध्यायां मित्रसङ्गमयोग्यः काल इति सन्ध्यानां बाहुल्याभिप्रायाद्-बहुवचनोपादानम्। पुनर्मार्गे गवी रजसवृते ईषत्सान्धकारे गोपजने गोपजनेष्वपि स्व स्वगृहं प्रति गतेषु सत्सु इदानीमेव परकीयानामभिसारत्योग्यः काल इति।।१५५।।

कृष्ण घने गगने तमसि निशि तमाल कुञ्जेऽपि।
दीपशिखेव लसिष्यते सा चलदतिपुञ्जेऽपि।।१५६।।

सघन कुञ्ज घनघनतिमिर अधिक अँधेरी राति।
तऊ न दुरिहै स्याम वह दीपसिषा सी जाति।।१५६।।

पुनर्यथा! कृष्णेति नायकं प्रति सख्या उक्तिः। हे कृष्ण! गगने-आकाशे घने मेघे सति, अत एव तमसि-अन्धकारे अपि पुनः निशि रात्रौ। अपि पुनः चलदतिपुञ्जं यस्मिन् तस्मिन् तमालकुञ्जेऽपि सा प्रिया दीपशिखेव लसिष्यसे शोभिष्यसे इत्यन्वयः। एतेन एतादृशे महान्धाकारसमुदायेऽपि सा दीपशिखेव लसिष्यते तस्मात्त्वं तत्रैवाभिसर दीपशिखोपमायास्तस्या आगमनं न सम्भवति। अत्र सेतितच्छब्द-वाच्योपमेयभूताया नायिकाया उपमानभूताया दीपशिखायाश्च विलसद्रूपधर्मेण इवेत्युपमावाचकेन समोपादनात् पूर्णोपमाऽलङ्कारः।।१५६।।

चन्द्रिकेव चन्द्रानना चन्द्रिकासु मिलिताति।
तनु सुगन्धतन्त्वनुगता तदालिततिरपि याति।।१५७।।

**जुबति जोन्ह मैं मिलि गई नैकुन होति लखाइ।**
**सौन्धे की डौरैं लगीं अली चली संग जाइ।।१५७।।**

चन्द्राभिसारिकामाह। चन्द्रिकास्विति। सख्या: सखीं प्रत्युक्ति:। यद्वा कवेरुक्ति: सम्भावनीया। यद्वा अभिसरन्तीं नायिकां दृष्टान्तात्स्वरूपसौन्दर्यं सौगन्ध्यादिकं वर्णनान्नायक: सखीं प्रत्याह चन्दिकासुज्योत्स्नासु–इयं चन्द्रानना चन्द्रिकेव ज्योत्स्ना इव अति अतिशयेन मिलिता तदाकारा बभूवेत्यर्थ:। तदा तस्मिन् समये–अलीनां भ्रमराणां तति:पङ्क्तिरपि तनो: सुगन्धानां ये तन्तवस्तान् अनुगता सती यातीत्यन्वय:। अतिलतिभिरपि ज्योत्स्नासादृश्यान्न लक्षिता किन्तु सौरभ्यतन्तुभिर्ज्ञातेति भाव:। अत्र भेदवैशिष्ट्यो: स्फूतावुन्मीलितविशेषकाविति लक्षणात् सामान्यप्रतिद्वन्द्वी–विशेषालङ्कार:। एवं च सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणात् सौगन्ध्यादे विशेष स्फूर्तौ तत्प्रतिद्विन्द्वि विशेषक इति लक्षणानुगति:।।१५७।।

**ललना नीलपटावृता भाति दीपकलिकेव।**
**तमस्विनीषु न लक्षिता प्रभवति सा कथमेव।।१५८।।**

**निशि अँधियारी नीलपट पहिरचली पिय गेह।**
**कहौ दुराई क्यौं दुरै दीपशिखासी देह।।१५८।।**

श्यामाभिसारिकां परकीयामाह। ललनेति। सख्या: सखीं प्रत्युक्ति:। यद्वा कवेरुक्ति:। यद्वा तत्सौन्दर्यप्रकाशं वर्णयन् नायकोऽपि सखीं प्रत्याह। नीलपटावृता–इयं ललना दीपकलिकेव भाति शोभते। पुनस्तमस्वनीषु कृष्णासु रात्रिषु कथनमेव न लक्षिता प्रभवति किन्तुलक्षितैव भवति। अत्र पूर्णोपमाऽलङ्कार:।।१५८।।

**मध्ये पथिसमुदितविधौ शङ्किताऽस्मि गमनाय।**
**कथमपि तमसावृतपथं मामलिततिर्निनाय।।१५९।।**

**अरी षरी सटपट परी बिधु आधे मग हेरि।**
**संग लगै मधुपन लई भागन गली अँधेरि।।१५९।।**

पुनर्यथा। मध्य इति। अत्र नायिकाया: सखी प्रत्युक्ति:। समुदितो विधुश्चन्द्रो यस्मिन् तस्मिन् पथि मार्गे मध्ये मध्यप्रान्ते सति गमनाय तत्सङ्केतप्राप्तये–अहं ाङ्किताऽस्मि। एतेन सान्धकारारात्रौ श्यामवसनाभरणादिकल्पयित्वा गच्छन्त्या: परकीयाया वचनमिदम्। हे सखी सम्बुद्ध्याक्षेप:। कथमपि केनापि प्रकारेण–अलीनां भ्रमराणानां तति:पङ्क्तिर्मदीयमृगमदाङ्गराग सौगन्ध्यानुगतेति भाव:। मां तमसावृतपथमन्धकारयुगमार्गं निनाय नीतवती। एतेन स्वकीयचातुर्यसौन्दर्यसौष्ठवादिकथनं सखीषु रात्रिकृताभिसार वार्त्तामिषेण प्रदर्शितमिति ध्वनितम्। सामान्यंयदि सादृश्याद् भेद एव न लक्ष्यते। इति लक्षणात्सामान्याऽलङ्कार:। किञ्च–मीलितं यदि सादृश्याद् भेद एव लक्ष्यत' इति मीलितालङ्कार

लक्षणात्सोऽपि। अनयोःको भेद इत्यत आह–वस्तुद्वयस्य, लक्षणसामान्योः केनचिद्बलीयसा तदन्यस्य स्वरूपतिरोधाने मीलितम्। स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधानसामान्यमिति कुवलयानन्दकरैर्ध्वनितं तदुददाहरणान्त–राण्यपि तत्रैव ज्ञेयानीति दिक्।।१५९।।

**निवारिता इतरालयो दुःसहतापमिषेण।**
**रमणी स्वतनुच्छायया निन्ये तदा प्रियेण।।१६०।।**

**मिसही मिस आतप दुःसह दई और बहराय।**
**चले ललन मन भावतिहि तन की छाह छिपाय।।१६०।।**

दम्पत्योर्दिवाभिसारमाह। निवारितेति। अत्र कवेरुक्तिः सम्भावनीया। इतराश्च वाऽऽलयः सहचर्यः अधुना दुःसहतापमिषेण व्याजेन निवारिताः तदा तस्मिन् काले प्रियेण नायकेन रमणी प्रिया सङ्केतस्थलं प्रतीतिशेषः। स्वतनुच्छायया–आतपं निवारयता निन्ये नीता आसीदित्यन्वयः। अत्र परस्परं प्रीत्युत्कर्षो व्यज्यते। अतः पर्यायोक्तालङ्कारः।।१६०।।

**मिलितच्छाया चन्द्रिके हरिराधिके यदैव।**
**बभूवतुर्न च लक्षिते सङ्गच्छतः सहैव।।१६१।।**

**मिलि परछाहीं जौन्ह सौ रहे दुहुन के गात।**
**हरि राधाइक सङ्ग ही चले गली मैं जात।।१६१।।**

दाम्पत्योनिशाभिसारमाह। मिलितेति। हरिश्च राधिकाश्च हरिराधिके यदैव यस्मिन् समये छाया च चन्द्रिका च छायाचन्दिके याभ्यां ते मिलितच्छायाचन्द्रिके याभ्यां ते मिलितच्छायाचन्द्रिके बभूवतुः आसतुस्तदा सहैव सङ्गच्छतः गमनं कुर्वाते अपि न लक्षिते केनापि–इति भावः। हरिस्तु राधिकाच्छायायां श्यामवर्णत्वान्मिलितः। राधिका तु चन्द्रिकोपमत्वा चन्द्रिकायां मिलितेति यथासङ्क्यक्रमेणान्वयद् यथासङ्ख्यालङ्कारः। 'मिलितं यदि सादृश्याद्भेद एव न दृश्यते। इति लक्षणान् मीलितालङ्कारश्च बोध्यः। अनयोस्तिलवत् पृथगुपन्यासात् संस्कृष्टिरपि। अलं पल्लवितेन।।१६१।।

**सताम्बूलरसपक्ष्मया सकज्जलाधारयैव।**
**सालक्तकरसभालयाऽऽभयागतस्त्वमधुनैव ।।१६२।।**

**पल न पीक अज्जन अधर धरै महावर भाल।**
**आजु मिले सुलभी करे भले बने हौ लाल।।१६२।।**

खण्डितामुदाहरति। सताम्बूलेति नायकं प्रतिनायिका उक्तिः। ताम्बूलरसेन सहिते पक्ष्मणी यस्यां सा सताम्बूलरसपक्ष्मा तया कज्जलेन सहितौअधरौ यस्यां सा सकज्जला धरातया आलक्तकरसेन सहितं भालं यस्याः सा सालक्तकरसभालातया आभया कान्त्या त्वमधुनैव आगत इत्यन्वयः। एतेन परोपभोग चिह्नित प्रातरागच्छति पतिर्यस्याः सा खण्डितेति लक्षणात् खण्डिता धृष्टनायश्च बोध्यः।।१६२।।

नखरेखामेचकतनौ तनुवसनावृत एव।
सजलनीलमणिभाजने विलसति चन्द्रकलेव।।१६३।।

मरकत भाजनसलिलगत इन्दुकला की भेष।
झीन झगा में झलमलत स्यामगात नखरेख।।१६३।।

पुनर्यथा। नखेति। तनु सूक्ष्मं च तद्वसनं तेनावृते तव मेचकतनौ श्यामशरीरे नखरेखा विलसति शोभते। जलेन सहितं यन्नीलमणिभाजनं तस्मिन् चन्द्रस्य कलेवेत्युपमाऽलङ्कारः। सूक्ष्मवसनावृत श्यामतनुनखरेखोपमेयानां सजलनीलमणिभाजनचन्द्रकलारूपोपमानानां च-इवेत्युपमावाचकेन सहोयादानात् वक्रत्वरूपसाधारणधर्मानुपादानाच्च धर्मलुप्तोपमा बोध्या। परोपभोगदर्शनात् खण्डिता च बोध्या।।१६३।।

भुजे विमलवसनावृते वेणीलक्ष्म तथैव।
लसति हरे हरिणीदृशा क्रोडीकृता यथैव।।१६४।।

वैसी यै जानी परत झगा ऊजरे माह।
मृगनैनी लपटी हियै वैनी उपटी वाँह।।१६४।।

पुनर्यथा। भुजे इति। हे हरे! इति नायिकाया उक्तिः। विमलवसनेनावृते भुजे बाहौ वेण्या लक्ष्मचिह्नं तथैव तेन प्रकारेण लसति शोभते। यथैव येन प्रकारेण हरिणीदृशा अपरा क्रोडीकृता। अत्र-आपं चैव हलन्तानामितिभागुरि मतमादाय हरिणीदृशेति साधु। यद्वा हरिलोचनेत्यपि पाठः। अत्रापि परोपभोगचिह्न-दर्शनात्खण्डिता ज्ञातव्या।।१६४।।

कपटवचनरचनैरलं चातुरतया तथैव।
विलसति तव गुणसूचिकाऽगुणमुक्तामालेव।।१६५।।

कहवे काज चलाइयतु चतुराई की चाल।
कहो देत यह रावरे सब विन गुन विन माल।।१६५।।

पुनर्यथा। कपटेति। हे कपटेति नायकसम्बुद्धिः। वचनानां रचनैः तथैव चातुरतया चातुर्येण अलं निवारणीयं तव गुणानां सूचिका विगुणा गुणरहिता चासौ मुक्तानां मालैव विलसति शोभते। अत्रापि परोपभोगचिह्नरूपविगुणगुणामुक्तामालादर्शनात् खण्डिता बोधव्या।।१६५।।

दहनशिखारुणतरनयन जतुरसरञ्जितभाल।
कन्दर्पानुगदर्पणं पश्यसि किं न रसाल।।१६६।।

पावक से नैना लसै जावक लाग्यौ भाल।
मुकर होहु गै नैकु मै मुकर विलोकहु लाल।।१६६।।

पुनर्यथा। दहनेति। रसमासमन्ताद् गृह्णाति लाति-इति रसालस्तत्सम्बद्धौ हे रसाल! हे कन्दर्पानुगामिन्! दहनशिखावद्-अरुणतरे नयने यस्य तत्सम्बुद्धौ सर्वनिशिजागरादिनेति भावः। जतुरसेन लाक्षारसेन लाक्षारसेनरञ्चितं भालं यस्य तत्सम्बुद्धौ। दर्पणं किन्न पश्यसि दर्पणं विना भालनयनस्थचिह्नादर्शनात्। अत्र साभिप्राय सम्बुद्धिरूपविशेष्यपदोपन्यासात् परिकाराङ्कुरालङ्कारः।।१६६।।

हृदये गिरिजा सुन्दरी लसितभालनखचन्द्र।
रचयित्वा शिवरूपमिदमागतोऽसि यदुनन्द।।१६७।।

प्राणप्रिया हिय मै बसै नखरेखा शशिभाल।
भलौ दिषायौ आन यह हरिहर रूप रसाल।।१६७।।

पुनर्यथा हे यदुनन्देति। नायिकाया उक्तिः। इदं शिवरूपं रचयित्वा कल्पयित्वा-आगतोऽसि। हृदये गिरिजा-इव सुन्दरीतया लसितः। यद्वा गिरेर्जाता गिरिजाः गोपभिल्लादयस्तेषां सुन्दर्यस्ताभिर्लसितः शोभितोऽसि तत्सम्बुद्धौ। शिवोऽपि गिरिजया सुन्दर्या लसित इति। यद्वा गिरिजापार्वती-एव सुन्दरी तया लसितः शिव इति शिवपक्षेऽपि सम्बुद्ध्यार्थः। पुनः कीदृशस्त्वं भाले नख एव चन्द्रो यस्य सः तत्सम्बुद्धौ वक्रत्वधर्मसाम्यात् नखशब्देन नखक्षतं गृह्यते। शिवपक्षे नख इव चन्द्रो यस्य तत्सम्बुद्धौ। शिवोऽपि भालनखचन्द्रस्त्वमपि तथैवेति शिवरूपं रचयित्वा-आगतोऽसि-इति परोपभोग चिह्नदर्शनात् खण्डिताश्लिष्टा विशेषणोपन्यासात् श्लेषालङ्कारः। नानार्थसंश्रयःश्लेष इति लक्षणात्।।१६७।।

नागलता रसरञ्जिते जागरिता लसिते च।
कपटवचनमानय पुरो मानय मम नयने च।।१६८।।

पल सौहै पग पीक रँग छल सोहै सब बैन।
वलि सोहै कत कीजिए ये अलसो हैं नैन।।१६८।।

पुनर्यथा नागेति। कपटं कपटरूपं वचनं यस्य तत्सम्बुद्धौ हे कपटवचन! इति नायिकाया उक्तिः। इमे-इत्यङ्गुल्या निर्देशः नयने लोचने स्वस्येति शेषः। ममपुरः-अग्रे मानय मानयेति कोपोत्कर्षे वीप्सा। कीदृशे नयने नागलता ताम्बूलबल्ली तस्याः रसेन रञ्जिते-अन्यस्याश्चतुम्बितेनेत्यर्थः। यद्वा रलयोरभेदानागरस्य भावो नागरता चातुरता तस्याः रसेन रागेण रञ्जिते-अनुरक्ते, पुनःकीदृशे जागरिते जागरेण आलसिते-आलस्यं दूते प्राप्ते च। अत्रापि परोपभोगचिह्नदर्शनात् खण्डितेति दिक्।।१६८।।

सालसनखरेखालसित वदसि शपथशतमेव।
नहि भवतो नयने-इमे भवतः सम्मुखमेव।।१६९।।

नषरेषा सोहै नई अलसोहैं सब गात।
सोहै होत न नैन ये तुम सोहै कत बात।।१६९।।

पुनर्यथा सालसेति। आलसेन सहितः सालसस्तत्सम्बुद्धौ शपथानां शतं शपथशतमेव वदसि कथयसि घृतयेत्यर्थः। इमे भवतो नयने त्वन्नेत्रे सन्मुखमेव नहि भवतः न-आसतस्तस्मात्त्वत्कृतापथानामपि मिथ्यात्वं भातीति भावः। अत्र सालसनखरेखलसितेति विशेषणाभ्यां परोपभोग सूचनरूपाभिप्रायगर्भाभ्यां परिकरालङ्कारः।।१६९।।

लसति नागवेषा कृता लेखा नागरसेन।
एषा याति भयप्रदा लोपय कपटपटेन।।१७०।।

पट सौ पौंछि परी करौ षरी भयानक वेष।
नागिन सी लागति द्रगनि नागवेलरसरेख।।१७०।।

पुनर्यथा। लसतीति। हे कपटेति पूर्वसम्बुद्ध्यनकर्षः। हे कपटे! इति धूर्तनायिकाया उक्तिः। नागरसेन नागबल्लीरसेन-अत्र नागशब्दस्य साहचर्यात् नागबल्लीरसेऽभिव्यक्तिर्बोधव्या। यद्वा नामैकदेशग्रहणेन नाममात्रग्रहणात् नागो नागबल्ली यथा भीमो भीमसेन इत्यादिषु बोध्यः। एषा या लेखा कृता तयेति शेषः। सनागवेषा नागस्य सर्पस्य वेषो यस्याः सा लसति शोभते। अत एवातिभयप्रदा-अतिभयानका तामिति कर्मण आक्षेपः। येन विना यदुपन्नमिति न्यायात्। पटेन वस्त्रेण लोपय नाशय-इत्यन्वयः। अत्रोपमेयभूताया नागरसरेखाया-अतिभयदातृत्वसाधारणधर्मेण नागवेषत्वोपन्यासात् वाचकलुप्तोपमा बोध्या वाचकलोपस्तु समासविधायकशास्त्रकृतः। अत्रापि परोपभोगचिह्नदर्शनात्खण्डिता बोध्येति दिक्।।१७०।।

भालं जतुरसमुद्रया यया विभूषितमेव।
तया निजाधररागतो नयने रञ्जित एव।।१७१।।

जिह भामिनि भूषन रचे पगन महावर भाल।
तिही मनौ अषिया रँगी ओठन के रँग लाल।।१७१।।

पुनर्यथा। भालमिति। नायिकाया नायकं प्रत्युक्तिः। प्रकरणवशात् अर्थवशाद् बोध्या। हे कपटेति सम्बुध्यनुकर्षः पूर्वपद्यात्। यया तव भालं ललाटं जतुरसमुद्रया लाक्षारसमुद्रया-एव विभूषितं शृङ्गारितं तयैव निश्चयेन निजश्चासौ-अधरस्तस्य यो रागः अरुणिमरूपस्तेन तव नयने लोचने रञ्जिते-इत्यन्वयः। सार्वविभक्तिकस्तसिरिति शास्त्रान् निजाधरगतरागत इति तृतीयान्तं बोध्यम्। अत्राप्यन्यस्याश्चरणगततद्भालस्थ लाक्षारसमुद्रा दर्शनात्। किञ्च तदधरारुणिमानुरक्तसम्भावनया नेत्रारुण्यवर्णनात् परोपभोगरूपोऽर्थो व्यज्यते तेन खण्डिता ज्ञातव्या।।१७१।।

प्रवहसि मुक्ताहारकृतमङ्कं हृदयतलेन।
गुटिकाभिर्गज इव समानीतस्त्वं मदनेन।।१७२।।

वेई गड़ि गाड़ै परी उपट्यौ हार हियै न।
आन्यो मोरि मतङ्ग सनु मारि गुलेलन मैन।।१७२।।

पुनर्यथा प्रवहसीति। हे कपटेति पूर्णसम्बुध्यनुकर्षः। मुक्ताहरकृतम्–अङ्कं लक्ष्म हृदयतले उरसि न प्रवहसि धारयसि किन्तु मदनेन कामेन गुटिकाभिः गुलिकाप्रहारं कृत्वा यथा गज आनीयते तथा त्वं मत्समीपे आनीत इत्यर्थः। अत्र गुटिकाप्रहारकृताङ्कप्रयुक्तमत्तगजोपमया स्वेच्छाचारित्वं मुक्ताहारकृताङ्क युक्तितत्वं व्यज्यते। यद्वा हृदयतलेनेति तृतीयान्तपाठेऽपि स एवार्थः। गुटिकाभिः समानीतस्त्वयं मत्तोगजइव लसतीति क्रियाक्षेपः। अत्रापि खण्डिता मत्तो गज इव–इत्युत्प्रेक्षा।।१७२।।

प्रियोरसि प्रियकृतनखक्षतं चकास यदेव।
सा नखेन सखि सादरं नवीकरोति तदेव।।१७३।।

तिय निज हिय जु लगी चलत पिय नष रेष षरौट।
सूषन देत न सरसई षौटि षौटि षत षौटि।।१७३।।

पुनर्यथा। प्रियोरसीति। नायिकायाः सखीं प्रत्युक्तिः। यदेव प्रियं कृतं च तन्नखक्षतं प्रियायाः उरसि चकास दिदीपे। सा प्रिया–अमुष्य नायकस्येति शेषः। सादरं यथा भवति तदेव स्वप्रियकृतं नखक्षतं नवीकरोति नूतनयतीत्यन्वयः। अत्रापि पराङ्गनाङ्गस्थित स्वपतिप्रत्यक्षं तत्कृतनखक्षतं तत्कृतनखक्षत दर्शनात् खण्डिता। एतेन ज्येष्ठाकनिष्ठाभेदगतेयं बोध्येति दिक्।।१७३।।

रमणनखक्षतवक्षसा लक्ष्यं कर्म तथैव।
तदालिजनप्रत्यक्षमिह लुप्यसि चतुरतयैव।।१७४।।

ह्याँ न चलै बलि रावरी चतुराई की चाल।
सनष हियै षिन षिन नटत अनष बढ़ावत लाल।।१७४।।

पुनर्यथा। रमणेति। नायिकाया उक्तिः। नखेन क्षतं यद्वक्षः तेन तवैव कर्म पराङ्गना सम्भोगादि लक्ष्यं भवति। तत्कर्म आलिजनप्रत्यक्षम्–इह चतुरतयैव लुप्यसि, गोपायसीत्यन्वयः। अत्रापि नखक्षत युक्तनायकहृदयदर्शनात् खण्डितेति।।१७४।।

एषाऽऽलक्तकरसकृता रेखा भालगतैव।
वदति नाथ! मा वद वचन रचना भवति वृथैव।।१७५।।

कत कहियतु दुष दैन कौ रचि रचि वचन अलीक।
सबै कहाव रह्यो लषै लाल महावर लीक।।१७५।।

पुनर्यथा। एषेति। हे नाथ! इति नायिकाया उक्तिः। एषा तव भालगतैव–आलक्तकरसेन कृता रेखा पराङ्गनासम्भोगादिकर्म वदतीति त्वं मा वदत वा–इति शेषः। वचनानां रचनावृथैव भवतीत्यन्वयः। अत्रापि भालस्थालक्तकरसलेखारूपपराङ्गनासम्भोगादिचिह्नदर्शनात् खण्डिता बोध्या।।१७५।।

प्रिय! न भजति प्रच्छन्नता सद्यो रतमिदमेव।
डिम डिमयति जनमण्डले भवतः कर्म दृगेव।।१७६।।

तुरत सुरत कैसे दुरत जरत नैन जुरि नीठ।
डौड़ी दै गुन रावरे कहत कनौड़ी डीठि।।१७६।।

पुनर्यथा। प्रियेति। नायिकाया उक्तिः। इदमेव तव सद्यो रतं प्रच्छन्नस्य भावो प्रच्छन्नता तां न भजति, जनमण्डले भवतः कर्मदृगेव दृष्टिरेव डिण्डिमयति प्रकाशयतीत्यन्वयः। नेत्रारुण्यादिसालस सलज्जदृग्दर्शनात् खण्डिता बोध्या।।१७६।।

दृशौ कोकनदसमरुची निशिकृत जागरणेन।
शङ्के पङ्केरुहदृशा रक्ते निजरागेण।।१७७।।

तरुन कोकनद वरन वर भये अरुन निशि जागि।
वाही के अनुराग दृग रहे मनौ अनुरागि।।१७७।।

पुनर्यथा। दृशाविति। नायिकाया नायकं प्रत्युक्तिः। तव दृशौ नयने रात्रौ कृतं जागरणं पराङ्गनानुरागेणेत्यर्थः। तेन कोकनदेन समतुल्या रुचिः कान्तिर्ययोस्ते तादृशे लसत इति। क्रियाक्षेपं। रक्तोत्पलं कोकनदमित्यमरः। अत्रोत्प्रेक्षते। तया पङ्केरुहदृशा पद्मोपमनेत्रया निजरागेण स्वकीयानुरागेण रक्ते-इत्यहं शङ्के, अनुरागोऽपि रक्ततरो भवति। शङ्के मन्ये-इत्याद्युत्प्रेक्षाव्यञ्जकशब्दोपादानात् सिद्धविषया हेतूत्प्रेक्षा ज्ञातव्या अहेतोस्तद्-अनुरागानुरक्तत्वस्य नेत्रारुण्यरूपहेतु सम्भावनयेति दिक्।।१७७।।

पीत्वा तन्नखकान्तिमधु नाधुनाऽपि प्रतियाति।
तत्कररञ्जनरक्तमिव लोचनयुगं विभाति।।१७८।।

गड़े बड़े छवि छाक छकि छिगुनी छोर छुटैन।
रहे सुरँग रँगि के वहै नहदी महदी नैन।।१७८।।

पुनर्यथा पीत्वेति। हे प्रियेति सम्बुध्याक्षेपः। नायिकाया उक्तिः। तस्याः करयोर्यद्रञ्जनं रञ्जनकारि द्रव्यं तेन रक्तम्-अरुणमिव तव लोचनयुगं विभातीत्युप्रेक्षा किञ्चतन्नखकान्तिरूपं मधुपीत्वा तन्नखकान्तिं सादरमवलोक्य अद्यापि-अधुनापि न प्रतियातितत्रैव लग्नमित्यर्थः। मधुमत्तोप्यन्यो यथा स्थिरी भवति-इति भावः। अत्रापि-इव शब्दाभावे गम्योत्प्रेक्षा बोधव्या। नेत्रारुण्यरूप-निश्चलत्वादिपरोपभोग चिह्नदर्शनात् खण्डिता बोध्येति दिक्।।१७८।।

तस्करता शपथैरियं नहि गुप्ता भवतीह।
शिरः स्थितं लोचनयुगं तव तामनु वदतीह।।१७९।।

लाल न लहि पाये दुरै चोरी सौह करैन।
सीस चढ़े पनहा प्रगट कहै पुकारै नैन।।१७९।।

पुनर्यथा। तत्करतेति। अत्रापि प्रियेति सम्बुध्याक्षेपः। इहाऽस्मिन् समाजे तस्करस्य भावस्तस्करता तवेत्यर्थः। शपथेर्नहि गुप्ता भवति–इत्यन्वयः। शपथैरिति बहुवचनोपादानात् पुनः पुनः शपथविभावनान्मिथ्यात्वं व्यज्यते–इति भावः। किञ्च तव शिरः स्थितं लोचनयुगं तां तस्करतामनुवदतीत्यर्थः। अत्र लोचयतीति लोचनमिति व्युत्पत्या नेत्रयोः समक्षमेव त्वया चौर्यं कृतं तस्मात्तव नेत्रयुगलमेव तदनुवादकमिति भावः अनुवादकेषु सत्सु शपथैश्चौर्यं नहि गुप्तं भवति इति लोकोक्त्या चौर्यकृतपराङ्गनानुरागचिह्नदर्शनात् खण्डिता बोध्या।।१७९।।

चित्तं चकितमिवासते प्रातस्त्वयाऽऽगतेन।
सन्ध्येव प्रतिफुल्लिता यतो नयनबिम्बेन।।१८०।।

रह्यो चकित चहुधा चितै चितु मेरौ मति भूलि।
सूर उवैं आये रही दृगन साँझ सी फूलि।।१८०।।

पुनर्यथा। चितमिति। हे प्रिय! इति सम्बुध्याक्षेपेण नायिकाया उक्तिः। प्रातः प्रभाते–आगतेन त्वया मम चित्तं चकितमिवासते यतो नयनयोर्बिम्बेन सन्ध्याइव प्रतिफुल्लिता प्रकाशिता भवतीत्यन्वयः। यतस्ततो नेत्रारुण्यप्रतिबिम्बपातात्–अनुगुणरूपा सन्ध्येव भातीति प्रातःकाले सन्ध्यासमारुण्य दर्शनात्–चकितत्वमिति भावः। यद्वा तव चित्तं चकितमिवासते–इत्यपि सापेक्षोक्तिः। एतेन सर्वरात्रिकृतजागरेण–आरुण्याधिक्यं नेत्रयोरिति सूचितम्। इदमेव पराङ्गनानुरागचिह्नमिति।।१८०।।

न भय मनागसि लज्जसे किमिह प्रियाऽधुनैव।
नयनयुगं कुरु सम्मुखं यदि सत्यता तवैव।।१८१।।

न करूँ न डरूँ सब जग कहत कत बेकाज लजात।
सोहै कीजै नैन सो साँची सोहै षात।।१८१।।

पुनर्यथा। नभयमिति। हे प्रिय! इति नायिकाया उक्तिः। अनागसि पुरुषे न भयमिति लोकोक्तिः। पुनरधुनैव त्वयं किमिह लज्जसे। लज्जा मा कुरु त्वं निरपराधोऽसीति विपरोक्त्या कोपोक्तिर्ज्ञातव्या। नयनयुगं नेत्रयुगं सम्मुखं कुरु यदि ते–एषैव सत्यता भवेत्। एतेन शपथैः सत्यता न भवतीति भावः। अत्रापि सापराधत्वदर्शनात् खण्डिता बोध्या।

मुग्ध! स्निग्धतया परमलावण्येन विभासि।
असंपक्व इव सूरणः स्वमुखे रसं ददासि।।१८२।।

लाल सलौने अरु रहे अली सनेह सौ पागि।
तनक कचाई देत कहि सूरन लौ मुख लागि।।१८२।।

मध्याधीरामाह। मुग्धेति। 'मुग्धाऽसुन्दरमूढयोरित्यमरः। त्वं स्निग्धतया स्नेहवत्तया परमेण-उत्कृष्टेन लावण्येन सौन्दर्येण वा-ससम्पक्वः-ईषत्पक्वः सूरण इव विभासि, असम्पक्वसूरणोऽपि सस्नेहलावण्य्वान् भवतीति। श्लिष्ट विशेषणोपन्यासात्-श्लेषमूलकेयं पूर्णोपमा/किञ्च स्वमुखे स्वकीये वदने रसस्वादविशेषं ददासि, सूरणपक्षेऽपि-आकार प्रश्लेषाद-अरसं स्वादुराहित्यं ददासि प्रकाशयसि-इति-उभयपक्षेऽपि विशेषणसाम्यादसम्पक्वसूरणोपमया चार्थान्तरसूचिताऽरस-दातृत्वादिव्यङ्ग्यकोपप्रकाशवत्त्वात्-लज्जया स्पष्टाकथनाच्च माध्या धीरा ज्ञातव्येति दिक्।।१८२।।

किं पश्यसि खरतरदृशा वदने लसति तवैव।
नोरगवल्लीरस इयं कुण्डलमणिप्रभेव।।१८३।।

तेह ततेरे त्यौर करि कत करियत दृग लोल।
लीक नहीं यह पीक की श्रुति मनि झलक कपोल।।१८३।।

पुनर्यथा। किमिति। हे मुग्धेति सम्बुध्यनुकर्षः। नायिकाया उक्तिः। खरतरदृशा तीक्ष्यदृष्ट्या किमिति मां पश्यसि तवैव वदने-इयमुरगवल्लीरसस्ताम्बूलचर्बितरसो न लसति किन्तु कुण्डलयोः स्थिते ये मणी तयोः प्रभाकान्तिरेव लसतीति पराङ्गनाकृतकपोलचुम्बनारम्भ-सम्भवनागवल्लीरसारुण चिह्नयुतं वदनं दृष्ट्वाऽपि कुण्डलमणिप्रभैवेति तन्निश्चयसम्पादनरूपसाधारण वाक्योद्भूतव्यङ्ग्य-कोपप्रकाशत्वात्। प्रत्यक्षतदपराधकथाया भावान्मध्याधीरेति दिक्।।१८३।।

अपरवासवसते उरः कलुषीकृतं तथापि।
त्वामवलोक्य स सलज्जितं लज्जा भवति ममापि।।१८४।।

अनत वसे रिस की मिसन उरवरि रही विसेष।
तऊ लाज आई झुकति षरे जलौ है देषि।।१८४।।

अधीरां मध्यामाह। अपरेति। अत्रापि हे मुग्ध! इति सम्बुध्यनुकर्षः। नायिकाया उक्तिः। अपरस्या वासः अपरवासो यद्वा अपरश्चासौ वासः अपरवासः असत्यस्मिन्निति वासो गृहम् अपर गृहे या वसतिः स्थितिः तस्माद्धेतोः ममेति शेषः। उरः हृदयं कलुषीकृतत्वयेत्यर्थः। तथापि त्वां सलज्जितमवलोक्य दृष्ट्वाममापि लज्जा भवतीत्यन्वयः। अधीरा रुक्षवाक्कोपादिति। अव्यङ्ग्यकोपप्रकाशधीरेति रसमञ्जरी पाठादपि लज्जामदनयोः साम्यादधीरामध्येति दिक्।।१८४।।

न त्रपितव्यमतः परं त्वया निरपराधेन।
बहुशिक्षितमपि चक्षुयुगमनुगच्छति चपलेन।।१८५।।

कत सकुचत निधरक फिरौ रतियो षोरि तुम्है न।
कहा करौ जो जाइये लगे लगौ है नैन।।१८५।।

पुनर्यथा। नेति। हे मुग्ध! इति पूर्वसम्बुद्ध्यनुकर्षः। नायिकाया उक्तिः। निरपराधेन निरागसा त्वया-अतः परमिदानी न त्रपितव्यं न लज्जितव्यम् चक्षुषोर्युगं युग्मं मदीयमितिशेषः। त्वदीयदर्शनसाभिलाषात्वात् नानयोरनुगमनं तेन त्वया काऽपि शङ्का न कार्येति भावः। एतेन सादरसाधारणवाक्येन कोपोक्तिर्व्यज्यते तेन पत्युः सापराधत्वकथनाद् अधीरा मध्येवेति। यद्वा त्वदीयं चक्षुयुगं मया बहुशिक्षितमपि चपलेन हेतुना तां प्रत्यनुगच्छतीति तेन त्वं निरपराधी नेत्रयोश्चापल्यात् नेत्रयोरेवापराध इति कोपोक्त्या अधीरा ज्ञातव्या।।१८५।।

प्रेम विना विहरसि रसिक! रसमपि बुध्यसि नैव।
हितं करोषि नवं नवं किं लज्जसे मुधैव।।१८६।।

फिरत जु अटकत कटनिविन रसिक सुरस नहिं प्याल।
अनत अनत चित नित हित निचित सकुचत का लाल।।१८६।।

पुनर्यथा। प्रेमेति। हे रसिक! इति नायकसम्बुद्धिः। साक्षेपा ज्ञातव्या। न प्रेम यत्र तत्र विहरसि, अतो रसमपि नैव बुध्यसि। रसास्वादं न जानासि नवं नवं हितं मित्रं करोषि। मुधैव मिथ्यैव किं लज्जसे किमर्थं लज्जा कृता-इत्यन्वयः। नित्यनूतन मित्रकरणेन शृङ्गारस्य स्थायिभावत्व प्राप्तरतिभावाभावता भवति तेन रसास्वादं न जानासि-इति फलितोऽर्थः। अतो मयि-अपि तव तादृशी रतिः क्षणार्द्धवर्तिनीति लज्जायाः किं प्रयोजनमिति रुक्षवाक्यस्वादधीरा मध्यैवेति दिक्।।१८६।।

रमिता हेमलता ननु किं मिलसि मल्लिकामेव।
नयनायुगं चम्पकरुचा तयारुणितमिदमेव।।१८७।।

कत लपटैयतु मोगरै सौनजुही निसि सैन।
जिहि चम्पकवरनी किये गुल्लाला रँग नैन।।१८७।।

धीराधीरा मध्यामुदाहरति। रमितेति। हे रसिक! इति पूर्व सम्बुद्ध्यनुकर्षः। नु-इति परिप्रश्ने त्वया हेमलता हेम्न-इवलता हेमलतेति-इवार्थे समासः हेमलतोपमा कापि रमिता किं किमिति पदं देहलीदीपकन्यायेन उभयत्रान्वेति-इदानीं मल्लिकामेव मल्लिकासदृशीं मां किं मिलसि-इति कोपोक्ति रवगन्तव्या। यद्वा रलयोरमेदात्-हेम्नि सुवर्णे रता हेमरता कापि गणिका धनाभिलाषिणी त्वया रमिता। यद्वारसिकेति भ्रमं रसं बुद्धिःत्वया हेमलतेव स्वर्णयूथिका सापीता हेम पुष्पिकेत्यमरः। रमिता पुनर्मल्लिकां मां किमिति मिलसीति भ्रमरव्याजेन नायकं प्रेत्यावेवदयति। चम्पकस्येव रुक् यस्याः तया इदमेव ते नयनयुगम्-अरुणितमेतेन व्यङ्ग्याव्यङ्ग्यकोपप्रकाशा धीराधीरेति लक्षणात्। अप्रस्तुतभ्रमरवृत्तान्तकथने प्रस्तुतनायकवृत्तान्त प्रतीतेरप्रस्तुतप्रशंसालङ्कार इति दिक्।।१८७।।

शीतर्त्तूचितमज्जनाजिरमिव हृदयमतापि।
स्विन्नवदनतापत्रयैरागच्छसि तदथापि।।१८८।।

मैं तपाइ त्रैताप सौं राख्यौ हियौ हिमास।
मति कबहुक आवै इहाँ पुलकि पसीजे स्याम।।१८८।।

अधीरां प्रौढामाह। शीत्तर्त्विति। स्विन्नं स्वेदयुक्तं वदनं यस्य तत्सम्बुद्धौ। हे स्विन्नवदन! सज्जनस्याजिरं मज्जनाजिरं स्नानगृहमिति यावत्। शीततौं-उचितं च तन्मज्जनाजिरं शीतर्त्तूचितं मज्जनाजिरमिव तापत्रयैः अध्यात्मादिभिःमया निजं हृदयं अतापि तप्तिङ्गतम्। तद्वा प्रथमं मदन सन्तापस्तत उद्दीपनविभावैश्चन्दनादिभिः सखीभिरुपचरितास्मीति द्वितीयः सन्तापः पुनस्तवागमन-सन्ताप इति तापत्रयैर्वा हृदयमतापि। अथापि तद् हृदयं त्वयागच्छसीति काकूक्त्या निराकरोति। मा गच्छेति। यद्वा त्वमपि तापत्रयै सहेति गम्यमाने सहार्थे तृतीया। तवापि शरीरे तद्विरह सन्तापो द्वितीयो मदनसन्तापः पराङ्गनोप भोगस्तु महाश्रमसाध्य इति श्रमजनितस्तृतीयस्सन्तापः। एभिस्तापत्रयैः सह अत एव हे स्विन्नवदन मम हृदयमागच्छसीति तस्मात्त्वं माऽऽगच्छेति रूक्षवाक्यैश्चातुर्यपूर्वकनिराकरणादधीरा प्रौढैवेति दिक्।।१८८।।

नयनयुगं नूतनतरं प्रिय विलसत्यधुनैव।
अन्तर्गतमन्तर्हितं प्रथयति चपलतयैव।।१८९।।

आजु कछुक औरै भये छये नए ठिक ठैन।।
चित के हित के चुगल ये नित के होइन नैन।।१८९।।

पुनर्यथा नयनयुगमिति। हे प्रिये! इति सापेक्षिकोक्तिरवगन्तव्या। अधुनैव ते नयनयुगं नूतनतरं विलसति। चपलतयैव-अन्तःकरणे मनसि यो हितस्तन्मित्रं-अन्तर्गन्तं हृदयान्तर्गतमपि प्रथयतीन्वयः। एतेन यथावन्नेत्रं यल्लसति तथा न भाति किन्तु नूतनमिव भाति-अतो नेत्रचापल्यावगतापराधस्य नेत्रयुगान्यत्व वर्णनयुक्त्या कथानात् प्रौढा धीराधीरा ज्ञातव्या व्यङ्ग्याव्यङ्ग्यकोपप्रकाशवत्त्वात्। भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनादिति भेदकातिशयोक्तिर्बोध्या।।१८९।।

प्रतिकुञ्जं प्रतिमन्दिरं विहरसि विहर तथैव।
प्रभवति सर्वजनस्य हि प्रकृतिः प्रीतिमितैव।।१९०।।

सदन सदन के सदन की सदन छुटै हरि राय।
रुचे तितै विहरत फिरौ कत विहरत इत आइ।।१९०।।

पुनर्यथा। प्रतिकुञ्जमिति। हे प्रिये! इत्यपूर्वसम्बध्यनुकर्षः। कुञ्जं प्रतीति प्रतिकुञ्जमेवं प्रतिमन्दिरं यथा विहरसि तथैव विहर हि युक्तोऽयमर्थः। सर्वस्य जनस्य प्रकृतिः प्रीतिमितैव प्रीतिं प्रति-इतागतैव प्रभवति। यद्वा प्रीत्यामिता प्रीतितुल्यैव प्रभवतीत्यन्वयः। अत्र विहरणनिषेधाभाल्लोकोक्त्या दृढीकरणाच्च कोपोक्तिगर्भितवैरस्यं व्यज्यते। युक्तिपूर्वकं तत्सूचनया प्रौढाया अधीरात्वमाविष्कृतमिति दिक्।।१९०।।

तव गुणगणबीजैरलं कपटतपनकिरणेन।
पक्वं दाडिममिव मनः किन्न ददार बलेन।।१९१।।

सुभर भर्‍यौ तव गुन गन निपचयौ कपट कुचाल।
क्यौं धौं दार्‍यो लौ हियौ दरक नाहिन लाल।।१९१।।

पुनर्यथा। तवेति। प्रियेति पूर्व सम्बुद्ध्यानुकर्षः। तव गुणा एवं वीजानि तैरलं पूर्णं तव कपटमेव तपनकिरणो रविकरस्तेन पक्वं जातमित्यर्थ;। दाडिममिव मे मनः बलेन वेगेन किं तददार किं न दीर्णमित्युद्भुतत्वम् ताडिमीफलन्तु बीजपूर्णं तपनकिरण पक्वं सत् विदीर्णं भवतीति लोकसिद्धम्। अत्रापि युक्तिपूर्वकाऽव्यङ्ग्यकोपप्रकाशवत्वात् प्रौढा-अधीरैवेति बोध्यम्। कार्याऽजनिर्विशेषोक्तिः सति पुष्कलकारणे इति लक्षणाद् विशेषोक्तिरलङ्कारः।।१९१।।

कान्ते न हि नखलक्षणं केसरकुसुमकलैव।
विलसति मानिनि मम तनौ कुप्यसि कथं वृथैव।।१९२।।

केसर केसर कुसुम के रहे अंग लपिटाइ।
लगे जानि नष अनुषली कत बोलत अनषाइ।।१९२।।

नायकोक्त्याऽपि-अधीरां प्रौढामाह। कान्ते-इति। हे कान्ते! इति नायिकां प्रति नायकस्योक्तिः। इदं नखलक्षणं नखक्षतलक्ष्म न हीति निश्चयेन जानीहि। किन्तु केसरकुसुमस्य कलालेश एव मम तनौ विलसति, हे मानिनि वृथैव कथं कुप्यसि। कोपकारणं किमपि नास्तीति भावः। नखक्षतादिपरोपभोग-चिह्नवानपि शठत्वधर्मवत्तयाऽनुनयन् वदतीत्यर्थः। अत्रापि नायिकया दर्शिते नखक्षते तद्गोपनाय नायकोक्तिरवगन्तव्या तेन अधीरा प्रौढेवेति दिक्।।१९२।।

तव रसना या मनुजपति याहि प्रियतामेव।
हृदि धारय प्रणमामि भोः प्रवदसि कथमामेव।।१९३।।

मोहू सह बात न लगै जीभ जिह नाइ।
सोई लै उर लागिये लाल लागियतु पाइ।।१९३।।

प्रौढाधीरामुदाहरति। तवेति। हे प्रिय इति साक्षेपोक्तिर्नायिकायाः। तव रसना जिह्वा। यामपरामानुजपतिर्वारं वारं कथयति तामेव याहि नात्र तवागमनमुचितमित्यर्थः। तामेव हृदि धारण भोः प्रिय! त्वां प्रणमामि। मामेव कथं केन प्रकारेण प्रवदसि प्रवादं करोषि-इति रूक्षवाक्योच्चारणात् प्रौढा धीराऽधीरा ज्ञातव्या-इति दिक्।।१९३।।

किं कुपितेव शभिप्रभे पुनः पुनर्हसितासि।
इन्द्रगोपसमलोचनप्रभवैवोल्लसितासि ।।१९४।।

रिष कैसे रुष शशिमुखी हँस हँस बोलत बैन।
गूढमान मन क्यौं रहै भये मूढ रँग नैन।।१९४।।

नायक वचनेनापि पुनः तामेवोदाहरति किमिति। शशिनः प्रभा-एवं प्रभा यस्याः सा तत्सम्बुद्धौ हे शशिप्रभे! कुपितेव पुनः पुनर्वारं वारं किमिति हसितासि। किन्तु-इन्द्रगोपः कीटविशेषः तत्समा या लोचनयोः प्रभा कान्तिस्तवैवेति-इव शब्देन कोपो ज्ञातः। अरुणनेत्रप्रभवैलोल्लसितासि शोभितासीति नायकोक्त्या तस्याः पुनः पुनर्हसितेन च व्यङ्ग्याव्यङ्ग्यकोपप्रकाशत्वात् प्रौढाधीराऽधीरा बोध्येति दिक्।।१९४।।

प्रथमं दत्वा प्रियमनस्तत्पृष्ठं प्रति रासि।
का रीतिर्भवतः कथं लोचनपथं नयासि।।१९५।।

आपु दियौ मन फेर लै पलटै दीनी पीठि।
कौन चाल यह रावरी राज लुकावत डीठि।।१९५।।

अथ परकीयां खण्डितामाह। प्रथममिति। हे प्रियेति साक्षेपोक्तिः। प्रथमं मनो दत्वामह्यमिति शेषः। तत् ततो मनो गृहीत्वेति भावः। पृष्ठं प्रति रासि ददासि। भवतः युष्माकं का रीतिः। इदानी कथं केन प्रकारेण लोचनपथं न यासि नागच्छसित्यन्वयः स्वमित्रस्येदानीं मन्यानुरागचिह्नानि दृष्ट्वा परकीया वचनमिदं तेन परकीया खण्डितैव बोध्या।।१९५।।

यत्पूर्वं दत्तं त्वया तत्प्रियमनो ममैव।
उपपत्नीभ्यो रासि तत्कथमुचितमधुनैव।।१९६।।

मोहि दियौ मेरौ भयौ रहौ जहिलि मिलि साथ।
सोमन साथिन सौपिये पिय सौतिन के हाथ।।१९६।।

पुनस्तामेवोदाहरति। यदिति। नायिकाया उक्तिः। यन्मनः पूर्वदर्शनावसरेत्वया दत्तं तत् ममैव जातं नान्यस्य-इति फलितोर्थः। तन्मनः पुनर्वध्वा कृष्ट्वा-अधुनैव-इदानीमेव-उपपत्नीभ्योऽन्याभ्यः पत्नीभ्यो ददासि तत्कथमुचितमित्यन्वयः। प्रथम दानेन मत्स्वत्वोपपत्या स्वस्य दानं न शक्यते कर्तुमिति कथमन्याभ्यो दातुमर्हसीति भावः। परानुरागचिह्नदर्शनात् परकीया खण्डितैव बोध्या।।१९६।।

तव चित्तं तामभिलषति चरणौ विषमगतीव।
सकपटोऽपि शमयासि परं विरह ज्वाल मतीव।।१९७।।

वाही की चित चटपटी धरति अट पटे पाइ।
लपट बुझावत विरह की कपट भरे हू आइ।।१९७।।

उत्तमामाह। तवेति। हे प्रिये! इति सम्बुद्ध्यनुकर्षः। तव चित्तं मनः तां अन्यं यस्याः

सकाशादागतोऽसि इति भावः अभिलषति यतस्ते चरणौ विषमगतीव लक्ष्येते। परं तु स कपटोप्यागतस्त्वमतीव मे विरहज्वालां शमयसीति सापराधेऽपि प्रिये स्वानुरागपूर्वकस्वीयातिव्रतधर्मं प्रतिपादनरूपमुत्तमाया वचनमिदम्। तेनोत्तमा बोध्या। एते–उत्तमाद्यास्त्रयो भेदाः सर्वास्वनुगताः स्वीकीयाया भेदेष्विति बोध्यम्।।१९७।।

दक्षिण वामानुग न मामनुचित्तयसि सुखेन।
तव विरहे दिनमेकमपि तुल्यमभवदब्देन।।१९८।।

दक्षिन प्रिय ह्वै वामवस विसराई तिय आन।
एकै वासर के विरह लागे वरिस विहान।।१९८।।

पुनरेवोत्तमामुदाहरति। दक्षिणेति। हे दक्षिण ! हे चतुर ! हे वामानुग ! वा मां सुन्दरीमनुगच्छतीति वामानुगस्तत्सम्बद्धौ। त्वं दक्षिणो भूत्वा वा वामानुगो जात इति भावः। अतस्तत्सुखेन मां नानुचिन्तयसि। यद्वा दक्षिणा चासौ वामा दक्षिणवामा तामनुच्छतित्येकं पदं वा बोध्यम्। तव विरहे मम–एकमपि दिनमब्दतुल्यमभवदित्यर्थः। अत्र सापराधागतनायके स्वीयानुरागपूर्वकतद्विरहजन्यानेकदुःखा-नुभवाद्दिनैकस्याप्यब्दसामान्यत्ववर्णनस्वधर्मवत्वाद्युत्तमाया वचनमिदम्।।१९८।।

लघुवध्वा भावि सुरतौ पतिरन्यत्र रराम।
श्रुतमिति रसमरससुखं दुःखं सानुजगाम।।१९९।।

बालम बारी सौति के सुन परनारि विहार।
भौ रस अनरस रिस रली रीझ षीझ इकवार।।१९९।।

मध्यमामाह। लघ्विति। अत्र कवेरुक्तिः सम्भावनीया। यद्वा सख्याः सखीं प्रत्युक्तिः। लघ्वी चासौवधूः तस्या लघुवध्वा रतौ भाविन्यां सत्यां यद्वालघुवध्वेति गम्यमानसहार्थे तृतीया वा पतिः यदा–अन्यत्र रेमे–इति श्रुतं तदा सा रसमनुजगाम सहर्षा बभूवेत्यर्थः। सपत्न्याः सुरतदिने पराङ्गनोपभोगो न मदीय इत्याशयात् पुनः–अरसमनु जगाम। इदानीं तस्याः सुरत दिनेन पराङ्गनोपभोगः प्रियेण कृतः कदाचिन्मदीयोऽपि भविष्यतीत्याशयात् पुनस्ततः सुखमनुजगाम। सपत्न्याः पराङ्गनोपभोगसन्तापाप्तेः। पुनस्तदेतद्दुःखमनुजगाम। यथा सपत्न्यः सन्ताप एवं ममापि भविष्यतीति भावः। अत्र रसाऽरससुख–सुखदुःखानां यौगपद्येशतपत्रभेदन न्यायेन किञ्चित् किञ्चित् कालविलम्बो ज्ञातव्यः। सापराधे पत्यौ रुष्टे निरपराधे सन्तुष्टेति मध्यमधर्मत्वान्मध्या ज्ञातव्येति दिक्।।१९९।।

वाङ्मधुरा स्निग्धं मनो सरले भ्रुवौ तथापि।
किन्त्वधिकादरहेतुनाऽधिकशङ्का मनसापि।।२००।।

मुषमिठास चितचीकनै भौहें सरल सुभाइ।
तऊ षरे आदर षरौ दिन षिम हियौ सकाइ।।२००।।

अधमामाह। वागिति। सखीं प्रति नायस्योक्तिरवगन्तव्या। हे सखीति सम्बद्ध्याक्षेपः। अस्या वाग्–वाणी मधुरा मनस्तु स्निग्धं स्नेहयुक्तं तथापि पुनः भ्रुवौ सरले किन्तु–अधिकश्वासावादरहेतुस्तेन मनसाधिकशङ्का–अपि प्राप्ता। अत्रादराधिक्येन कोपाधिक्यशङ्का वर्णनात् तस्या अधमत्वं व्यज्यते।।२००।।

अन्यतरं दृष्टवा प्रियं स्वप्ने मानमितानि।
जागरेऽपि जल्पति न सा तल्पतटं न जहाति।।२०१।।

रही पकरि पाटी सुरिस भरै मोह चित चैन।
लषि सपनै प्रिय आनरत जगतहु लगत हियै न।।२०१।।

।। इति श्रीमच्छृङ्गारसप्तशतिकायायां नायकनायिकावर्णनं प्रथमः परिच्छेदः।।

पुनर्यथा अन्येति। अत्रापि कवेरुक्तिर्ज्ञातव्या। यद्वा सख्याः सखी प्रत्युक्तिः। सा बाला स्वप्ने प्रियं पति मन्यस्यां रतं दृष्ट्वा–अति–अतिशयेन मानम्–इता प्राप्ता। पुनर्जागरेऽपि सति प्रियं प्रति न जल्पति। तल्पतटं शय्यातटं न जहाति। एतेन स्वप्नदृष्टस्वल्पापराधे मानाधिक्यादधवत्वेऽधमा ज्ञातव्येत्यर्थः।।२०१।।

श्रीयुतपरमानन्दविचरचितायां शृङ्गारसप्तशतीव्याख्यायां नायकनायिकावर्णनं नाम प्रथमः परिच्छेदः।।१।।



## द्वितीयः परिच्छेदः
### ( विप्रलम्भश्रृङ्गारवर्णनम् )

**उपरिभित्तिमवलम्ब्य मुखमुन्नमय्य सकृदेव।**
**द्वयोः कपोलतले-उभौ चारु चुचुम्बतुरेव।।२०२।।**

**अँगुरिन उचिभरु भीति दै चकितचितै चषलोल।**
**रुचि सौ दुहून के चूमै चारु कपोल।।२०२।।**

अथ पञ्चभिर्दम्पत्यो संयोगश्रृङ्गारमुदाहरति। उपरीति। अन्तरङ्गायाः सख्याः सखीं प्रत्युक्तिर्यद्वा कवेरुक्तिः सम्भावनीया। भित्तिमुपरि-अवलम्ब्य मुखमुन्नमय्य सकृदेव युगपदेव-उभौ नायिकानायकौ द्वयोः कपोलतले चारु यथा भवति तथा चुचुम्बतुरेत्यन्वयः। संयोगश्रृङ्गारप्रीतिबिम्बाख्ये भरतसूत्रे दर्शनस्पर्शनादीनि निषेवेतेविलासिन्यौ। 'यत्रानुरक्तावन्योन्योन्यं संयोगः स उदाहृतः।' इति सङ्ख्यातुमशक्यतया चुम्बनपरिरम्भणादि बहुभेदान्। अयमेक एव धीरैः कथितः संयोगश्रृङ्गार इति लक्षणात्।।२०२।।

**श्रुत्वा मौनव्रतपरं मञ्जीरव्रजमेव।**
**बभौ विपर्यय सौरते किङ्किणि कलकल एव।।२०३।।**

**परौ जोर विपरीतरति रची सुरति रनधीर।**
**करत कोलाहल किङ्किणी गह्यौ मौन मञ्जीर।।२०३।।**

पुनर्यथा। श्रुत्वेति। विपर्य्ययञ्च तत्सौरतं तस्मिन् विपरीतरतावित्यर्थः। मञ्जीराणां नूपुराणां व्रजं समुदायं मौनव्रतपरमितिश्रुत्वा-इदानीं मञ्जीरैर्मौनव्रतं धृतमित्याकर्ण्य किङ्किणी क्षुद्रघण्टिका कटिस्था तस्याः कलकलः कोलाहलो बभौ शुशुभेत्यन्वयः। कोलाहलः कलकल इत्यमरः। अत्रापि विपरीतरता सक्तयूनोर्भावदन्त्या अन्तरङ्गायाः संख्यावचनमिदम्। तेन श्रृङ्गाराख्यो रसः। सच संयुक्तनायिकानायकयो-र्विपरीतसुरतवर्णनमुखेन प्रकाशित इति।।२०३।।

**रतिसनिद्रमुदितदृशौ रमणौ रव्युदयेऽपि।**
**पुनर्मिमिलतुः शिश्यतुः पुनरासतुः शयेऽपि।।२०४।।**

**नीठि नीठ डिठि बैठहू पिय प्यारी परभात।**
**दोऊ नीद भरे षरे गरै लागि गिरिजात।।२०४।।**

पुनर्यथा। रतीति। रत्या सनिद्रे सालसे मुद्रिते च दृशौ ययोस्तौ रमणी च रमणश्च रमणौ रवेरुदयेऽपि सति अपीति निश्चयेन शये शयने पुनर्निमिलतुः। मिलित्वा पुनर्मिलापं चक्रतुरित्यर्थः। पुनः शिश्यतु पुनः आसतुः तस्थतुरित्यन्वयः। अत्रापि तयोः सुरतान्तदशां वर्णयन्त्याः अन्तरङ्गसख्या वचनमिदं तेन संयोग श्रृङ्गारो व्यङ्ग्य इति।।२०४।।

सुरतविपर्ययवाञ्छया पत्यौ प्रणमति सैव।
ददावुत्तरं भामिनी सस्मितमौनेनैव।।२०५।।

विनती रति विपरीत की करी परसि पिय पाइ।
हँसि अनबौलौ ही रही उत्तर दियौ बनाइ।।२०५।।

पुनर्यथा। सुरतेति। सुरतविपर्ययो विपरीतरति तद्वाञ्छया विपरीतरताभिलाषेण पत्यौ प्रणमति सति। सा भामिनी-एव निश्चयेन सस्मितं च तन्मौनं तेनैव-उत्तरं ददावित्यन्वयः। अत्र मौनेन स्वात्मनः सलज्जत्वं पुरुषायिते प्रदर्शितं हसितेन च तत्साभिलाषत्वयिते प्रदर्शितं हसितेन च तत्साभिलाषत्वमित्युत्तस्याशयः। एतेन संयोगश्रृङ्गारः सख्यावचनेन प्रकाशित इति।।२०५।।

रचय चन्द्रमुखि सौरतं विपरीतं रमणेन।
इति कथिता पश्यति सजलहसितकुपित नयनेन।।२०६।।

मन कह्यौ हठिरमनि सौ रति विपरीत विलास।
चितई करि लोचन सतर सजल सरोस सहास।।२०६।।

पुनर्यथा। रचयेति। सख्याः सखी प्रत्युक्तिः। यद्वा कवेरुक्तिः। चन्द्रवन्मुखं यस्याः सा तत्समुद्धौ। विपरीतं सौतरं रचय इति रमणेन पत्याकथिता सती सजलं सहसितं सकुपितं च तन्नयनं तेन तं पश्यतीति-अन्वयः। नयनमिति जात्याभिप्रायेणौकवचनम्। विपरीते श्रमाधिक्याद्धीत्या सजलत्वं साभिलाषत्वात्सहसितत्वं पुनः पुर्नारिदमेव मां वदसीति सकुपितत्वमिति भावः। एतेनापि संयोगश्रृङ्गारो व्यज्यते।।२०६।।

प्रेयस्या मीलितदृशौ नर्मसु पतिर्यथैव।
तत्करसुखमनुभूयसा तूष्णीमास तथैव।।२०७।।

पीतम दृग मूँदत प्रिया पानि परस सुख पाइ।
जानि पिछानि अजान लौ नैकु न होत जनाइ।।२०७।।

अथ पञ्चभिः संयोगश्रृङ्गारान्तर्गतां दम्पत्योः प्रेमखेलामुदाहरति। प्रेयस्या इति। अत्रापि सख्या सखीं प्रत्युक्तिः। पतिः प्रेयस्याः दृशौ नर्मसु खेलासु लीलाखेला च नर्म चेत्यमरः। यथैव येनैव प्रकारेण तां वञ्चयित्वेति भावः। मीलति तथैव तेन प्रकारेण तद्वञ्चनमज्ञातैव तत्करसुखं तत्करयोः स्पर्शानन्दमनुभूय तृष्णीमास। न किञ्चित्प्रोवाचेत्यन्वयः। एतेन तस्या मुग्धात्वं ज्ञातयौवनत्वं च व्यज्यते।।२०७।।

मृगीदृशो मीलति दृशौ रमणे नर्मरसेन।
प्रियस्तदा बबुधे तदनु तद्वाहुग्रहणेन।।२०८।।

द्रगमिहचत मृगलोचनी उलटि धरै भुज पाथ।
जान गई तिय नाथ के हाथ परै ही हाथ।।२०८।।

पुनर्यथा। मृगीदृश इति। नर्मरसेन खेलामन्देन रमणे पत्यौ मृगीदृशस्तस्याः दृशौ मीलति सति तया मृगीदृशा तदनु तदनन्तरं तद्बाहुग्रहणेन तद्भुजस्पर्शेन हेतुना प्रियो बुबुधे ज्ञात इत्यन्वयः। अत्रापि प्रियां वञ्चयित्वा प्रियेप दृशौ मीलिते सापि तद्बाहुस्पर्शहेतुना तं ज्ञातवतीतिसख्याः सखी प्रत्युक्तिर्बोध्या।।२०८।।

सुप्तोऽसाविति मे मुखं बाला चारु चुचुम्ब।
हसति सशङ्के मयि पुनर्मिलति गले विललम्ब।।२०९।।

हौ मिसु कै सोयौ समुझि मुहचूम्यो ढिग जाइ।
हस्यौ षिसानी गलगह्यौ रही गरै लपिटाइ।।२०९।।

पुनर्यथा। नायकोक्त्या प्रेमखेलामाह। सखीं प्रति-अनुभूतखेला सुखं नायकमाह। सुप्तेति। असौ सुप्त इति ज्ञात्वा बाला मे मम मुखं चारु यथा भवति तथा यथा चुचुम्ब। पुनर्मयि हसति सति सा शशङ्के तदामिलति मामिति शेषः। पुनर्मम गले विललम्बेत्यन्वयः। तस्या मिलनं गलावलम्बनं चतद्वञ्चनाकृत-कोपादवगन्तव्यं कोपस्तु प्रेमजनित एवेति। 'मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः।' तयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपीति भरतोक्तेः। गलग्रहणादेवकोपभङ्ग-वर्णनादिति दिक्।।२०९।।

नयननिमीलन खेलने न तावलं हृदयेन।
यद् गमनागमने पुनर्मिलनं यत्र रसेन।।२१०।।

दोऊ चोर मिही चमी खेलन खेल अघाइ।
दुरति हियै लपिटाइ कै छुटत हियै लपिटाइ।।२१०।।

पुनर्यथा। नयनेनेति। तौ नायकौ नयननिमीलन खेलने नेत्रनिमीलनाख्ये खेलाविशेषे हृदयेन मनसा-अलं परिपूर्णौ न भवतः। 'अलं भूषणपर्याप्तिशक्तिवारणवाचिष्विति-अमरः। यत्र यस्मिन् खेलने गमनञ्चागमनञ्च तस्मिन् रसे न सुखेन पुनर्मिलनं भवतीत्यन्वयः। अत्र तयोः पुन पुनर्मिलिना-नन्दावाप्ति हेतोस्तत्खेलनान् नास्ति परिपूर्णतेति तस्याज्ञातयौवनात्वं ध्वन्यते।।२१०।।

उभौ जिगीषामासतुः परस्परं तावेव।
मनस्तुरङ्गमगामिनौ प्रेमरसाजिर एव।।२११।।

सरस सुमिल चित तुरँग के करि करि अमित उठान।
गोय निवाहै जीतिये षेल प्रेम चौगान।।२११।।

पुनर्यथा। उभाविति। सख्याः सखीं प्रत्युक्तिः। प्रेमरस एव-अजिरमङ्गणं तस्मिन्नेव तावेव-उभौ नान्यैः सहचरी गणैरित्यर्थ;। परस्परं मन्योन्यं मन एव तुरङ्गमस्तेन गामिनौ गच्छन्तौ सन्तौ जेतुमिच्छा जिगीषा तामासतुः प्रापतुरित्यर्थः। किं च तुरङ्गगामिनां जेतुमिच्छा सविस्ताराङ्गणे भवतीति-अत्र महति प्रेमानन्दाजिरे मनस्तुरङ्गतौ नायकौ जिगिषामासतुस्तेन समाभेदरूपकालङ्कारः।।२११।।

मधुमत्ता विहसति पुनर्मिलति चलति पुनरेव।
वल्मति जल्पति परिहसति बाला परिजनमेव।।२१२।।

हसि हसि हेरत नवल तिय मद के मद उमदाति।
बलकि बलकि बोलत वचन ललकि ललकि लपिटाति।।२१२।।

अथ पञ्चभिर्नायिकाया मधुपानदशामाह। मधुमत्येत्यादि। सख्या सखीं प्रत्युक्तिः। यद्वा तस्या मधुपानदशां दृष्ट्वा नायकः सखीं प्रत्याह। सा बाला मधुना मत्ता सती विहसति पुनर्मिलति पुनरेव चलति पुनर्वलति पुनर्जल्पति। पुनः परिजनं सखीजनं प्रत्येव परिहसतीति सर्वासां क्रियाणामेकस्मिन्नन्वयात्समुच्चयालङ्कारः। 'बहूनां युगपद्भावभाजां गम्यः समुच्चयं इतिलक्षणात्। अत्र शतपत्रभेदन्यायेन किञ्चित्काल-विलम्बेऽपि मधुपानस्यातिशयद्योतनाय यौगपद्यं विवक्षितमिति दिक्।।२१२।।

अविदग्धा मुग्धा च सा विदग्धेव विचकास।
मधुमतामवदृश्य तां प्रियस्तथा विललास।।२१३।।

ढीठौ दै बोलति हसति प्रौढविलास अबोढ।
त्यों त्यों' चलत न पिय नयन छक ये छकी नवोढ।।२१३।।

पुनर्यथा। अविदग्धेति। अविदग्धा वैदग्यरहिता सा मुग्धा च प्रौढवे विशेषेण चकास शुशुभे तदा प्रियस्तां मधुमत्तामवदृश्य ज्ञात्वा तया तेनैव प्रकारेण प्रौढविलास प्रकारेणेति भावः। विललास विलसितवानित्यर्थः। अत्रापि सख्याः सखीं प्रत्युक्तिर्बोध्या।।२१३।।

मधुपसखीजनसङ्गतः सा मधु पपौ यथैव।
सलज्जाऽपि लज्जां विना विहसति तथा तथैव।।२१४।।

निपट लजीली नवल तिय बहकि वासनी सेइ।
त्यौं त्यौं अति मीठौ लगै ज्यौं ज्यौं ढठौ देइ।।२१४।।

पुनर्यथा। मधुपेति। अत्रनायकस्योक्तिः। तस्या मधुपान दशां दृष्ट्वा सखीषु वर्णयति। सलज्जाऽपि सा मधुपश्चासौ सखीजनस्तेषां सङ्गतः यथैव येन प्रकारेण लज्जां विना विहसति-इत्यर्थः। अत्र सलज्जाया निर्लज्जात्वं नायकस्याधिकप्रीतिदायकमिति ध्वन्यते।।२१४।।

मधुमत्ता मदनालसा कौतुकमाचरतीव।
विलसति विहसति परिहसति वामा विकलमतीव।।२१५।।
बाम तमासौ करि रही विवस वारुनी सेइ।
झुकि झुकि हसि हसि झुकि रही झुकि झुकि हसि हसि देइ।।२१५।।

पुनर्यथा। मधुमत्तेति। सा मदनेन-अलसा मन्दगामिनी मदनालसा मधुनामत्ता सती कौतुकमिवाचरति। तत्कौतुकमाह। अतीव विकलंयथा भवति तथा सा बाला विलसति विहसति परिहरति। अत्र यौपद्येन सर्वासां क्रियाणां समन्वये समुच्चयालङ्कारः। किञ्चित्किञ्चित्कालविलम्बेऽपि मधुपानस्याति शयद्योतनाय यौगपद्यं विवक्षितं शतपत्रभेदन न्यायेनेति भावः।।२१५।।

अर्द्धोन्मीलितलोलचना - अर्द्धोदितवचनापि।
मदारुणाश्रमजलकणा सुषमा विलसति कापि।।२१६।।
बलित वचन अधषुलित दृग ललित स्वेदकनजोति।
मरुत वदन छवि मद छकी षरी छवीली होति।।२१६।।

पुनर्यथा। अर्द्धेति। नायकस्तस्या मधुपानदशायाः शोभां सहचरीषु वर्णयति। यद्वा कवेरुक्तिःसम्भावनीया। अर्द्धोन्मीलिते लोचने यस्यां सा। अर्द्धोदितानि वचनानि यस्यां सा-अपि निश्चयेन सदारुणा मदेन अरुणवर्णाश्रमजलानां कणा विन्दवो यस्यां सा-एतादृशी कापि-अनिवर्चनीया सुषमा परमा शोभा विलसतीत्यर्थः। तस्या इति शेषः। स्वभोक्तिरलङ्कारः।।२१६।।

तस्थौ रूपमदालसः पिबति नासवं सोऽपि।
प्रिया मुखे धृत्वा दृशावधरविधृतचषकोऽपि।।२१७।।
रूप सुधा आसव छक्यौ आसवपिबत वनैन।
प्याले औठ प्रिया वदन रह्यो लगायै नैन।।२१७।।

नायकस्यापि मधुपानमुदाहरति। तस्थाविति। नायकस्य मदपानदशां दृष्ट्वा सख्याः सखीं प्रत्युक्तिः। अधरे विधृतचषकोऽपि असौ रूपमदेन अलसः सन् तस्थौ स्थितवान् किञ्च प्रियमुखे दृशौ नयने धृत्वा स्थापयित्वा सोऽप्यासवं पिबतीत्यन्वयः। एतेन लौकिकमधुपानमाधुर्याद्रूपमदस्याधिक्यं व्यज्यते।।२१७।।

परस्परं तमसावृते मार्गे तौ मिलनेन।
विवदतुः स्पर्शपरीक्षया मुमुदाते च सुखेन।।२१८।।
गली अँधेरी साकरी सौभट भेरौ आन।
परे पिछाने परस्पर दोऊ परम पिछानि।।२१८।।

अथ द्वाभ्यामाकस्मिकमिलनमाह। परस्परमिति। सख्याः सखीं प्रत्युक्तिः। तमसावृते मार्गे तौ नायकौ परस्परमन्योन्यं मिलनेन सङ्गमेन स्पर्शपरीक्षया विविदतुः ज्ञावन्तौ च पुनः तत्सुखेन मिलनान्देन मुमुदाते मुदं प्राप्तवन्तावित्यर्थः। अत्र गाढान्धकारेण–आकस्मिकमिलनात्संयोगजसुखमनुभूय उभावन्योन्यं मुमुदाते–इति स्पष्टार्थः। तेन संयोगश्रृङ्गारो दर्शितः।।२१८।।

नटवेषं ददृशे हरिं लकुटमुकुटधरमेष।
यमिच्छन्ती गच्छति वने वनमालिनं तमेव।।२१९।।

लटकि लटकि लटकत चलत उठत मुकुट की छाह।
चटक भरौ नट मिलि गयौ अटक भटक बन माह।।२१९।।

पुनर्यथा। सा बाला यं हरिं वाञ्छन्ती सती वने गच्छति तमेव वनमालिनं वनमालाधरं नटस्येव वेषो यस्य तं लकुटमुकुटौ धरतीति स तथा। तं हरिं ददृशे–अकस्मास्तेन सङ्गमो जात इत्यर्थः। अत्र प्रहर्षणालङ्कारो ज्ञातव्यः। अकस्मातत्संयोगरूपकार्यसिद्धेरिति दिक्।।२१९।।

धृत्वा प्रेष्ठ! कनिष्ठिकां हरे करं गृह्णासि।
ज्ञाता बलिवामनकथा तेन यथैव हि यासि।।२२०।।

छ्वै छिगुनी पहुँचौ धरति अति दीनता दिखाइ।
बलिवामन कौ बात सुनि को बलि तुम्है पत्याइ।।२२०।।

अथैकेन नायकं प्रति नायिकायाः परिहासमाह। धृत्वेति। हे प्रेष्ठ! हे प्रियतम! हे हरे! त्वं कनिष्ठिकां धृत्वा करं गृह्णासि–इति लोकोक्त्या स्वल्पं दर्शयित्वा त्वं बाहुग्रहणदक्षोऽसीति परिहासोक्तिर्ज्ञातव्या। तदेव दृष्टान्तेन स्पष्टयति। हि युक्तेऽमयर्थः। बलिवामनयोः कथा मया ज्ञाता तेन यथैव तेन मार्गेणैव यासि गच्छसि। एतेन सर्वोऽपि तव व्यवहारः कापट्यकृत एवेति परिहासोक्तिर्बोधव्या तस्मात्तवप्रतीतिर्नायतीति भावः।।२२०।।

देहि देहि दधि राधिके! दयया दृशं विधेहि।
शिक्यस्थित करतलयुगं तिष्ठ तिष्ठ मा देहि।।२२१।।

अहे दहेड़ी जनि धरै जनितै लेहि उतार।
नीकौ है छीकौ छुवै ऐसी यै रहि नारि।।२२१।।

अथ द्वाभ्यां नायिकां प्रति नायककृतपरिहासमाह। देहि देहीति। हे राधिके! दधि देहि देहि। इति तेनोक्तेऽपि सा यदा तं न पश्यति तदा पुनराह। दयया दृशं विधेहि। मां पश्य–इति–अति दीनतया वाक्यम्। इत्युक्तेऽपि सा न स्थिता तदाह मा देहि किन्तु शिक्यस्थित करतलयुगं यथा भवति तथा तिष्ठ तिष्ठेति। अत्र पुनः पुनः कथनेन शिक्यस्थितकरतलयुगावस्थानेन चास्माकमुरोजदर्शना–

वसरस्तस्मान्मा देहि तिष्ठेति साभिप्राया परिहासोक्तिरवगन्तव्या। दधिदानादधिकका नन्दसन्दोहो वक्षोजदर्शनेति भावः।।२२१।।

क्रुधा माधवं मानिनी तिरस्करोति यथैव।
मुदा पुनः पुनरनुनयं कुरुते सोऽपि तथैव।।२२२।।
मन न मनावन कौ करै देत उठाय उठाय।
कौतुक लाग्यौ पिय तिया षिझहु रिझावन जाइ।।२२२।।

पुनर्यथा। मानिनी मानवती क्रुधा कोपेन यथैव येन प्रकारेण निज करणेति भावः। माधवं हरिं तिरस्करोति दूरीकरोति तथैव तेन प्रकारेण सोऽपि माधवः तरुत्करस्पर्शमुदा पुनपुनरनुनयं कुरुते, तत्तिरस्करणदशां द्रष्टुमिति भावः। अत्रापि पुनः पुनरनुनयनं परिहासार्थमिति ज्ञातव्यम्।।२२२।।

चिरं लसतु युवयोर्युगं तत्राऽसमो न कोऽपि।
यत्राऽसौ वृषभानुजा हलधृगनुज इति सोऽपि।।२२३।।
चिरजीवै जोरी जुरै क्यों न सनेह गभीर।
को घट ये वृषभानुजा वे हलधर के वीर।।२२३।।

अथ नायकौ प्रति सख्या; परिहासमाह। चिरमिति। युवयो राधाकृष्णयोर्युगं युगलं चिरं लसतु चिरं जीवत्विति। आशिषं ददामीत्यर्थः। अत्र युगेऽसमः-अतुल्यः कोऽपि न वर्तते। 'समानशीलव्यसनेषु मैत्री'-ति वाक्यात्। असमत्वं प्रतिपादयन्ती प्राह-यत्र युगेऽसौ वृषभानुजा वृषभानुसुता अर्थान्तरे वृषभस्य-अनुजा (वत्सतरी) सोऽपि नायकोऽपि हलधृगनुजः बलरामानुजः अर्थान्तरे हलधराणामनुजः (गवेन्द्रः) इति शब्दशक्तिजन्माऽर्थान्तरसङ्क्रान्तवाच्यध्वनिः। तेन परिहासो व्यज्यत इति दिक्।।२२३।।

सुकुमारी पथि शार्करे गच्छति कृच्छतयाति।
भ्रामं भ्रामं भावुकः पुनरपि तं गृह्णाति।।२२४।।

नाक मोरि सीवी करै जितै छबीली छैल।
फिर फिर भूलि वहै गहे पिय ककरीली गैल।।२२४।।

अथ भावमुदाहरति। सुकुमारीति। अत्र कवेरुक्तिर्ज्ञातव्या। सा सुकुमारी मृद्वङ्गीशार्करेपथि मार्गे अति-अति शयेन कृच्छतया गच्छति भावुकस्तुतद्भावास्वादानन्दायेत्यर्थः। भ्रामं भ्रामं भ्रान्त्वा पुनरपितमेव शार्करं पन्थानं गृह्णातीत्यन्वयः। एतेन नायिकायाः सशार्करमार्गचलनान्नासिका-भ्रूकुटिमोहनादिसौकुमार्यकृत नानाभावदर्शनाय पुनस्तन्मार्गगमनं शृङ्गारस्य प्रथमोत्पन्न चित्तविकाससूचकम्। निर्विकारात्मके चित्ते भावः प्रथमभाविक्रियेतिलक्षणात्।।२२४।।

सुप्तेऽयं हरिरिति वधूर्बुध्वा यदुपससार।
तदा सपुलकं तदृशोः स्वीये दृशौ दधार।।२२५।।

मुह उघारि पिय लषि रहत रह्यौ न गौ मिस सैन।
फरके औठ उठी पुलकि गये उघरि जुरि नैन।।२२५।।

सात्विकभावमुदाहरति। सुप्तेति। सख्या सुखीं प्रत्युक्तिः कदाचित्स्वप्नमिषेण इयं बाला तूष्णीं भूता हरिस्तु-इयं वधूः सुप्ता-इति बुध्वा ज्ञात्वा यद् यदा उप समीपे ससार जगाम तदा तस्मिन् काले सपुलकं सरोमाञ्चं यथा भवति तदा तद्दशोर्मध्ये स्वीये दृशौ दधार धृतवतीत्यन्वयः। अवलोकनं चकारेत्यर्थः सत्वं नाम स्वात्मविश्रामकारि भावान्तरः कश्चिच्छारीरधर्मः। विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्तिता इति ते चाष्टौ स्तम्भादयः तेष्वत्र रोमाञ्चसात्त्विकभावः। विषादोत्साहहर्षेभ्यो भयादाश्चर्यतोथवा, रोम्णामभ्युद्गमो देहे रोमाञ्चः स्याच्चशीतवदिति लक्षणात्।।२२५।।

अर्द्धोन्निद्रितनयनयुगमर्द्धोज्झितशयनञ्च ।
स जजम्भ भेजे पुनः पुनरपि शयनीयञ्च।।२२६।।

अधषुलि नैन उघारि कै मोर अङ्ग अगिराइ।
आधिक उठि लेटति लटकि आरस भरी जह्माइ।।२२६।।

जृम्भाया अपि सात्त्विकत्वमुदाहरति। अर्द्धेति। सा बाला-अर्द्धोन्निद्रितं नयनयुगं यथा भवति तथा च पुनः अर्द्धोज्झितं शयनं यथा भवति तथा च जजम्भ गात्रं विननाम-इत्यस्य लिटिरूपम्। पुनः पुनरपि शयनीयं च भेजे-इत्यन्वयः। अत्र जृम्भाया अपि सत्त्वमात्रोद्भवत्वात् जृम्भाऽपि नवमः सात्त्विक इति केचित्।।२२७।।

उभौ विवक्षू नोचतुः किमपि वचो मनसैव।
लुब्धो याचक आगते न वदति किमपि यथैव।।२२७।।

दोऊ चाह भरे षरे चाहै कह्यौ कहै न।
नहि जाचक सुनि सूमलौ बाहिर निकसत वैन।।२२७।।

अवलम्बनविभावमाह। उभाविति। कवेरुक्तिः। यद्वा सख्योरुक्तिः। उभौ नायिकानायकौ मनसैव हृदयेनैव विवक्षू वक्तुमिच्छन्तौ किमपि वचो नोचतुः तत्तदिच्छाया परस्परं हृदयाभिज्ञतयेति भावः। तद्दृष्टान्तमाह। लुब्धो याचक आगते यथैव किमपि न वदति-अत्रापि परस्परं तत्तद्-धृदयाभिज्ञतेति भावः। आलम्बनोद्दीपन भेदेन विभावस्य द्वैविध्यं तत्रालम्बनविभावस्य द्वैविध्यं तत्रालम्बनविभावो नायिकाया नायकः नायकस्य नायिकाचेति आलम्बनातिरिक्तं रत्यादिकारणमुद्दीपनविभाव इति दिक्।।२२७।।

अहो सुखदं सुखदमपि सखि! जातं समयेन।
पश्य चैत्रचन्द्रोऽपि मामिह दुनोति मदनेन।।२२८।।

भौ यह औसोइ समय जहाँ सुषद दुष देत।
चैत चन्द की चाँदनी डारत कियै अचेत।।२२८।।

उद्दीपन विभावमाह। अहो इति। सखीं प्रति नायिकाया उक्तिः। हे सखि! समयेन हेतुभूतेन सुखदमपि वस्तुविशेषं दुःखदं जातमित्यन्वयः। पश्येति-इहास्मिन् समये चैत्रचन्द्रोऽपि त्रैमासक्षपोदितचन्द्रोऽपि मदने न सहेति गम्यमाने सहार्थे तृतीया यद्‌वा मदनेन हेतुना मां दुनोति सन्तापं करोति-इत्यर्थः। एतेन विरहिणीनायिका तस्या उक्तिरिति चन्द्रोदयश्चोद्दीपनत्वेनोदाहृतः। तेषु विरहदशायां सन्तापप्रदा-इति।।२२८।।

बाला वातायनगता सा दहनज्वालेव।
हत्वा तिलकशरं ममादर्शनपथं गतेव।।२२९।।

नावक सर से लाइ कै तिलक तरुनि इत ताकि।
पावक झर सी झमकि कै गई औच काँ झाकि।।२२९।।

अनुभाव माह। बालेति। वातायनं गता गवाक्षस्थिता सा बाला दहनज्वालेव अग्निशिखेन मया दृष्टेति सखीं प्रति नायकवचनम्। अग्निशिखेवेत्यनेनाधुनाऽपि तद्विरहसन्तापाधिक्यमिति व्यज्यते। किञ्च तिलक एव शरो बाणस्तं हत्वेव ममादर्शनपथं गतेति-एतेन भ्रुवोर्धनुषोपमानत्वं व्यज्यते तन्मध्ये तिलकस्य बाणत्वामित्याशयः। यतः सा-अदर्शनं गतेति तदर्शनेन शृङ्गाररसस्थायित्वप्राप्तरति-भावस्यानुभावादनुभावत्वमिति दिक्।

श्रुत्वा चरणध्वनिमितो दृष्ट्वा पृष्ठगतं च।
परिजहास बिभ्ये च मामनु ललज्ज सानञ्च।।२३०।।

सुनि पग धुनि चितई इतौ रहत दियै ही पीठि।
चकी झकी सकुची डरी हसी लजीली डीठि।।२३०।।

किलकिञ्चितहावमुदाहरति। श्रुत्वेति। सखीं प्रति नायकस्योक्तिः। सा बाला इतः अस्मिन् स्थाने चरणध्वनिं मदीयगमनध्वनिं श्रुत्वेत्यर्थः। च पुनः विभ्ये भीता-अनु पश्चाल् ललज्ज पुनरानञ्च जगामित्यर्थः। अत्र परिहासेत्यादि क्रियाणां सेति तच्छब्देन यौगपद्यान्वयात्समुच्चयालङ्कार;। स्मितशुष्करुदितक्रोधत्रासा-दीनांसाङ्कर्यं किलकिञ्चितमितिलक्षणात् किञ्चिताख्यो हाव-विशेषोबोध्यः।।२३०।।

लज्जा कम्पस्वेदपरिहासं ददौ सदैव।
ताम्बूलं तरुणी करे हृत्वा मनो ममैव।।२३१।।

सहित सनेह सकोच सुष स्वेदकम्प मुसक्याति।
प्रान पान कर आपनै पान दिये मो पान।।२३१।।

पुनर्यथा। लज्जेति। तरुणी बाला लज्जा च कम्पश्च स्वेदश्च परिहासश्च एते यथा भवन्ति तथा मुदैव सुखेनैव मनः हृदयं हृत्वा वशीकृत्य करे मदीये-इति तात्पर्यम्। ताम्बूलं ददावित्यन्वयः। अत्रापि लज्जादीनां साङ्कर्यात् किलकिञ्चितहावो बोध्यः। तस्यास्ताम्बूलदानचातुर्यं सौन्दर्यं च दृष्ट्वा तद्वशीभूतो नायकः स्वां दशां सखीषु वर्णयतीति भावः।।२३१।।

विपर्यस्तकृतमन्मथं सिञ्चति वारि तदेव।
सामुञ्चति दधिभाजनं रचयति कौतुकमेव।।२३२।।

रही दहैडी दिढगधरी भरी मथनिया वारि।
फेरतकर उलटी रई नई विलोवन हारि।।२३२।।

विभ्रमहावमाह द्वाभ्याम्। विपर्यस्तेति। सा बाला विपर्यस्तकृतं मन्थनं मन्थनदण्डं यथा भवति तदा तदेव तस्मिन्नेव मन्थने वारिजलं सिञ्चति पुनर्दधिभाजनं मुञ्चति जहाति, अतएव कौतुकं रचयति-इति भावः। एतां दशां तस्या दृष्ट्वा सर्वे जनाः कौतुकिनो जाता इत्यर्थः। दधिभाजनभ्रमान् मन्थानं विपरीतं कृत्वा वारि सिञ्चति-इति नूतनतरैवाऽस्या दधिविलोडनप्रक्रियेति सर्वेषां मनसि कौतुकं जातमिति भावः। अत्राऽगच्छन्तं नायकं प्रेक्ष्य तदानन्दसन्दोहमग्नत्वाद् विभ्रमोजात इति त्वं पश्येति सख्याः सखीं प्रत्युक्तिर्बोध्या। तेन विभ्रमाख्यो हावविशेषः। 'प्रिया गमनादौ स्थानान्तरे भूषनवस्त्रादिविभ्रमः' इतिलक्षणात्।।२३२।।

नासालङ्कृतिमौक्तिकद्युतिरियमधरे भाति।
नहि नहि चूर्णमिदं कथं परिमर्द्दैरपयाति।।२३३।।

वेसरमोती झलकद्युति परी अधर पर आइ।
नूनौ होइन चतुर तिय क्यों पट पौछौ जाइ।।२३३।।

पुनर्यथा। नासेति। नायिकां प्रति सख्या उक्तिः। हे बाले! इति सम्बुद्धयाक्षेपः। अधरे तवेति शेषः। नासालङ्कृतिभूतो यो मौक्तिकः तस्येयं द्युतिः तत्प्रतिबिम्बरूपेयं कान्तिः भाति शोभते इदं चूर्णं नहि नहीति-आदराधिक्ये वीप्सापरिमर्दैः सम्मर्दनैः कथं केन प्रकारेण-अपयाति-अपगच्छतीत्यन्वयः। एतेन तस्या अज्ञातयौवनात्वं व्यज्यते। सा तु चूर्णभ्रमात् परिमर्द्धनं करोति। सख्या तद्भ्रमो निवारितः। अत्र प्रियागमनादौ स्थानान्तरे भूषणवस्त्रादिविन्यासो विभ्रम इति विभ्रमहावलक्षणे आदि पदोपन्यन्यासाद् भ्रममात्रे पर्यवसानमिति मत्वा यथाकथञ्चिद् विभ्रमहावलक्षणानुगतिः। वस्तुतस्तु भ्रमालङ्कार एव। किं च 'भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे।' इति लक्षणाद् भ्रान्ता पह्नुतिरपि। किं च भ्रमभ्रान्तापह्नुत्योस्तिल-तण्डुलन्यायायेननैकीभावात् संसृष्टिरिति दिक्।।२३३।।

विदलीकृतसूपस्य यत् परिमार्जनं करोति।
महानसेऽपि महाद्युतिं सा विधुमुखी करोति।।२३४।।

तटकी धोई धोवती चटकीली मुखजोति।
लसत रसोई के बगर जगरमगर दुति होति।।२३४।।

ललितहावमाह। विदलीकृतेति। सा विधुमुखी चन्द्रवदना महानसेऽपि पाकशालायामपि यत् यदा विदलीकृतं च यत् सूपं तस्य परिमार्जनं जलेनेति शेषः। करोति यत्तदोनित्यसम्बन्धात् तत्पदाक्षेपः तत्तदा महती चासौ द्युतिः कान्तिर्महाद्युतिस्तां तमोति विस्तारयति। एतेन सौकुमार्यविशिष्टः सर्वाङ्गचातुर्यपूर्वकं सूपसम्मार्जनक्रियेयं मदीयं मानसं मोहयतीति नायकवाक्याभिप्रायो ध्वन्यते। सखीं प्रति तत्प्रशंसावर्णनात्सुकुमारतया सर्वाङ्गचातुर्यपूर्वककरचरणादिविन्यासो ललितमिति लक्षणात् ललिताख्यो हावविशेषो बोधव्यः।।२३४।।

क्षणं चलति तिष्ठति भुजं माधवगले निधाय।
तडिदिव सा प्रासादगा पश्यति घनं सुखाय।।२३५।।

छिनकु चलति ठटकति छिनक भुज प्रति मंगल डारि।
चढ़ी अटारी देखत घटा विज्जुछटा सी नारि।।२३५।।

हेलाहावमुदाहरति। क्षणमिति। सा प्रासादगा हर्म्यस्था भुजं माधवस्य कृष्णस्य कण्ठे निधाय क्षणं तिष्ठति क्षणं चलति क्षत्रमित्यस्योभयत्रान्वयः। किञ्च सुखाय सुखमनुभवितुं घनं मेघं पश्यति च। कीदृशी सा तडिदिव। तडिद्वर्णा प्रतिक्षणं चलनस्थिरीभाव-साधारणधर्मेण सेति तच्छब्दोपमेयेन तडिदित्युपमानेन सह-इवेत्युपमावाचकस्योपादानात् पूर्णोपमा बोध्या अत्र सख्या सखीं प्रति-उक्ति रवगन्तव्या। किञ्च माधवगलेभुजसारणपूर्वकमेघाद्युद्दीपनविभावदर्शनचलनस्थिरीभावक्रियया-ऽत्यन्तरसावेशी व्यज्यते तेन हेलात्यन्तरसावेशप्रकाशकरणात्मिकेतिलक्षणात् हेलाख्यो हावविशेषो-ऽवगन्तव्यः।।२३५।।

पश्य हरीयति राधिका राधीयति हरिरेव।
विपर्यस्तरतिगतसुखं गृह्णीतस्तावेव।।२३६।।

राधा हरि हरि राधिका वनि आए सङ्केत।
दम्पति रति विपरीत सुख सुरतिहू लेत।।२३६।।

गृहं गृहं विचरति पुनर्न गृहे रमते कदापि।
तद् बुध्वा बुध्वाऽपि सा गृहमुपयाति तथापि।।२३७।।

चलत घरै घर घर तऊ घरी न घर ठहरात।
समुझि वही घर कौ चलत भूलि वही घर जात।।२३७।।

दम्पत्योर्लीला हावमाह। पश्येति। सख्याः सखी प्रत्युक्तिबोध्या। राधिका हरिरिवाचरति हरीयति तद्भूषणधारणादिति भावः। हरिरेव निश्चयेन राधा इव-आचरति राधीयति, राधाया भूषणवस्त्रादि-धारणादित्यर्थः। तौ-उभौ विपरीता विपर्यस्ता चासौ रतिस्तद्गतसुखं विपरीतरत्यानन्दं गृह्णीतः गृहीतवन्तौ। एवेत्यवधारणे प्रियस्य वेषालङ्कारादिवानुकरणं लीलेति लक्षणाद् दाम्पत्योस्ततत्तद्वेषा-लङ्कारादिवत्वात्। उभयोरपि लीलाहावविशेषोदाहणमवगन्तव्यम्। साधारणरत्यादौ विपरीतं विनाऽपि विपरीतं रत्यानन्दरूपकार्यसम्भावनादि्वभावनालङ्कारः।।२३६।। विकृतहावमाह। गृहमिति। सा बाला गृहं गृहं विचरति यत्र यत्र प्रियं पश्यति तत्र-तत्र दर्शनार्थमित्यर्थः। पुनः स्वीये गृहे कदापि न रमते तद्वियोगजसन्तापादित्यर्थः तथापि सन्तापाधिक्येऽपि तद्गृहगमनजनितसन्ताप एकः पुनः स्वीयगृहे तन्मिलनावसराभावजनित सन्तापश्च सन्तापाधिक्यमितिभावः। तत् तस्य प्रियस्य गृहं बुध्वा ज्ञात्वा अबुध्वा-अज्ञात्वाऽपि उपयाति गच्छति-इति। तस्याः पूर्वानुरागदशां दृष्ट्वा सख्याः सखीं प्रत्युक्तिर्बोध्या। अत्र स्वीयसन्तापदशायाः सखीष्वप्यकथनाद् विकृताख्यो हावविशेषः। लज्जादिनावचनाकथनं विकृतमि'ति लक्षणात्। यद्वा 'कन्दर्पवेगोत्थ चेष्टितं तपनमि'ति तपनाख्योहाव विशेषो बोधव्यः। चरतिः प्रकृष्टानोमीष्टमुपैति विप्रलम्भोऽसौ तस्यपूर्वानुरागादि भेदचतुर्विध्यात् पूर्वरागाख्यो विप्रलम्भश्रृङ्गारः।।२३७।।

ताम्बूलं प्रददति हरावधरं स्पृशति करेण।
नेति नेति नहि नहि वदति राधामधुरतरेण।।२३८।।

नाह नहीं नाही कि कै नाह निहारे लेइ।
छुवत औठ पिय आँगुरिन विरी वदन प्यौ देइ।।२३८।।

कुहमित हावमाह। ताम्बूल मिति। हरौ कृष्णे करेण स्वीयेनेत्यर्थः। ताम्बूलं प्रददति सति राधायै-इति चतुर्थ्याक्षेपः। तद्व्याजेन तस्या अधरं स्पृशति सति राधामधुरतरेण स्वरेणेत्यर्थः। नेति नेति नहि नहि-इति वदति वारं वारं स्वाधरस्पर्शभयेनेव निषेधाक्षराणि वक्तीत्यर्थः। केशकरग्रहस्तना-धरादिस्पर्शेऽपि निषेधाक्षरोक्तिपूर्वक शिरःकरविधूननादिकुट्टमितमिति लक्षणात्। कुट्टमिताख्यो हावविशेषः। अत्र सख्याः सखीं प्रत्युक्तिः। यद्वा-कवेरुक्तिरवगन्तव्या।।२३८।।

धृततिर्यक्तिलकालका गौरी गर्वयुतैव।
ग्राम्या विहसति विहिंसति नयनशरैरघुनैव।।२३९।।

गदरा नैत न गौरटी अैपन आड तिलार।
हूठौ दै अठिलाइ द्रग करै गभार सुभार।।२३९।।

मदहावमाह। धृतेति। ग्रामेभवा ग्राम्यावधूः गौरी गौरवर्णा तिलकश्चालकश्च तिलकालके धृतेतित्रिर्यञ्चीतितिलकालके यया सा धृततिर्यक्तिलकालका तिर्यक्तिकालकवत्वेन ग्रामवधूटीत्वं विशेषणसार्थक्येन विशेष्यते। अत एव गर्वयुतैव निश्चयेन विहसति अधुना-इदानीमेव नयनशरैः

कटाक्षाशुगैर्मामिति कर्माक्षेपः विहिंसति निहन्तीत्यर्थः। अत्र सखीं प्रतिनायकस्योक्तिरिति नायकस्य पूर्वानुरागवर्णनाद् मदहाव उदाहृतः। सौभाग्ययौवनाद्वलेपतोन्नतिर्मद इति भरतसूत्रे तल्लक्षणात्।।२३९।।

क्षणमपि सोढुं न क्षमं विरहदुःखमधुनैव।
नीराद् दूरकृता यथा सफरी जीवति नैव।।२४०।।

जाति मरी विछुरी घरी जल सफरी की रीति।
छिन छिन होत षरी षरी अरी जरी यह प्रीति।।२४०।।

तपनहावमुदाहरति। क्षणमिति। अधुना इदानीमेव विरहदुःखं प्रियस्येति शेषः। क्षणमपि क्षणमात्रमपि सोढुं न क्षममिति मुहूर्तप्रहरदिवसपक्षमासपर्यन्तं को वा सहिष्यतीति तस्या आशयः। तद्दृष्टान्तेन विवृणोति यथा सफरीमीनजातिः नीराद् दूरं कृता बहिष्कृता नैव जीवतीति जीवनाशक्यत्वं व्यज्यते। अत्र कन्दर्पवेगोत्थचेष्टितं तपनमिति तपनाख्यहावविशेषवर्णनादिति।।२४०।।

युग्मतिथौ सौधाधरी गगने कला विभाति।
पश्य यथैकाऽऽगस्तिकी कलिका विमलतराति।।२४१।।

द्वैज सुधादीधितिकला वह लषि डीठि लगइ।
मनौ अकास अगस्ति की ये कै कली सुहाय।।२४१।।

मौग्ध्यहावमाह। युग्मेति। प्रियं प्रति नायिकाया उक्तिः। युग्मतिथौ द्वितीयायां सुधाधरस्येयं सौधधरीचन्द्रसम्बधिनीकला गगने–आकाशे विभाति–इति त्वं पश्येत्यर्थः। तमपि दृष्टान्ते विवृणेति, यथा–आगस्तिकी अगस्तिकुसुमस्य अतिविमलतरा स्वच्छतरा कलिका विभातीति यथा तथा शब्दाभ्यां तस्योत्पादानाद्दृष्टान्तालङ्कारः। 'स्याद्बिम्भत्वं दृष्टान्तस्तदलङ्कृतिरि'ति लक्षणात्। अज्ञानादिव प्रियाग्रे प्रश्नकरणं मौग्ध्यमिति लक्षणशत् मौग्ध्यसंज्ञको हावविशेषोऽवगन्तव्यः।।२४१।।

प्रिया ह्रिया पुलकिततनुर्नयने नते विधाय।
सा जजम्भ वसनाञ्चलैर्वदनं निजं पिधाय।।२४२।।

सकुचि सरकि प्रिय निकटतै पुलकी कछु तन मोरि।
कर आँचर की ओट करि जमुहानी मुष मोरि।।२४२।।

ताम्बूललाञ्जनबिन्दुभिर्मुखदृग्भालतलेषु ।
लसिताचिक्वणकुन्तला शुशुभे सखीगणेषु।।२४३।।

वैदी भाल तमालमुख सीससिलसिलेवार।
द्रग आजै राजै षरी ये ही सहज सिंगार।।२४३।।

मोट्टाइतहावमाह। प्रियेति। सखीं प्रतिनायकस्य उक्तिः। पुलकिता रोमाञ्चिता तनुर्यस्याः सा

प्रिया ह्रिया लज्जया नयने नते विधाय नीचैः कृत्वा वसनाञ्चलैर्निजैर्वदनं मुखं पिधाय आच्छाद्य जजम्भ गात्र विनामं चकारेत्यन्वयः। एतेन–'आदौ वाच्यस्त्रियोरागः पश्चात्पुंसस्तदिङ्गितैः। नीलीकुसुममञ्जिष्ठा पूर्वरागो भवेत् त्रिधे'ति लक्षणात्। नायकस्य पूर्वरागो व्यज्यते। प्रियकथादिषु हर्षादिना कर्णकण्डूयनादिकं मोट्टायितमिति लक्षणात्। मोट्टायितहावविशेषो ज्ञातव्यः। आदिपदोपादानाद् जृम्भाऽप्यवगन्तव्येति लक्षणानुगतिः।।२४२।। विच्छित्तिहावमाह। ताम्बूलेति। सा चिक्वणकुन्तला सस्निग्धकेशा ताम्बूलेन–अञ्जनेन विन्दुना च मुखे दृशि भालतले च लसिता सती सखी गणेषु शुशुभे शोभिताऽऽसीदितित्यर्थः। अत्र ताम्बूलादीनां मुखादिषु यथाक्रमेणान्वयात् यथासङ्ख्यालङ्कारः। किञ्च स्तोकं भूषणधारणेन कान्तिपोषणकारिणी विच्छित्तिरितिलक्षणात् विच्छित्तिसंज्ञको हावविशेषो बोध्यः। 'भूषणेन विनाऽपि स्यादरूपकन्दर्पदर्पतः। सर्वाङ्गसौष्ठवे सास्यात्कान्तिरानन्ददायिनीति सप्तायत्नजभावेषु कान्तिलक्षणानुगतिः। यथाह भरतः 'शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता। औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजा।' इति।।२४३।।

प्रणतिसहस्त्रैर्विधिशैतैरनुनीतोऽपि न याति।
मानोऽयं मानिनि तनौ रूपे तनौ न माति।।२४४।।

विधि विधि क्यौ न करै टरै नहीं परैहू पानि।
चितै कितै तैलै धरौ इतौ इतै तन मान।।२४४।।

विम्बोक हावमाह। प्रणतीति। हेमानिनि! इति सख्या उक्तिः। अयं ते मानः प्रणतीनां सहस्त्रैः विधीनां शरैरपि–अनुनीतः कथमपि न याति न गच्छति तव तनौ सूक्ष्मे तनौ देहे न याति। अत्र सहस्त्रशतशब्दावपरिच्छिन्नसङ्ख्यावाचकौ मानस्याधिक्यद्योतनाय तनोः सूक्ष्मत्वं वर्णितम्। अत्र–अतिप्रियतमस्य नायकस्यानेकविधानुनयेऽपि मानमुक्तिर्नास्तीति तस्यानादरो गम्यते। तेन–इष्टवस्तुन्यतिर्गविणानादरो विम्बोकाख्यो हावविशेषोऽवगन्तव्यः।।२४४।।

हरौ पीतवचनासवे वेणुं प्रिया जहार।
देहीत्युक्ते जहास सा दास्ये नेति ववार।।२४५।।

वतरस लालच लाल की मुरली धरी लुकाय।
सोह करै भौंहन हसै दैन कहै नटि जाइ।।२४५।।

हरेरियं गुडिका नभोगताङ्गना विजहास।
निजाङ्गणे तदनातपं धावन्ती विललास।।२४६।।

उड़ी उड़ी लषि लाल की अँगना अँगना माह।
बौरी लौ दौरी फिरै छुवत छबीली छाह।।२४६।।

विलासहावमाह। हराविति। वचनान्येववासवनि इति वचनासवानि। अत्र वचनानां मादक

धर्मवत्यादासवोपमानमवगन्तव्यम्। पीतानि सादरं श्रुतानि वचनासवानिभे सः पीतवचनासवः तस्मिन् हरौ कृष्णे पीतवचनासवे सति प्रिया राधिका वेणुं जहार। पुनस्तेन कृष्णेन देहीत्युक्ते जहास दास्ये ददामीत्युवाच पुनर्नेति ना दास्ये-इत्युक्त्वा सा वेणुं ववार-अच्छादितवती, अत्र वेणुगोपनादि चातुर्यप्रकाशनेन पुनर्ददामि न ददामि-इति वचनवैक्षण्यादि परिहासेन मुखनेत्रयोश्च विशेषावस्थान्तरदर्शनेन विलासहावोऽवगन्तव्यः। तल्लक्षणं तु प्रतिबिम्बे मानस्थानासनादीनां मुखनेत्रयोश्च विशेषावस्थान्तरं विलास इति दिक्।।२४५।। विक्षेपहावमाह। हरेरिति। इयं गुडिका गुडति रक्षां करोति जनो यस्या इति तौदादिकगुडरक्षायानित्यस्य रूपमिदम्। हरेः कृष्णस्येति नभोगता आकाशचारिणीपतङ्ग इति भाषायां प्रसिद्धाज्ञात्वेति शेषः अङ्गना विशेषेण जहास हसितवती तद्दर्शनानन्दादितिभावः। पुनर्निजाङ्गणे स्वकीयचत्वरे तस्या अपातपं छायां प्रति धावन्ती सती वललास विलसितवतीत्यन्वयः। तत्पर्शविनोदेन नायककरस्थाया गुडिका तस्याः छायेयमिति हेतोर्हर्षाधिक्यमवगन्तव्यम्। अत्र भूषाढेरसाकल्यं वृथाक्षेक्षणं किं चिद्रहस्यकथनं च विक्षेप इति विक्षेपहावस्यापि त्रैविध्य प्रतिपादनात्-अत्र च वृथावेक्षणरूप लक्षणेन लक्षणानुगतिः।।२४६।।

दृष्ट्वा गुरुजनसदसि हरिरब्जं शिरसि बभार।
साऽपि तदुन्मुखदर्पणं कृत्वा हृदि विदधार।।२४७।।

लषि गुरुजन बिच कमल सौ सीस छुआयौ स्याम।
हरिसन्मुख करि आरसी हियै लगाई बाम।।२४७।।

।। इति शृङ्गारसप्तशतिकायां हावविशेषोदाहरणानि ।।

बोधक हावमाह। दृष्ट्वेति। हरिः कृष्णः गुरुजनानां सदसि दृष्ट्वा तामिति शेषः। शिरसि-अब्जं कमलं बभार धृतवान् एतेन नायकस्य क्रियाचतुर्यं द्योत्यते। किञ्जाब्जस्य शिरोधारणक्रियया त्वं कमलेव मत्प्रियाऽसीति बोध्यते कमलस्य लक्ष्मीनिवासस्थानत्वादितिभावः। यद्वागुरुसदसि प्रकाशप्रणामस्यानवकाशादब्जशिरोधारणक्रिययैव प्रणत्यनुकरणमित्यर्थः। यद्वापद्मधारणक्रियया प्रातर्मिलनावसरोद्येत्यते। कमलस्य रात्रौ मुद्रितधर्मवत्वात् साऽपि राधिकापि तदुन्मुखदर्पणं कृत्वा हृदि विशेषेण दधार धृतवती। एतेन त्वत्प्रतिबिम्बं हृदयेऽहं धारयामीति प्रेष्ठतरत्वमुपपाद्य बोध्यते। यद्वा प्रणत्यनुकरणं त्वयाकृतं तन्मनसैव मया गृहीतमिति हृदिदर्पणधारणक्रियया सूच्यते। यद्वाऽन्यत्प्रातर्मिलनावकाश उक्तः एव मया स्वीकृत इति दर्पणधारण क्रियया-उच्यते-इत्यर्थः। अत्राष्टादशहावातिरिक्तबोधकहावलक्षणं तु बुध्यते ज्ञायतेऽन्तर्गतमननेति बोधक इति नाम्नैव व्याख्यातव्यं परस्पर स्वाभिप्रायबोधनार्थक्रियावैचित्र्यादुभयोरपि क्रियावैदग्धमिति दिक्।।२४७।।

मा कुरु मुग्धे निजदृशोर्विश्वासं त्वमथापि।
दत्वानन्दं प्रागलं हृद्दहनाय तथापि।।२४८।।

मैं तोसौ कै वार कहि तू जनि इन्है पत्याइ।
लग लगी करि लोयननि उर लै लाइ लगाइ।।२४८।।

बाले! मम वचनानि किं निजबुद्ध्या न दधासि।
गत्या प्रीतिपथे मनः परहस्तेऽनुददासि।।२४९।।

मनन धरति मेरौ कहौ तू आपने सयान।
अहे परनि परि प्रेम की पर हथ पारिन पान।।२४९।।

अथ शिक्षा। मा कुरु–इति। हे मुग्धे–इति सख्या उक्तिः। निजदृशोः नयनयोः अथापि तत्कृतसन्तापं दृष्ट्वाऽपि विश्वासं मा कुरु इति, एतयोर्विश्वासे मा भूः। प्राक्पूर्वमानन्दं नयनसुखं दत्वा तथापि हृदयदहनाय हृत्तसन्तापाय–अलं समर्थौ जातौ–इति अन्वयः। अत्र परिहास शिक्षोपालम्भविरहनिर्वेदनादीनि सख्याः कर्मोदाहरणम्। अत्रान्तरङ्गा सखी अन्तर्गतं जानन्ती मा विष्कुरु–इत्यादिना परपुरुषानुरागो दुःखद इति हेतोर्नययनविश्वासं मा कुरु इति शिक्षयति।।२४८।। पुनर्यथा। बाले ! इति सख्या उक्तिः। मम वचनानि शिक्षारूपाणि निजबुद्धया किं किमर्थं न दधासि धारयसि। यद्वा किं न दधासीति काकूक्त्या धारयेत्यर्थः। प्रीतिपथे प्रीतिमार्गे गत्वा–अनु पश्चान्मनः स्वीयमित्यर्थः परहस्तेऽन्य हस्ते ददासीत्यर्थः। प्रीतिमार्गस्य अयमेव धर्मः स्वीयं मनः परकीयं भवतीति विभावः। अत्रापि शिक्षोदाहरणं बोध्यम्।।२४९।।

चन्द्रं द्रष्टुं चन्द्रमुखि प्रासादे चल नैव।
सर्वा दास्यन्त्यर्घ्यमिह चन्द्रोदयं विनैव।।२५०।।

तू रहि हौ ही ससि लषौ चढ़िन अटावलि बाल।
सबहिन विनही ससि लषैं देहैं अरघ अकाल।।२५०।।

दन्तमर्घ्यमधुनाऽबलेऽघः प्रयाहि विलसन्तु।
अन्या अपि निःशङ्कमिति तुहिनकरं पश्यन्तु।।२५१।।

दियौ अरध नीचै चलौ सङ्कटमान उजाइ।
सुचिती है औरे सबै ससिहि बिलोकै आइ।।२५१।।

पुनर्यथा। चन्द्रमिति। हे चन्द्रमुखि ! चन्द्रं द्रष्टुं चन्द्रदर्शनार्थम्–उदितो वानेति दर्शनार्थ प्रासादे नैव चल मा गच्छ–इत्यन्वयः। इह विनैव चन्द्रोदयं सर्वा इतरा अर्घ्यं दास्यन्तीति इदानीं तव मुखप्रकाशिदिगवलोकनान्निश्चयो भविष्यतीति भावः। पुनश्चन्द्रोदये जाते व्रतभङ्गो जात इत्यर्घ्यकालाभावप्रतीत्या त्वन्मुखचन्द्रिकायां सर्वसां चन्द्रिकाभ्रमो भविष्यति। इति महानर्थाः। तस्मात्त्वं चन्द्रोदयनिश्चयार्थं मा गच्छ–इति शिक्षा व्याजेन सर्वासु तस्याः चन्द्रमुखीत्व प्रतिपादनमिति।।२५०।।

पुनर्यथा दत्तमर्घ्यमिति। हे अबले ! अधुना इदानीम् अर्घ्यं दत्तमितिहेतोस्त्वमधः प्रयाहि,एतेन–

अर्घ्यदानाय प्रसादे गता–इति प्रतीयते, अन्या अपि निश्शङ्कं यथा भवति तथा विलसन्तु, तुहिनकरं चन्द्रं निश्शङ्कं पश्यन्तु एतेन त्वन्मुखचन्द्रोदये चन्द्रोदये च जाते चन्द्रोदये शङ्केति निशङ्कपदाभिप्रायः। तेन त्वं चन्द्रवदनासीति तस्या आशयः।।२५१।।

लालने! लालितलोचने लोचय हरिमधुनैव।
भुवि शेते स्त्रंसितवसनमुकुटलकुटकलयैव।।२५२।।

कहा लड़ै ते द्रग करे परे लाल वेहाल।
कहु मुरली कहु पीत पट कहू लकुट वनमाल।।२५२।।

कुसुमसदृशकोमलतनुं मदयसि निर्दयमेव।
उरःस्फुरति धृत्वा करं पश्याधुना तदेव।।२५३।।

यौं दल मलियतु निरदई दई कुसुम से गात।
कर धर देषौ धर धरा उर कौ अजौ न जात।।२५३।।

अथ नायिकां प्रति नायकानुगसखीवाक्यं शिक्षारूपेणोदाह्रियते। ललने–इति। ललिते लोचने यया–इति तत्सम्बुद्धौ–अधुना–इदानीमेव त्वल्लोचनयुगलविलोकनावसरे–इत्यर्थः। हरिं कृष्णं लोचय पश्येति। तदुपालम्भमिच्छन्ती वदतीति तदाशयः। वसनं च मुकुटं च लकुटं च तेषां समाहारोवसनमुकुटलकुटानि स्त्रंसिता शिथिलीभूता वसनमुकुटलकुटानां या कला तयैव हेतुभूतया भुवि शेते तत्त्वं पश्येत्यर्थः।।२५२।।

अथ नायिकानुगाया सख्या नायकं प्रत्युक्तिमाह (कुसुमेति) कुसुमसदृशी कुसुमतुल्या कोमला सुकुमारतनु।।२५२।। सा तां पुष्पसुकुमारतनुलितकामित्यर्थः। निर्दयं दयारहितमेव यथाभवति तथात्वं मर्दयसि। अधुना–इदानीमेव उरःतस्या इति शेषः स्फुरति तत् तस्मात् करं धृत्वा उरसीति तात्पर्यः। पश्य मयोक्तं सत्यं मिथ्या वेति सखी तदुपालम्भमिच्छन्ती नायकं प्रत्याह। पर्यायोक्तमलङ्कारः।।२५३।।

दृङ्मिलनं बहुदीप्तिदं कृतमिति मया मुदापि।
कर्करायते तस्य दृक् सा मम दृश्यधुनाऽपि।।२५४।।

मैं जानौ इन लोइनमि मिलै बाढि है जोति।
को जानै यह डीठि कौ डीडि किरकिरी होति।।२५४।।

यतः प्रभृति हरितनुसरसि कृतमज्जनमिदमेव।
नयनयुगं जलयन्त्रगतघटीयते तत एव।।२५५।।

हरि छवि जल जब तै परे तब तौ छिन विधुरैन।
भरत धरत बूड़त तरत रहटघरी लौ नैन।।२५५।।

पूर्वानुरागमाह। दृगिति। सखीं प्रति नायिकाया उक्तिः। दृशोर्मिलनं दृङ्मिलनं बहुदीप्तिदं प्रकाशबाहुल्यप्रदं भवतीति मत्वा मुदा, आनन्देनापि मया कृतम्। सा तस्य नायकस्य दृक् दृष्टिः ममदृशि मन्नेत्रे अधुनाऽपि इदानीमपि कर्करायते कर्कइवाचरतीत्यन्वयः। अत्र पूर्वानुरागाख्यो विप्रलम्भशृङ्गारः। तल्लक्षणन्तु–'श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः। दशाविशेषः प्राप्तौ यः पूर्वरागः स उच्यते।। इति। किञ्च। अनिष्टस्याप्यवाप्तिश्चतदिष्टार्थसमुद्यमादितिलक्षणात् तृतीयोऽयं विषमालङ्कारः।।२५४।।

पुनर्यथा। यत इति नायिकायाः सखीं प्रत्युक्तिः। इदमेव नयनयुगं नेत्रयुगं यतः प्रभृति यत आरभ्य हरेः कृष्णस्य तनुरेव सरः तस्मिन् कृतं मज्जनं येन तत एवारभ्य जलयन्त्रगताया घटी तदाचारं कुरुते। अत्रोपमानादाचार इति यक्। यथा जलयन्त्रगताघटी तथा जातमित्यर्थः। एतेन नायिकायाः पूर्वानुरागो व्यज्यते। तल्लक्षणन्तुपूर्वोक्तमेव बोध्यम्। अत्र हरितनुसरसोरूपमानोपमेययोर्नेत्र-युगलजलयन्त्रगतघटी–रूपोपमेययोपभानयोश्चाभेद सम्बन्धेन रञ्जनात् समाभेदरूपकालङ्कारः।।२५५।।

महाविषमसञ्चाणिो लोचनशरा भवन्ति।
एकेनैकहतेऽपि यद्द्वयोर्मनो निन्दन्ति।।२५६।।

अलि इन लोइन सरनिकौ षरौ विषम संचार।
लगै लगायै एकहू दोहुन करत सुभार।।२५६।।

निस्नेहं नयनद्वयं नेदं सखि विपदेव।
अहर्निशं पयसायुतं तदपि पिपासितमेव।।२५७।।

नेह न नैनन को कछू उपजी विरह बलाइ।
नीर भरे नित प्रति रहत तऊ न प्यास बुझाइ।।२५७।।

पुनर्यथा नायिकाया नायकस्य वा सखीं प्रत्युक्तिः। महान्ति लोचनानि–एव शराः वाणाः सखीति सम्बुद्ध्यानुकर्षः। महाविषमसञ्चारिणो भवन्ति–इति–उपमातोऽप्यस्य वैचित्र्यं दर्शितम्। विषमसञ्चारित्वमेवाह। यद्यस्माद् एकेन नयनशरेणैकस्मिन् हते सति द्वयोर्मनो निन्दन्ति शरास्तु–एकेन हता एकं निन्दन्ति–एतेन द्वयोर्मनो निन्दन्तीति विशेषप्रतिपादनात् व्यतिरेकालङ्कारः। अत्रापि पूर्वानुरागलक्षणं पूर्वोक्तमवगन्तव्यम्।।२५६।।

पुनर्यथा। निस्नेहमिति। नायिकाया सखीं प्रत्युक्तिः। हे सखि! इदं मदीयं नयनद्वयं निस्नेहं निर्दयं जातम् इत्यर्थः। तस्मादिदं नयनद्वयं न किन्तु विपदेव विपद्रूपेण वर्तत इत्यर्थः। तदेव विवृणेति। अहश्च निशा च–अहर्निशं दिवारात्रौ पयसायुतं जलपूर्णं विभाति तथापि पिपासितमेव–इति तद्रूपकान्तिमृगतृष्णया पिपासितमिव जातमित्यर्थः। अत्र कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणेति

लक्षणात्। अहर्निशजलपूर्वनेत्रयुगस्य पिपासासित्वमिति तृट्शान्तिरूपकार्यजनिरुक्तेति लक्षणानुगतिः। अत्रापि पूर्वानुरागलक्षणं पूर्वोपात्तमवगन्तव्यम्।।२५७।।

हरिदृग्भ्यां लोचनयुगं मिलितं प्रीतितयाऽति।
विक्रीताऽहमनेन वै मध्ये लुब्धतयाऽपि।।२५८।।

लोभ लगे हरिरूप के करी साँट जुरि जाय।
हौइन बेंची बीच ही लोयन बुरी चलाय।।२५८।।

नयनयुगं बहुशिक्षितं मयोदितं न करोति।
तनुदत्तं दत्तं मनो हासं तदपि तनोति।।२५९।।

नैना नैकु न मान ही कितौ कह्यो समुझाइ।
तन मन हारै हू हसै तासौं कहाँ वसाइ।।२५९।।

पुनर्यथा। हरिदृग्भ्यामिति। सखीं प्रति नायिकाया उक्तिः। हे सखीति सम्बुद्ध्यनुकर्षः। लोचनयुगं मदीयमित्यर्थः। हरिदृग्भ्यामति प्रीततयातिशयस्नेहेन मिलितमासीत् तदा अनेन नेत्र युगेन मध्ये मिलनावसरे मध्यमकालेऽतिलुब्धतया हेतुभूतया वै निश्चयेन-अहं विक्रीताऽस्मि-इत्यन्वयः। एतेन हरिनेत्रयुगेन मम नेत्रयुगं यदा मिलितं तदा तद्वश्यत्वं मया प्राप्तमिति फलितोऽर्थः। पर्यायोक्तं तु गम्यस्य वचोभङ्गन्तराश्रयमितिलक्षणात् । पर्यायोक्तमलङ्कारः। अहं तद्वशीभूता जाताऽस्मीत्यर्थे गम्यमाने-अनेन नेत्रयुगेन मिलनावसरे-अहं विक्रीतास्मीति भङ्ग्यन्तरापादनेन लक्षणानुगतिरिति दिक्। अत्राऽपि पूर्वानुरागलक्षणं पूर्ववत्।।२५८।।

पुनर्यथा। नयनयुगमिति। हे सखि! इति सम्बुद्ध्यनुकर्षः। नयनयुगं नेत्रयुगमदीयमित्यर्थः। मया बहुशिक्षितं सत् मयोदितं न करोति। अस्मै मया तनु शरीरं दत्तं तदधीनकृतमित्यर्थः। पुनर्मनोऽपि दत्तं तत्स्वाधीनतया मनोवृत्तिरपि कृता तदपि तथापि हासं तनोति हास्यशीलमित्यर्थः। अतः अनेन नयनयुगे नाहं पराजितास्मीतिभावः अत्रापि पूर्वानुरागः पूर्ववदवगन्तव्यः।।२५९।।

येन यदा यस्मिन् यथा गता ततस्तेनैति।
नदीनयनधाराऽधुना सा विश्रामं नैति।।२६०।।

ढरे ढारते ही ढरत दूजी ढार ढरै न।
कैहू आनन आन सौ नैना लागत है न।।२६०।।

नयन कमलमिति यन्मुधा नयनोपलमिदमेव।
अनयोरपि योगे विरहदहनं भवति यदेव।।२६१।।

सबै कहत कवि कमल से मो मत नैन पषान।
न तरक कत इन विय लगत उपजत विरह कृसान।।२६१।।

पुनर्यथा। येनेति। सखीं प्रति नायिकाया उक्तिः। हे सखि! इति सम्बुद्ध्यनुकर्षः। नदीव नयनधारा यथा येन मार्गेण यस्मिन् स्थाने यथायेन प्रकारेण गता तथा तेनैव पथा एति गच्छति। अधुना तद्विरहावसरे सा विश्रामं नैति न गच्छतीत्यन्वयः। एतेन मिलने-आनन्दाश्रुधाराविरहे सन्तापाश्रुधारा विश्रामं नैति न गच्छति-इत्यन्वयः। एतेन मिलने आनन्दाश्रुधारा विरहे सन्तापाश्रुधारा विश्रामं नैतीति नदीरूपोपमानस्य नयनधारारूपामेयस्याभेदसम्बन्धेनानुरञ्जनादविश्रान्तरूपधर्मवत्तया समाभेदरूपकालङ्कारः।।२६०।।

पुनर्यथा। नयनेति। नयनं कमलमिवेति यत्कविभिरुक्तं तन्मुधा। मिथ्या-इदं नयनमुपलमेव यद्यस्मादेव-अनयोर्नेत्रयोः संयोगे विरह एव दहनं तद्भवति। यथोपलयोः संयोगे दहनोत्पत्तिस्तथा नयनयोर्योगेऽपि विरहाग्निरुत्पद्यते-इति फलितोऽर्थः। अत्र नेत्रयोः कमलोपमानत्वमपह्नुत्योपलब्धधर्मवत्व प्रतिपादनात् शुद्धापह्नुतिरलङ्कारः। 'शुद्धापह्नुतिरनन्यस्यारोपार्थो धर्मनिह्नव इति लक्षणात्। पूर्वानुरागलक्षणं तु पूर्वोक्तमवगन्तव्यम्।।२६१।।

सखि! मोहनमोहाय मे कज्जलसज्जितमेव।
मोहमन्त्रमिव दृग्युगं मां मोहयति तदेव।।२६२।।

साजे मोहन मोह कौ मोही करत कुचैन।
कहा करौ उलटे परत टौने लौने नैन।।२६२।।

तदनुगामि लोचनयुगं मोहं त्यजति ममापि।
छविगुडमिव दत्वा क्षणं छलिनाऽहं छलिताऽपि।।२६३।।

मोहू सौ तजि मोह दृग् चले लागि वह गैल।
छिनक छाइ छवि गुड़हरी छली छबीलौ छैल।।२६३।।

पुनर्यथा सखीति। हे सखि! इदं दृग्युगं मोहनस्य कृष्णस्य मोहाय मोहनाय-एव निश्चयेन कज्जलेन सज्जितमासीत्। तद् दृग्युगं मोहमन्त्रमिव तदेवमासां मोहयति वैचित्यं करोति वैचित्यं जातमित्यद्भुतम्। अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमादिति लक्षणात्तृतीयविषमालङ्कार इति। पूर्वानुरागगस्तु पूर्वोक्तएवेति दिक्।।२६२।।

पुनर्यथा। तदनुगामीति। लोचनयुगमिदं मदीयं नेत्रयुगं तदनुगामि सति ममापि मोहं त्यजति। न युगं इदं मदीयं नेत्रयुगं तदनुगामिता ममापि मोहं त्यजति निस्नेहं जातमित्यर्थः। छविरेव गुडं मधुरतरत्वादितिभावः। छविगुडमिव क्षणं दत्वा अपि पुनः छछिना अहं छलितेत्यर्थः। अत्र सखीं प्रति नायिकाया उक्तिः परकीयायाः पूर्वानुरागदशेयम्।।२६३।।

पीतमशेषं रूपमपि मन्दस्मितं तथापि।
वाञ्छति नोज्झति दृग्युगलमतिदीनत्वमथापि।।२६४।।

नष सिष रूप भरे षरे तौ मागत मुसक्यान।
तज तन लोचन लालची यह ललचौ ही यान।।२६४।।

पुनर्यथा पीतमित। अशेषं सम्पूर्णं येन दृग्युगेन पीतं सादरमवलोकितं तथापि मन्दं स्मितं तस्येति शेषः वाञ्छति। अथापि मन्दस्मितविलोकनान्तरमपि अति दीनत्वं नोज्झति न त्यजति। पुनः पुनस्तदेव याचत इत्यर्थः। एतेन नायकस्य स्वरूपसौन्दर्यमन्दस्मितमाधुर्यादिप्रत्यहं विलोकितोऽपि न मदीयदृशोः कदाचिदलं प्रत्यय इति तदीयसौन्दर्यमाधुर्यादिगुणैरहं वश्यास्मीति व्यज्यते। तेनात्र पूर्वानुरागे गुणकथनाख्या स्मरदशा। सखीं प्रति नायिकाया उक्तिः।।२६४।।

पश्यति कीर्तिमकीर्तिमपि नहि दृग्युगमिदमेव।
पश्यति कमनीयं सदा श्यामं वरं तदेव।।२६५।।

जस अपजस देखत नहीं देषत सावल गात।
कहा करौ लालच भरे चपल नैन चलि जात।।२६५।।

लज्जाकर्षणरश्मिभिः कृष्टं चपलमुपैति।
हरियुगमिव लोचनयुगं कथमपि वश्यं नैति।।२६६।।

लाजलगाम न मान ही नैना मो वस नाहिं।
ये मुख जोर तुरङ्ग लौ षीचत ही चलि जाहिं।।२६६।।

पुनर्यथा। पश्यतीति। इदमेव मदीयं दृग्युगं कीर्तिर्भविष्यति–इति कीर्तिमकीर्तिमपि नहि पश्यति किन्तु तमेव कमनीयं कान्ततरं श्यामं वरं श्रेष्ठं पश्यतीत्यनेन तद्दर्शनेन लोकलज्जाऽपि मया परित्यक्ता–इति तस्या आशयः। एतेन पूर्वानुरागे दशकामदशा भवन्ति तासां मध्ये उन्माददशेयमिति बोध्यम्।।२६५।।

पुनर्यथा। लज्जेति। इदं मदीयं लोचनयुगं हरियुगमिव–अश्वयुगमिव। लज्जा–एव–आकर्षण रश्मयास्ताभिः कृष्टमपि चपलं यथा भवति तथा उपैति गच्छति। यथा रश्मिभिराकृष्टमश्वयुगं चपलं भवति कथमपि केनापि प्रकारेण वश्यं नैति न भवति–इत्यर्थः। एतेनाश्वयुगोपमानस्य नेत्रयुगोपमेयस्य च लज्जारूपाकर्षणरश्मिकर्षणेनातिचापल्यरूप साधारणधर्मवत्तया–इवेत्युपमावाचकेन च सहोपादानत् पूर्णोपमाऽलङ्कारः।।२६६।।

सख्यनयोरति दीनयोर्दुखं दृशोरिहास्ति।
पश्यन्तौ न वितृप्यतो ना पश्यतोः सुखमस्ति।।२६७।।

इन दुखिया अँखियान कौ सुख सिर जोई नाहि।
देषै बनै न देषतै बिन देषै अकुलाहि।।२६७।।

किमद्भुतं जातं व्रजे विरहानलच्छलेन।
हृदिलग्ने नयनद्वयं गच्छति तदनुबलेन।।२६८।।

को जाने ह्वै है कहा जा उपजी अति आग।
मन लागै नैना लगै चलै नैन सँग लागि।।२६८।।

पुनर्यथा। सखीति। हे सखि! अनयोर्मदीयदृशोः नेत्रयोः अतिदीनयोरिहास्मिन् जगति दुःखमस्ति तदेव प्रतिपादयति। तं पश्यन्तौ न वितृप्यतः। तमपश्यतोरपि सुखं नास्तीत्यर्थः। एतेन पूर्वनेत्रयोरतिदीनत्व वर्णन व्याजेन दुःखस्यनैरन्तर्यं प्रतिपादनात्। दशकामदशासु-उद्वेगदशेयं व्यज्यमाना भवति।।२६७।।

पुनर्यथा। किमद्भुतमिति। हे सखीति सम्बुद्ध्यानुकर्ष;। व्रजे विरहानलव्याजेन विराहाग्निमिषेण किमद्भुतं जातम् अद्भुतत्वमेव प्रतिपादयति। हृदि विरहाग्नौ लग्ने सति तदनु तत्पश्चात् बलेन नेत्रयोर्द्वयं गच्छतीति। सन्निकृष्टकण्ठवदननासिकादिपरित्यक्तनेत्रद्वयं गच्छति-इति अद्भुतत्वम्। अग्निस्तुसन्निकृष्ट-तृणादिदाहशीलो भवति। अयन्तु न तथेति विरहाग्नेरन्यस्मादग्नेर्विशेषप्रतिपादनाद् व्यतिरेको विशेषश्चेदुय-मानोपमेययेरिति लक्षणाद् व्यतिरेकालङ्कारः।।२६८।।

दृष्ट्वा युवतिगणं हरिर्मन्दस्मितं विधाय।
स्वीयदृशावनितानयनखञ्जनगणं निनाय।।२६९।।

वनितन कौ निकसत लसत हसत हसत इत आइ।
द्रग षञ्जन गहि लै गयौ चितवत चौप लगाइ।।२६९।।

मिलति दृशोरिह दृग्युगं सहचरिकुलं जहाति।
ग्रन्थिर्दुर्जनमानसे प्रीतिरद्भुता भाति।।२७०।।

द्रग उरझत टूटत कुटुम जुरत चतुर चित प्रीति।
परत गाठ दुर्जन हियै दई नई यह रीति।।२७०।।

पुनर्यथा दृष्ट्वेति। हे सखीति सम्बुद्ध्यनुकर्षः। हरिः कृष्णः हरतीति हरिरिति। हरणकर्मणि साभिप्रायं विशेष्यपदम्। युवतीनां गणं दृष्ट्वा युवतिगणे दृग्ज्जालं निपात्य पुनर्मन्दस्मितं विधाय कृत्वा स्वीयदृशा करणभूतया वनितानां नयनान्येव खञ्जनानि तेषां गणं निनाय नीतवान्। एतेन यदा प्रभृति तेन दृष्टा तदा प्रभृति सर्वासामस्माकं नयनानि तदनुगतानि जातानि-इति भावः। एतेन तत्सौन्दर्यविहसितमाधुर्याधिक्य व्याजेन गुणकथनरूपास्मरदशा बोधव्या।।२६९।।

पुनर्यथा मिलतीति। हे सहचरि! प्रीतिस्तु-अद्भुताऽभाति अद्भुतत्त्वेन शोभते। तदेव प्रतिपादयति।

दृशोर्नयनयोर्दृग्युगं नायकस्येति शेषः। मिलति। तदा इह प्रीतौ जातायां कुलं कुटुम्बं मां जहाति त्यजति। किं च दुर्जनानां मानसे ग्रन्थिर्भवति। कठिनत्वं भवति। इदमेवद्भुतत्वमिति भावः। अत्र दृशोर्दृङ्मिलने कुलजानां न कश्चिदपराधः। ततोऽपि भिन्नत्वं जातमित्यर्थः। पुनर्येषां भिन्नत्वं तत्रैव ग्रन्थिर्भवतु ग्रन्थिस्तु दुर्जनमानसे भवति इति। अत्र कार्यहेत्वोर्विरुद्धभिन्नदेशत्वप्रतिपादनाद्-असङ्गतिरलङ्कारः।।२७०।।

प्रीतिपथं नूतनतमं दृष्ट्वाऽहं चकिताति।
दृशि दृष्ट्वा लगिते तनौ दौर्बल्यं प्रतिभाति।।२७१।।

हौ हिय रहत हई छई नई जुगति जिय जोइ।
डीठिहि डीठि लगै दई देह दूबरी होइ।।२७१।।

नवं प्रीतिपत्तनमिदं निर्णीतिः प्रतिभाति।
यत्र दृगपराधे मुधा मनोबन्धनं याति।।२७२।।

क्यौ वसियेक्यो निवहियै नेह नीति पुरनाहि।
लगा लगी लोचन करैं नाहक मन बँधि जाइ।।२७२।।

विदग्धोऽपि यदपाङ्गतः सखिमुगधत्वमुपैति।
लुब्ध दृगवलोके जनः को लुब्धत्वं नैति।।२७३।।

जत सयान अयान ह्वै वे ठग काहि ठगै न।
को ललचाइन लालची लषि ललचौहैं नैन।।२७३।।

पुनर्यथा। प्रीतिपथमिति। हे सखीति समद्धयनुकर्षः। नायिकाया उक्तिः। प्रीतेः पन्थाः प्रीतिपथः प्रीतिमार्गः तं नूतनतमं नवीनतरं दृष्ट्वा-अहं अतिचकिताऽस्मि दृशि दृष्टौ नायकस्येति शेषः। दृष्ट्या लगिते सति तनौ देहे दौर्बल्यं प्रतिभातीति। अत्र दृष्ट्योर्लग्नत्वे तत्रैव दौर्बल्यं तु तनौ देहे विभातीति कार्यहेतोर्विरुद्धभिन्नदेशत्वं प्रतिपादनात् अससङ्गतिरलङ्कारः ।।२७१।। पुनर्यथा नवमिति। प्रीतेः पत्तनं नगरं यद्वा प्रीतिरेवपत्तनं नगरं नवनवमिव प्रतिभाति कीदृशं प्रीतिपत्तनं निर्णीति निर्गतानीतिर्विवेकादिरूपा यस्मादिति। तदेवाह-यत्र प्रीतिपत्तने दृगपराधे दृशोरपराधे सति मुधा-अपराधराहित्योऽपि बन्धनं याति गच्छति-इति, अत्रापि कार्यहेतोर्भिन्नदेशत्वापादनादससङ्गतिरलङ्कारः। विरुद्धं भिन्नदेशत्वं कार्यहेतोरसङ्गतिरिति लक्षणात्।।२७२।। पुनर्यथा। विदग्धोपीति। हे सखि! यस्यापाङ्गतो नेत्रप्रान्ततः किञ्चिन्नेत्रविलोकनेनेत्यर्थः। विदग्धोऽपि जनः चतुरोऽपि जनो मुग्धत्वं मूढभावमुपैति गच्छति। पुनरपि लोकदृष्टान्तेन तद्धेतुं वदन्ती प्राह-लुब्धा चासौ दृग् लब्धदृक् तद्वलोके सति। कः जनो लुब्धत्वं नैति न गच्छति। अपि च सर्वोऽपिजनो लुब्धत्वमुपैतीत्यन्वयः। अत्र लुब्धसङ्गाल्लुब्धत्वप्राप्तेर्न किञ्चिदसामञ्जस्यमिति फलितोऽर्थः। एतेन लुब्धतरतन्नयनावलोके मन्नेत्रमपि

तत्स्वभावमनुसरतीति व्यज्यते। तेन पूर्वानुरागे स्मृतिरूपा स्मरणदशा बोधव्या। अत्र यदान्य गुणदोषाभ्या-मुल्लासोऽन्यस्यतौ यदीति लक्षणादुल्लासालङ्कारः। लुब्धतरनेत्रा-वलोकदोषेण मन्नेत्रयोरपि लुब्धस्वरूपदोषप्राप्तिरितिलक्षणानुगतिः।।२७३।।

**न निद्रासि न विभेषि सखि नापैति च समयेन।**
**तद्रूपासवमदोऽहो अहोरात्र मदनेन।।२७४।।**

**डरन डरै नींद न परैं हरैं न काल विपाक।**
**दिन छनदा छाकी रहत छुटत न छिन छवि छाक।।२७४।।**

पुनर्यथा। नेति नायिकां प्रति सख्या उक्ति र्बोध्या। हे सखि! इति तस्या एव सम्बुद्धिः। त्वं न निद्रासि। न कथमपि बिभेषि तस्य रूपमेवासवं मादकं वस्तु तस्य यो मदः-तज्जनितवैचित्यादित्यन्वयः। अहो! इत्याश्चर्ये अहोरात्रमदनेन हेतुना समयेन कालेन नापैति नापगच्छतीत्यन्वयः। एतेन त्वं तद्रूपासवमदेन-अहोरात्रं मत्तासीति विज्ञायते तेन पूर्वानुरागे-उन्माददशेयं व्याख्याता भवति। अत्र लौकिकमदात्तद्रूपासव-मदस्याधिक्यवर्णनादधिकाऽभेदरूपकालङ्कारः।।२७४।।

**हरिनयने हरिणीदृशां हृदयहरे हरणेन।**
**सावधानजागरवतामपि निजवशकरणेन।।२७५।।**

**चितवत वच तन हरत हठ लालन दृग वरजोर।**
**सावधान के वट परा ये जागत के चोर।।२७५।।**

**वशीकरण लोचन विभा पूर्णपूर्णमुपधाय।**
**तूर्णं हस्ताहस्ति मे हृदयं हरिर्निनाय।।२७६।।**

**चष रुचि जूनन डारि कै ठग लगाइ निज साथ।**
**रहौ राषि हठ लै गयौ हथाहथी मन हाथ।।२७६।।**

पुनर्यथा। हरिनयने-इति। सखीं प्रति नायिकाया उक्तिः। सावधानाश्च जागरवन्तश्च सावधानजागरवन्तः तेषामपि निजस्य स्वस्य वशीकरणं निजवशीकरणं तेन हेतुना पुनश्च हरतीति हरिः। हरणं तु तत्कर्मैव तेन हरणेन हेतुना वा हरेर्नयने हरिनयने हरिणीदृशां कामिनीनां हृदयं हरे मनोहारके जात इत्यन्वयः। एतेन ममापि ताभ्यां हृतमिति नायिकाया उक्तिः सङ्गच्छते अत्रापि पूर्वारागानुरागे उद्वेगरूपा स्मरदशेति दिक्।।२७५।।

पुनर्यथा। वशीकरणेति। हरतीति हरिः कृष्णः। वशीकरणञ्च तल्लोचनयोर्विभया पूर्णं तदेव चूर्णमुपधाय धृत्वा तूर्णं त्वरितं हस्तैश्च हस्तैश्च प्रवृत्यथाभवति तथा मम हृदयं मनो निनाय नीतवानित्यर्थः। एतेनोपमेयभूताया हरिलोचनविभायाः वशीकरणमन्त्रचूर्णोपमानेनाभेद-सम्बन्धानुरञ्जनात् समासमभेदरूपकालङ्कारः।।२७६।।

मिलितमेकतामाप मे हृदयं हरिरूपेण।
को भिनत्ति तं लवणमिव मिलितं यथा जलेन।।२७७।।

कीन्है हू कोटिक जतन अव गढि काढ़ै कौन।
मो मन मोहन रूप मिलि पानी में कौ लौन।।२७७।।

भ्रमति मनो मे हरितनौ बहुवारं पुनरेव।
प्रत्यङ्गं द्युतिमति यथाऽऽवर्तगतोडुपमेव।।२७८।।

फिर फिर चितवत ही रहत हुटी लाज की लाव।
अङ्ग अङ्ग छवि और मैं भई भौर की नाव।।२७८।।

पुनर्यथा। मिलितमिति। हे सखीति सम्बुद्ध्यनुकर्षः। मे मम हृदयं मनः हरे रूपेण मिलितं सद्-एकतामाप तद्रूपापत्तिर्जाता। तन्मन इदानीं को भिनत्ति। न कोऽपि तद्भेदकरणे समर्थ इत्यर्थः। यथाजलेन मिलितं लवणमिवेति। अत्र हरिरूपमनसोरुपमेययोर्जलरूपयोरुपमानयोश्च-एकतापनिरूपधर्मवत्तया बिम्बप्रतिबिम्बभाववत्वाद् दृष्टान्तालङ्कारो यथा शब्देन प्रतिपादित इति।।२७७।।

पुनर्यथा। भ्रमतीति। मे मनोहरेस्तनुमूर्त्तिस्तस्यां बहुवारं पुनरेव भ्रमति। भ्रमणशीलं जातमित्यर्थः। कीदृशे हरितनौ प्रत्यङ्गमङ्गमङ्गं प्रतिद्युतिर्विद्यते यस्मिन्निति प्रत्यङ्गद्युतिमत्। तस्मिन् तदृष्टान्तमाह। आवर्त्तेअम्भसां भ्रमे यथा-उडुपं स्वल्पनौकेति। उडुपं तु प्लवः कोल इत्यमरः। 'स्याद्बिम्बप्रतिबिम्बत्वं तदलङ्कृतिरितिलक्षणाद् दृष्टान्तालङ्कारः।।२७८।।

भ्रुकुटि नटनहसिताधरप्रचलनचपलतयैव।
पिबति तमालं मे मनः पीतमद्य तेनैव।।२७९।।

औठ उचै हाँसी भरि न द्रग भौहन की चाल।
मो मन कहा न पीलियौ पियत तमाखू लाल।।२७९।।

पुनर्यथा भ्रुकुटीति। हे सखीति सम्बुद्ध्यनुकर्षः। भ्रुकुट्योर्नटनहसितश्चासौ-अधरश्च तस्य यत् प्रचलनं तस्य या चपलता तयैव क्रियया तमालं पिबति सति। धूमयन्त्रेणेत्यर्थः। तेन नायकेन अघ एव इदानीमेमनः पीतमस्ति। भ्रुकुटीनटनसहसिताधरस्य या प्रचलनक्रिया तमालं पिबति सति नायकेन कृता तस्यां मे मनो मग्नमिति तस्या आशयः। अत्रापि पूर्वानुरागे स्मरणाख्या स्मरणदशाबोध्या।।२७९।।

चक्रिकेव सा गुणवती द्वैविध्ये विकलैव।
कृष्टाकुलजनलज्जया प्रीत्या पुनस्तथैव।।२८०।।

नई लगन कुल की सकुच भई विकल अकुलाइ।
दुहू ओर ऐंची फिरै फिरकी लौ फिरि जाइ।।२८०।।

बालादानमिषेण या मुपागत्य समुदैव।
पस्पर्शस्तनकुड्मलं चपलकराङ्गुलिनैव।।२८१।।

लरका लेवै के मिसन लंगर मो ढिग आइ।
गयो अचानक आँगुरी छाती छैल छुवाइ।।२८१।।

पुनर्यथा। अथ सखी सखीं प्रति नायिकाया पूर्वानुरागमाह। चक्रिकेवेति। सा गुणवती गुणैर्युक्ता एतवैविध्ये विकलैव जाता। तदाह। कुलजानां या लज्जा तया यथैव कृष्टा तथैव पुनः प्रीत्यैव कृष्टा सती परस्परधर्मविरुद्धत्वात् चक्रिकेव जाता चक्रिकाऽपि गुणवती केनापि पुरुषेण–ऊर्द्वाधोभागे परित्यक्ता विकलत्वेन वर्त्ततेतथा सेति। सखी सखीं प्रति तस्याः पूर्वानुरागदशां वदन्ती परपुरुषानुरागहेतोर्लक्षितत्त्वे न हेतुलक्षितेयं ज्ञातव्या। अत्र सेत्युपमेयचक्रिकेत्युमानस्य च उर्ध्वाधोभागकर्षणरूप धर्मवत्तया–इवेत्युपमावाचकेन सहोपादानात् पूर्णोपमालङ्कारः।।२८०।।

पुनर्यथा। बालेति। सनायको बालस्य–आदानं ग्रहणं तस्यमिषेण व्याजेन मामुपागत्य मुदा हर्षेणैव चपलतया कराङ्गुलिनैव स्तनकुड्मलं ममेति शेष पस्पर्शेत्यन्वयः। तदहं स्मरामीति तदुक्तेराशयः। एतेन पूर्वानुरागे स्मरणाख्यास्मरदशा बोध्येति।।२८१।।

अवरोहति धवलाजिरादारोहति पुनरेव।
हरे प्रीतिगुणबन्धना विलसति नटवटिकेव।।२८२।।

झपटि चढ़त उतरत अटा नैकु न थाकी देह।
भई फिरत न कौ वटा अटकी नागर नेह।।२८२।।

इतस्ततो विचरति पुनः क्षणमपि तिष्ठति सैव।
हरिगुणगणबन्धनमिता चक्रिकेव लसितैव।।२८३।।

इत तै उत उत तै इतै दिन न कहूँ ठहराय।
जकनि परत चकरी भई फिर आवत फिर जाइ।।२८३।।

पुनर्यथा। सखीवचनम्। अवरोहतीति। हे हरे! इति नायक सम्बुद्धिः। प्रीतिगुणैर्बन्धनं यस्याः सा धवलाजिराद्–अवरोहति नीचैरागच्छति पुनस्तमेव धवलाजिरमारोहति। अतः नटस्य या वटिका तद्वद् विलसति शोभते। यथा नटवटिका–अवरोहण–आरोहणक्रियावती भवति। अत्रापि सेत्युपमेयस्य नटस्य वाटिकारूपोपमानस्य–अवरोहणारोहणधर्मवत्तया इवेत्युपमावाचकेन सहोपादानात् पूर्णोपमालङ्कारः।।२८२।। पुनर्यथा। इतस्तत इति। सखी सखीं प्रत्याह–सैव–इतस्ततो विचरति गच्छति पुनः क्षणमपि तिष्ठति हरेर्गुणगणानां बन्धनमिता प्राप्ता–एव निश्चयेन चक्रिकेव लसिता–आसीत्। चक्रिकापि गुणगणबन्धनगत इतस्ततो विचरति पुनः क्षणं तिष्ठति–इति उपमानोपमेययोः समानधर्मत्वात् इवेत्युपमावाचकेन सहोपादानाच्च पूर्णोपमालङ्कार इति सखीष्वपि तत्प्रीतिललितत्वाद्धेतुलक्षिता बोध्या।।२८३।।

हृदेकत्र हरते हरिर्गुर्वी गुरुत्रपा च।
सा दोलाधिगतेव निजगृहकर्मसु विररा च।।२८४।।

उर उरझौ चित चोर सौ गुरु गुरुजन की लाज।
चढ़ी हिंडोरे से हियै कियै बनै गृह काज।।२८४।।

गोपी गृहमिह सस्मितं सा दर्शयाञ्चकार।
गोपालोऽपि सस्मितं सह मनसैव जहार।।२८५।।

उनहा की हसि कै उतै इन सौंपी मुसुक्याइ।
नैन मिलै मन मिलि गयौ दोऊ मिलवत गाइ।।२८५।।

पुनर्यथा। हृदिति। हरिः कृष्णः एकत्र हरते कर्षति तामिति शेषः। च पुनःगुर्वी दीर्घतरा गुरूणां त्रपा लज्जा च एकत्र हरते कर्षति। एवं सा दोलारूढे च निजगृहस्य कर्मसु कार्येषु विररा च प्रयत्नवती बभूवेत्यन्वयः। अत्रापि पूर्वानुरागहेतूनां सखीषु लक्षितत्वेन हेतु लक्षिता बोध्या। अत्र कस्याश्चिद्दोलाधिबाताया अस्याश्च–उपमेयभूताया समानधर्मवत्वेन इवेत्युपमा वाचकेन सहोपादानात् पूर्णोपमा बोध्या।।२८४।।

पुनर्यथा। गोपीति। सा गोपी सस्मितं यथा भवति तथा गां स्वीयामित्यर्थः। गोपालायेति चतुर्थ्याक्षेपः तादर्थ्यगम्यमानत्वात्। दर्शयाञ्चकार दर्शयामास गोपालकृष्णोऽपि च सस्मितं यथा भवति तथा तस्याः मनसैव सहगाज्जहार हृतवान् स्वीचकार इति फलितोऽर्थः अत्रापि–उभयोः पूर्वानुरागे हेतुलक्षित्वाद्धेतुलक्षिता ज्ञातव्या। स्वभावोक्तिः स्वभावस्येत्यादिना स्वभावोक्तिः।।८२५।।

उभयोरैक्यगतं मनो विचरति तनुद्वयेऽपि।
काकनयनगोलकसमं प्रभवति यत्नशतेऽपि।।२८६।।

उनकौ हित उनही बनै कोऊ करै अनेक।
फिरत काक गोलक भयौ दुहुन देह मन एक।।२८६।।

तस्या मनसि विलक्षणोऽनलः कृतो मदनेन।
यच्छाभ्यति हरिगुणहरेस्ताभ्यति कमलजलेन।।२८७।।

वाके चित औरे कछू लगी विरह की लाइ।
सरसिजजल नहि हरिगुणन हिय की आग बुझाइ।।२८७।।

पुनर्यथा। उभयोरिति। उभयोर्नायिकानायकयोर्मनः ऐक्यगतं सत्–एकतां प्राप्तं सत् तनुद्वयोऽपि विचरति। कस्मिन् सति यत्नानां शतं यत्नशतं तस्मिन् यत्नशते प्रभवति सति। कीदृशं मनः काकानां

नयनगोलकं तत्समं तत्तुल्यमित्यर्थः। काकनयनगोलकस्योपमानस्य-उभयोर्मनोरूपोमेयस्य साधारणधर्मवत्वाच्च सममित्युपमावाचकेन सहोपादानात् पूर्णोपमालङ्कारः। किञ्चकार्योत्पत्तिस्तृतीया तृतीयास्यात्सत्यपि प्रतिबन्धके इति लक्षणात् तृतीया विभावनाऽपि ज्ञातव्या। यत्नशतरूपं प्रतिबन्धकस्य विद्यमानत्वादिति लक्षणानुगतिः। किञ्चानयोर्नीरक्षीरन्यायेनैकी भावत्वंनास्ति किन्तु पृथगुपपत्तिस्तेन संसृष्टिरपीत्यलं विस्तरेण।।२८६।।

पुनर्यथा। तस्या इति। मदनेन कामेन तस्या; मनसि हृदये विलक्षणः अद्भुतः अनलः अग्निः कृतः स्थापितः। वैलक्षण्यमेवाह। यत् यस्मात्सविरहानलो मदनकृतोऽग्निः हरेः कृष्णस्य गुण एव हरिः पवनः तस्माच्छाम्यति शमयेति। पुनः कमलजलेन पद्मपत्राम्भसा ताभ्यति वर्द्धते। इदमेव वैलक्षण्यमिति भावः। अत्र व्यतिरेको विशेषश्चेदुपमोपमेययोरिति लक्षणाद् व्यतिरेकालङ्कारः। किञ्चोपमानेन मदनकृताग्नौ लौकिकाग्नेरुपमेयपदार्थात् तद्वैलक्षण्यावरुद्ध धर्मत्वाधिक्यप्रतिपादना-दधिकतद्रूपकालङ्कारश्च। किञ्च। अनयोरङ्गङ्गिभावसङ्कर इत्यलं पल्लवितेन।।२८७।।

सा लज्जा लङ्कापुरी प्रोष्यमदनदहनेन।
सीतेव शोधयति तनु निज पातिव्रत्येन।।२८८।।

वसि सकोच दशवदन कै साचु दिखावत बाल।
सिथलौ सोधत तिय तनहि लगनअग्नि की ज्वाल।।२८८।।

यथा यथा मदनानलैरनुतापिता तथैव।
प्रीतिलता वनितोरसि प्रतिलसिता हरितैव।।२८९।।

नैक न झुलसी विरह झर नेहलता कुम्हिलाइ।
दिन-दिन होत हरी-हरी षरी झाल रत जाइ।।२८९।।

पुनरपि पूर्वानुरागे कृष्णं प्रति नायिकानुरागसखीवाक्यम्। सेति सा बाला जानकीव निजपातिव्रत्येन मुख्यपतिव्रताधर्मत्वेन हेतुना मदनदहनेन मदनकृतसन्तातापाग्निनाकरणभूतेन तनुं शोधयति। किं कृत्वा। लज्जा-एव लङ्कापुरी ताम्प्रोष्य वसितत्वेनत्यन्वयः। यथा जानकी लङ्कापुरीवासकालुष्य युता निजपातिव्रतधर्मेणाग्नौ तनुं शोधयति तथा साऽपि लज्जापराधीनतया निपातिव्रतधर्मवत्वात् प्रियविरहोद्भूतमदनसन्तापाग्नौ तनुं शोधयतीति निष्कर्षः। एतेन सेत्युपमेयस्य जानकीत्युपमानस्य च तनुशोधनरूप साधारणधर्मवत्वादिवेत्युपभावाचकेन सहोपादानात् लज्जा एव लङ्कापुरीत्यभेद रूपकगर्भिता पूर्णोपमा बोध्या।।२८८।। पुनर्यथा। यथायथेति। प्रीतिरेव लतेत्यभेदरूपकम्। वनिताया उरसि प्रीतिलता यथा यथा मदनानलैः कामाग्निभिरनुतापिता तथैव तथा तथा हरितापपल्लवितैति निश्चयेन प्रतिलसिता आसीदित्यन्वयः। अन्य लताग्निसन्तापिता भवति शुष्का भवति प्रीतिलता तु हरितैवेत्यन्यलतातोऽस्या वैलक्षण्यरूपरूपाधिक्यप्रतिपादनाद्-अधिकतद्रूपकालङ्कारो विभाति। किञ्च

व्यतिरेको विशेषश्चेदुपमानोपयोरिति लक्षणात्तद्रूपकगर्भितोऽयं व्यतिरेकालङ्कारः। वस्तुतस्त्वनयो–रङ्गाङ्गीभावसङ्कर इत्यलं पल्लवितेन।।२८९।।

खण्डिताऽपि खलतक्षभिः कुमतिकुठारेणैव।
प्रेमलता वनिता हृदि प्रतिपल्लविततरेव।।२९०।।

षल बढई बलकर थके कटै न कुमति कुठार।
आल बाल उरझालरी षरी प्रेम तरु डार।।२९०।।

प्रवहति रससरिता यथा तस्या मनसि मुदैव।
तत्र प्रेमतरुः परं दृढतामेति तथैव।।२९१।।

करत जात जेती कटनि बढ़ि रस सरिता सोत।
आल वाल उर प्रेम तरु–तितौ तितौ दृढ़ होत।।२९१।।

पुनर्यथा। खण्डितेति। विनताया हृदि मानसे या प्रेमलता वर्तते। सा–एव निश्चयेन कुमतय एव कुठाराः खला एव तक्षाणःतैः खण्डिताऽपि कृन्तिताऽपि प्रतिदिनं पल्लविततरेव अतिशयेन प्रतिपल्लवितेव लसतीत्यर्थः। इतरलता तु तक्षभिस्तष्ठा न पुनः प्रतिरोहति। इयं तु न तथेति विशेष प्रतिपादनादभेद–रूपकालऽकारगर्भितोऽयं व्यतिरेकः। किञ्च कार्योत्पत्तिस्तृतीयास्या सत्यपि प्रतिबन्धके–इति लक्षणात् तृतीयाविभावनाऽपि सम्भवति। वस्तुतस्त्वेषां परस्पराङ्गीभाव प्रतिपन्नतया संकरसंस्तष्टी भवतः।।२९०।।

पुनर्यथा। प्रवहतीति। रसस्य शृङ्गारस्येत्यर्थः। तस्या मनसि मुदा हर्षेणैव यथा येन प्रकारेण प्रवहति तथैव तत्र रसनदी प्रवाहे प्रेमतरुः प्रेम्णः तरुर्वृक्षः परमतिशयेन दृढतामेति इति–अन्वयः। अत्र रसनदी प्रवाहे प्रेमतरोर्दार्ढ्य वर्णनेन तस्याः पूर्वानुरागो व्यज्यते। नदीप्रवाहरूपप्रतिबन्धके सत्यपि प्रेमतरुदृढत्वरूप कार्यसम्पादनात्तृतीया विभावना।।२९१।।

शुष्यति सा वनिता लता तव वियोगतपनेन।
घनश्यामकृपयाऽधुना सिञ्च सिञ्च सुरसेन।।२९२।।

बाल बेलि सूषी सुषद यह रूषे रुष धाम।
फेरि डहडही कीजिए सुरस सींचि घनस्याम।।२९२।।

क्षणं क्षणं क्षीणा च सा लीना मदननटीव।
हीना न प्रभवेदियं किमु कर्पूरनटीव।।२९३।।

देखत दुरै कपूर ज्यौं उजहि जाइ जनि लाल।
छिन–छिन जात परी षरी छीन छबीली लाल।।२९३।।

पुनर्यथा। शुष्यतीति। सा वनिता एव लता तव वियोग एव तपनःसूर्यः ते शुष्यति। हे घनश्याम! घन इव श्याम घनश्यामः अधुना इदानीं कृपया ददया सुरसेन सुष्ठु यो रसः शृङ्गारः संयोगरूपः। यद्वा सरोजलं तेन सिञ्च सिञ्चतामित्यर्थः। अत्यादरे वीप्सा। अत्र वनिताया लतायाश्च वियोगतपनयोश्चाभेदसम्बन्धेनानुरञ्जनात्समाभेदरूपकालङ्कारः। यद्वा। घनश्यामेति सुरसेतिश्लेष-महिम्ना साभिप्राय विशेषपादोपादानात् परिकरणङ्कुरालङ्कारः। 'साभिप्रायेविशेषे तु भवेत्परिकराङ्कुर' इति लक्षणात्।।२९२।।

पुनर्यथा। क्षणमिति। नायकं प्रति सख्या उक्तिः। हे हरे इति सम्बुद्ध्यनुकर्षः। तवविरहे इति पूर्वानुरागप्रकरणवशाद्वोध्यम्। सा क्षणं क्षणं क्षीणा मदनस्य कामस्य नदीति सौन्दर्याधिक्ये तत्साम्यात्। सा लीना लयप्रप्तेवासीत्। किमु किन्तु यथा कर्पूरवटी लक्षणमात्रेणैव हीना भवति तथा इयमपि न भवेदिति इङ्घटनमिच्छन्त्याः सख्या उक्तिः। यावद् हीना न भवेत् तावत्वं तत्समीपभागच्छेति त्वरितागमनप्रयोजनाय कर्पूरवटी वत्सुषमा बोध्या।।२९३।।

हरे हरे हरिणीदृशां दयया दृशं निधेहि।
त्वं निदानविज्वरहरं तस्यै सुरसं देहि।।२९४।।

हरि हरि वरि उठत है करि करि थकी उपाय।
वाकौ जुर बलि बैद लौ तोरस जाइ तौ जाइ।।२९४।।

कथयति का तस्या दशां गोविन्दप्राणेन।
मन्येऽहं मरणं वरं विरहदहनदहनेन।।२९५।।

कहा कहौ वाकी दशा हरि प्रानन के ईश।
विरह ज्वाल जरिवौ करै मरिवौ भई अलीस।।२९५।।

पुनर्यथा। हरे! हरे! इति। अत्यादरे वीप्सा। हरिणीदृशां मृगीदृशां मध्ये दयया स्वकीयां दृशं दृष्टिं निधेहि। यतस्त्वं निदानवित्-हेतुवेत्ताऽसि ज्वरहरं सन्तापहरं सुष्ठुरसप्रीतिरूपं तस्यै देहि-इति-अन्वयः। अत्र वैधोऽपि निदानविद्यया रोगिणं दृष्ट्वा यथा सुरसं ददाति तथा त्वमपि निदानवित् तस्यै प्रीतिरूपं सुरसं देहि-इति प्रार्थनया त्वद्विरहसन्तापव्याधिस्त्वत्प्रीतिर्पूकदर्शनेन शमिष्यति-इति तस्या आशयः। किञ्चात्रनिदामवदिति साभिप्रायःविशेषणोपादानात् तद्रूपरूपकालङ्कारगर्भितोऽयं परिकरालङ्कारः।।२९४।। पुनर्यथा कथयतीति। हे गोविन्द हे प्राणेन। प्राणानाम्-इनः स्वामी तत्सम्बुद्धौ हे प्राणाधिप! विरह एव दहनो विरह दहनो विरहदहनो विरहाग्निः तस्मात् यद्दहनं दाहस्तेन तेन हेतुभूतेन या दशा तस्या जाता तां दशां का कथयति न कापीत्यर्थः। अकथनीया तस्या दशेति भावः। तस्मादहं तस्या मरणमेव परं श्रेष्ठं श्रेष्ठतरं मन्ये इति वाक्येनाऽसह्यं विरहानलसन्तापसाधिक्यं प्रतिपादितम्। अत्रापि हे गोविन्द हे प्राणेशेति साभिप्राय-विशेष्यपदोपादानात् परिकराङ्कुरालङ्कारः।।२९५।।

यशो भविष्यति महदहो देहिसुदर्शनमेव।
तस्यै, हर विषमज्वरं तस्यास्तां च हरेश्च।।२९६।।

यह दिन सतत न राषिये जगत बड़ो जस लेहु।
जरी विषम जुर जारिये आइ सुदरसन देहु।।२९६।।

तनुरस्या तल्पेन सा ज्ञातुं क्षमा मयापि।
तव नाम श्रुत्वा नदति दीपकलेव कदापि।।२९७।।

नेक न जानी परति अति परौ विरह तन छाम।
उठति दिये लौ नादि हरि लियै तिहारौ नाम।।२९७।।

पुनर्यथा। यश इति। अहो! इति कोमलालापे हे हरे! तव महद्–यशो भविष्यति तस्यै सुदर्शनमेव देहि–इति तस्याः विषमज्वरं विषमसन्तापं हरताञ्च अवरक्षेत्यन्वयः। विषमज्वरसन्तापं हर सुदर्शनाख्यं चूर्णमपि भैषज्यशास्त्रे प्रसिद्धम्। अत्र सुदर्शनं देहि विषमज्वरं हर–इत्यादीनामर्थद्वयसङ्गत्या नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयास्पद इति लक्षणाद् वर्ण्यपद श्लेष।।२९६।। पुनर्यथा। तनुरिति। हे हरे! इति सम्बुद्ध्यनुकर्षः। तनुभूर्तिस्तस्या इति शेषः। अल्पाः सूक्षतरा जाता तल्पे शयनीये सा विद्यते। न वेति मयाऽपि ज्ञातुं न क्षमा अतिदुर्बलत्वादिति भावः। कदापि कस्मिँश्चिकाले तवनाम श्रुत्वा दीपकलेव नदति शब्दायमाना भवति। यथा दीपकला कदापि न नदति तथेयमपीत्यर्थः। एतेन त्वद्विरहे तस्या एतादृग्दशा वर्तते तस्मास्तस्यै दर्शनं देहि–इति तस्या उक्तिर्व्यज्यते। दीपककलारूपोपमानस्य सेत्युपमेयस्य कदाचिन्नादवत्स्वरूपसाधारणधर्मेण इवेत्युपमावाचकेन सहोपादानात् पूर्णोपमाऽलङ्कारः इति।।२९७।।

सा जगृहे प्रियदत्तमिति कुङ्कुमरसं यदेव।
शुष्कं तत्करसङ्गतश्चूर्णीयते तदेव।।२९८।।

मैं लै दियौ लियौ सुकर छुवत छनक गौ नीर।
लाल तिहारौ अरगजा उर ह्वै लग्यो अबीर।।२९८।।

प्रिय प्रेषितं व्यजनमिति जगृहेज्वरनाशाय।
तेन स्वेदनाशेऽपि तत् जातमति स्वेदाय।।२९९।।

हितकर तुम पठयौ लगै वा विजना की वाय।
टरी तपन तनकी तऊ चली पसीना न्हाइ।।२९९।।

पुनर्यथा। सेति यत्कुङ्कुमरसः केसरजलम्। प्रियेण दत्तमिति सख्या उक्तेः सा जगृहे गृहीतवती। तदेव निश्चयेन तस्याः कर सङ्गतः शुष्कं सच् चूर्णायते चूर्णइवाचरतीत्यन्वयः। अत्र कुङ्कुमजलस्य तत्करसंसर्गतस्तत्काल शुष्कचूर्णीभूतत्ववर्णनं तद्विरह सन्तापाधिक्य प्रतिपादनायेति भावः।।२९८।।

पुनर्यथा। प्रिये प्रेषितमिति। अत्र सा बाला-इति कर्त्तुराक्षेपः। इदं व्यजनं प्रियेण प्रेषितामिति सख्या उक्ते सा ज्वरं नाशाय सन्तापदूरीकरणाय जगृहे गृहीतवती तेन व्यजनेन करणभूतेन खेदनाशेऽपि सति तद्व्यजनमति खेदाय जातामित्यन्वयः। प्रियदत्तमिदं व्यजनमिति खेदसात्त्विकाविर्भाववत्त्वात्। रतितः श्रमतो हर्षाद् भीतेः क्रोधात् समुद्भवः। स्वेदो वपुषि सञ्जातः क्लेदं कुर्वन्निव बभौ इति भरतोक्तेः। अत्र प्रियदत्तमिति हर्षजः स्वदोऽवगन्तव्यः। किञ्च अनिष्टस्याथवाप्तिश्च तदिष्टार्थसमुद्यमारिति लक्षणात्। स्वेदनाशकोऽयं व्यञ्जनइतीष्टार्थसमुद्यमे कृते पुनरपि तद्ग्रहणात्सात्त्विकाविर्भावे अधिकस्वेदवत्वरूपानिष्ट प्रतिलम्भ इति लक्षणानुगतिः।।२९९।।

अन्य एव विरहानलो हृदि रचितो मदनेन।
न च शाम्यति नीरेण स च प्रियवर्तापवनेन।।३००।।

वाके चित औरे कचू लगी विरह की लाइ।
प्रजरै नीर गुलाब के प्रिय की बात बुझाय।।३००।।

त्यजति कदापि न तत्पथं प्रीतिःकृष्ण तवैव।
पिशाचीव हृदयालया दुर्बलयत्यधुनैव।।३०१।।

थाकी जतन अनेक करि नैकु न छाड़त गैल।
करी षरी दूबरि सुलगि तेरी चाह चुरैल।।३०१।।

पुनर्यथा। अन्य एवेति। अन्य एवेत्यद्भुतत्वद्योतनायोक्तम्। विरहानलः विरहाग्निः तस्या इति शेषः। हृदि मानसे मदनेन रचितः कामनाकलितोऽस्ति। स च नीरेण न शाम्यति। किन्तु प्रियस्य वार्ता वृत्तान्त एव पवनस्तेन शाम्यति-इति अन्वयः। अन्योऽग्निर्नीरेण शाम्यति पवनेनवर्द्धते। इति अयं तु न तथेति विशेष प्रतिपादनात् व्यतिरेकगर्भिता भेदकाशयोक्तिरवगन्तव्या।।३००।। पुनर्यथा। हे कृष्ण! इति सख्या उक्तिः। तव प्रीतिः हृदये मानसे आलयो यस्याः सा पिशाचीव कदापि कस्मिँचिदपि काले तत्पथं तस्याः मार्गं न त्यजति न मुञ्चति। किन्तु एव निश्चयेन अधुना इदानीं दुर्बलयति बलहारिणी भवति-इति अन्वयः। अत्र कृष्णप्रीतिरूपोपमेयस्य पिशाचीरूपोपमानस्य निरन्तरहृदयालयत्वात्वादिसाधारण धर्मत्वेत्युपमा-वाचकेन सहोपादानात् पूर्णोपमाऽलङ्कारः।।३०१।।

अद्भुत इति रमणीतनौ मदनानलो विभाति।
वर्षति नयनजलेऽनिशं तदपि न शममुपयाति।।३०२।।

लाल तिहारे विरह की अगिन अनूप अपार।
सरसै बरसै नीरहू झरसी मिटै न झार।।३०२।।

पुनर्यथा अद्भुत इति रमणीतनौ मदनानिलः कामकृतोऽग्निः अद्भुत इति शोभते। अद्भुत्वमेवाह।

अनिशं निरन्तरं नयनजले वर्षति विसति तदपि तथापि शामं नोपयातीत्यन्वयः। अत्र निरन्तर नयनधारारूप प्रतिबन्धके सत्यपि नाग्निशान्तिरिति कार्योत्पत्तिवर्णनात् तृतीया विभावनाऽवगन्तव्या।।३०२।।

दृष्टुं वाञ्छसि यदि हरे विकलतरामधुनैव।
तर्हि गच्छ यच्छन् वचो गुप्तं पश्य तथैव।।३०३।।

जो वाकी तन की दशा देषौ चाहौ आप।
तौ वलि नैकु विलोकि ये चलि अचका चुपचाप।।३०३।।

गौरववदनमन्दस्मितं वागविदग्धतराऽपि।
सख्या श्लेषः सखि! तथा नविस्मरामि कदापि।।३०४।।

चितवन भौरे भाय की गोरे मुँह मुसक्यान।
लागनि लटकि अली गरै चित षटकत नित आन।।३०४।।

पुनर्यथा। दृष्टुमिति। सख्या उक्तिः। हे हरे! हे कृष्ण! यदि विकलतराममतिविकतामधुनैव दृष्टुं वाञ्छसि। तर्हि वचो नियच्छदन् सन् वचो नियमयन् सन् गच्छ गत्वा च गुप्तं यथा भवति तथैव पश्येत्यन्वयः। एतेन तवागमनज्ञातेसति तादृशं वैकल्यं भविष्यति–इति तस्या आशयः। इदानीं त्वद्विरहे वैकल्याधिक्यमिति सङ्घटनमिच्छन्त्या सख्या उक्तिः।।३०३।। अथ नायकस्य दृगनुरागमुदाहरति। गौरेति। सखीं प्रति नायकस्योक्तिः हे सखि! तस्या इति शेषः। गौरं च तद्वदनं तस्मिन् यन्मन्दस्मितं मन्दहसितमिति यावत् अविदग्धतरा चातुर्याधिक्यरहिता वामपि तथा दृष्ट्वा यः सख्या आश्लेषः इति कदापि अहं न विस्मरामि एतेन नायकस्य दृष्टानुराग उदाहृतः। स्यात्स्मृतिभ्रान्ति सन्देहैस्तदाङ्कनम् कृतिममिति लक्षणात् स्मृत्यलङ्कारः। स्मरणरूपा स्मरण दशा चावगन्तव्या।।३०४।।

चिन्तयामि तत्प्रतिपलं यद्गुरु जनमध्येऽपि।
अधरमन्तरा व्याहृतं वचस्तया समयेऽपि।।३०५।।

षिन षिन मैं षटकट सुहिय षरी भीर मैं जाति।
कहि जुचली विन ही चितै औठन ही सौ बात।।३०५।।

मृदुलसचिक्वणतनुलता वनिता श्यामलतेव।
गता मोहयति पथि गता धन्या फणिकन्येव।।३०६।।

चिलक चीकनी चटक सौ लफत सटक लौ आइ।
नारि सलौनी सावरी नागिन लौं डसि जाय।।३०६।।

स्मित्वा स्थित्वा व्रजति सा मां दृष्ट्वा दृष्ट्वैव।
सचकितकम्पं कामिनी कर्षति मनो ममैव।।३०७।।

डग तड़ि गत सी चलि ठठकि चितई चली निहारि।
लियै जात चित चोरटी वहै गोरटी नारि।।३०७।।

पुनर्यथा। चिन्तयसीति। हे सखि-इति सम्बुद्ध्याक्षेपः। नायकस्योक्तिः। पलं पलं प्रति-इति प्रतिपलं यद्गुरुजनानां मध्येऽपि वचोव्याहरणानवकाशेऽपि अधरमन्तरा-अधरस्य मध्ये तया वचोव्याहृतं कथितं तत् चिन्तयामि-अधुना तद्विरहेऽपि-अहं स्मरामीत्यर्थः। एतेन नायकस्य दृष्टानुरागो व्याख्यातः स्मृतिरलङ्कारः। स्रराणरूपास्मरदशा बोध्या-इति दिक्।।३०५।। पुनर्यथा मृदुलेति। सा कन्या फणिकन्येव नागकन्येव सौन्दर्याधिक्यादिति भावः। श्याम लतेव श्यामवर्णा लतेव सौकुमार्याधिक्यादिति भावः। सा मां मोहयति अहो इति कोमला पथि गता कीदृशी वनिता मृदुला सचिक्कणा तनुलता यस्या; सा तथा भूतेत्यर्थः। एतेनापि नायकस्य दृष्टानुरागो व्याख्यातः। स्मृतिरलङ्कारः स्मरणरूपा स्मरदशा च बोध्या।।३०६।। पुनर्यथा। स्थित्वेति। सा कामिनी मा मां दृष्ट्वा दृष्टैव स्थित्वा स्थित्वा व्रजति गच्छति। सचकितकम्पं यथा भवति तथा ममैव मनः कर्षतीत्यन्वयः। अत्रनायकस्य दृष्टानुरागात्सखीं प्रत्युक्त्या दर्शितः। स चकितकम्पमित्यनेन स्वभावोक्तिरलङ्कारश्च।।३०७।।

नटयित्वा भ्रुकुटीयुगं दृष्टौ दृशं निधाय।
घटयित्वा वसनाञ्चलं चित्तं तदनु निनाय।।३०८।।

भौह उच्चै आचर उलटि मोरि मोरि मुह मोरि।
नीठ नीठ भीतर गई डीठि डीठि सौ जोरि।।३०८।।

सखि! दृष्टस्तव राग इति दृष्टं मिलनमथापि।
पश्यति मामुत्का सखीं सा विधुमुकी तथापि।।३०९।।

रहौ मोह मिलनौ रहौ यौ कहि गहै मरोर।
उत दै सखिन उराहिनौ इति चितई मो ओर।।३०९।।

पुनर्यथा। नटयित्वेति। भ्रुकुट्योर्युगं नटयित्वा नर्ततीयित्वा पुनर्नर्मदृष्टौ स्वीयां दृशं निधाय पुनर्वसनाञ्चलं घटयित्वा रचयित्वा सुष्ठु धारयित्वेति यावत्। तदनुतत्पश्चात् मम चित्तं चेतो निनाय नीतवती-इति अन्वयः। एतेन नायिकाया एतां दशां दृष्ट्वा नायकः सखीं प्रतिवदन् स्वीयं दृष्टानुरागं प्रकाशयति। तद्दशा विशेषस्मरणात् स्मृतिरलङ्कारः स्मरणाख्या स्मरण दशा च बोध्या।।३०८।। पुनर्यथा हे सखि तव रागः स्नेहः मया दृष्टः। अथापि मिलनमपि मां पश्यतीत्यन्वयः। एतेन सखीं प्रति यत्तयोक्तं तन्मां प्रत्येवेति तत्कालमद्दर्शनेन प्रतीयते। अधुनाऽपि तद्दशाविशिष्टं विशेषवचनं तस्याः स्मरामीति फलितोऽर्थः, तेन स्मृतिरलङ्कारो व्यज्यते।।३०९।।

सभखचित्रवसनावृतां मुखचन्द्रामधुनैव।
प्रभवति दृष्ट्वा रात्रिमिव दृशि प्रीति निद्रैव।।३१०।।

चुनरी स्याम सतारनभ मुषससि की अनुहार।
नेह दबावत नींद लौ निरषि निवासी नारि।।३१०।।

प्रदर्शयित्वा स्मितमुखी गतान्त्तरं पुनरेव।
आयाता तक्राय सा प्रीतिं ददौ हृदेव।।३११।।

फेरि कछू करि पौर तै इत चितई मुसकाइ।
आई तावन लैन को नैहै गई जमाइ।।३११।।

पुनर्यथा। सभेति। हे सखि! इति सम्बुद्ध्यनुकर्ष;। तां रात्रिमिव दृष्ट्वा प्रीतिरेव निद्रा प्रभवति प्रबला भवति–इति भावः कथं भूतां तां सभखचित्रवसनावृतां भैर्नक्षत्रै; सहितं यत् खं गगनं तद्वत् चित्रवसनं विचित्रं वासः तेनावृताम्। पुनश्च कीदृशीं मुखं चन्द्रमिव यस्यास्ताम्। पुनः कीदृीं रात्रिं मुखमेव चन्द्रोयस्यास्तामित्यर्थः। अत्रोपमनोपमेययोः श्लिष्ट विशेषणोपन्यासाद्। वर्ण्यावर्ण्य पदश्लेषः किञ्च तस्या उपमेयभूताया रात्रेरुपमानभूतायाश्च प्रीतिरेव निद्रेत्यभेद–सम्बन्धेन प्रीतिनिद्रा–प्राबल्यरूपसाधारण धर्मत्वाद् इवेत्युपमावाचकेन सहोपादानात् पूर्णोपमा बोध्या।।३१०।। पुनर्यथा सा स्मितमुखी मन्दहसितवदना तक्रायतक्रार्थमायाता प्रदर्शयित्वास्वात्मानमिति शेषः। अन्तरमन्तर्गृहं पुनरेवागतासीदित्यर्थः। किन्तु हृदा मनसा प्रीतिं ददाविवेति। असिद्धास्पदा फलोत्प्रेक्षा। तक्रार्थं नायाता किन्तु प्रीतिदानायैवेति फलितोऽर्थः। अत्र परिवृत्तिर्विनियमोन्यूनाभ्यधिकयोर्मिथः' इति लक्षणात् परिवृत्तिरलङ्कारोऽपि सङ्गच्छते। किञ्चानयोः पृथगुपन्यासात्संसृष्टिरपि।।३११।।

गेहपतेरपि पश्यतः स्नेहं प्रथयित्वैव।
नतनयनातिर्यग्दृशा मामुद्वीक्ष्य गतैव।।३१२।।

देहलग्यौ ढिग गेहपति तऊ नेह निरवाहि।
नीची अषियन ही चितै गई कनषियन चाहि।।३१२।।

नेति नेति जगाद वचः शून्ये करग्रहेण।
यत्तन्मनो भिनत्ति मे शल्यमिव स्मरणेन।।३१३।।

सूनै घर लहि कर गहत दिषादिषा की ईठि।
गड़ी सुचित नाहीं करनि करि ललचौही डीठि।।३१३।।

पुनर्यथा। गेहपतेरिति। सा बाला देहपतेर्गृस्वामिनः पश्यतः अपि एव निश्चयेन स्नेहं प्रथयित्वा विस्तारयित्वा नते नयने यस्याः सा एतादृशी सती। तिर्यग् दृशाकटाक्षेण मामुद्वीक्ष्य दृष्ट्वा गतैवेत्यन्वयः। एतेन नायकस्य दृष्टानुरो व्याख्यातः। नायिका तु परकीयैवेति। हे पतेरपीत्युपादानाद् तृतीया विभावना बोधव्या।।३१२।। पुनर्यथा शून्ये शून्यागारे। करस्य ग्रहो ग्रहणं तेन हेतुना यत्सा नेति नेति वचः जगाद। तद्वचः स्मरणे तत्स्मृत्या मे मनः भिनत्ति मानसं संविदरयतीत्यर्थः। किमिव

स्मरणेन तत्प्रहारस्मरणेन पुरालग्नशल्य रूपोपमानस्य च इवेत्युपमावाचकेन सहोपादानात्। धर्मलुप्तोपमालङ्कारः। तीक्ष्णत्वादि धर्मस्योपादानात्।।३१३।।

दूती काप्यधिरोहिणी प्रेमधवलसदनेषु।
सा न साधिका पुनरहो साधु कृतेषु तेषु।।३१४।।

कालबूत दूती विना जुरै न कोटि उपाय।
फिर वाके टारै वनै पाके प्रेम लदाइ।।३१४।।

अथ दूती वर्णनम्। दूतीति। प्रेमान्येव धवलसदनानि धवलानि गृहाणि तेषुनाम कापि-अधिरोहिणी अधिरोहण साधनं निःश्रेणीति यावत्। अहो इति कोमलालापे। पुनस्तेषु प्रेमधवलसदनेषु साधु यथा स्यात्तथा कृतेषु च सत्सु सम्यक् सम्पन्नेषु सत्सु सा दूती अथवा सा अधिरोहिणी साधिका न भवति साधनकर्त्री नैवेत्यत्यर्थः। अत्र प्रेमाण्येव धवलसदनानि-इत्यभेदरूपकगर्भिता दूतीत्युपमेयस्य अधिरोहिणीत्युपमानस्य च सम्पन्नेषु उभयोरपि साधनाराहित्य रूपसाधारणधर्मेणोपादानाद्वाचकलुप्ता बोध्या।।३१४।।

हरे हरसि हारायसे त्वमुर्वशीव सदापि।
अतिरिच्यते नोर्वशी त्वत्तो वशीकराऽपि।।३१५।।

तो पर वारौ उरवसी सुनि राधिके सुजान।
तू मोहन के उर वसी ह्वै उरवसी समान।।३१५।।

राधे! प्राणप्रियतमे! कृष्णोरसि लसितासि।
बाधितुमहो सपत्निकाहृदयं शल्यसमासि।।३१६।।

तूँ मोहन संग गड़ि रही गाढ़ी गडनि गुवालि।
उठत सदो नट सालसी सौतिन के उर साल।।३१६।।

अथ नायिकां प्रति दूत्या उक्तिः। हरेरिति। हरेः कृष्णस्य-उरसि हृदये त्वम्-उर्वसीव उर्वसी नाम काचिदप्सरा-इव तत्सौन्दर्यतुल्यत्वेनेति भावः। हारायते हार इवा चरसीत्यर्थ। किञ्च वशीकरापि वशीकरणक्षमाऽपि सा उर्वशी त्वत्तो नातिरिच्यते आधिक्यं न याति त्वं तु सदैव हारायसे इति तस्या आधिक्यं प्रतिपादनात् अत्र व्यतिरेको विशेषश्चेदुपमानोपमेयोरिति लक्षणाद् व्यतिरेकालङ्कारः। अयमुपमेयाधिक्यपर्यवसायीति दिक्।।३१५।। पुनर्यथा। राधे! इति। हे राधे हे प्राणप्रियतमे कृष्णस्य-उरसि हृदये त्वं लसिताऽसि शोभिताऽसि। अहो इत्याश्चर्ये। सपत्निकानां हृदयं बाधितुं त्वं शल्यसमासीत्यन्वयः। अत्र राधिकायाः कृष्णलसितरूपगुणेन सपत्नीनां हृदये शल्यतुल्यतारूपदोष प्रतिपत्तिरिति। यदान्य-गुणदोषाभ्यामुल्लासोन्यस्यतौ यदीति लक्षणात्।।३१६।।

शृङ्गारैरङ्गद्युतिर्न पतिमनोहरतैव।
भवति नोरु नयनद्वयं प्रसरति केशलतैव।।३१७।।

प्रिय मन रुचि ह्वै वौ कठिन तन रुचि होइ सिंगार।
लाख करौ आँषिन बढ़ै बढ़ै बढ़ायै वार।।३१७।।

विकसन्ति हि बातायने तव तनुकान्तिकराणि।
यत्र-तत्र हरिरपि तदा तिष्ठति हृदयहराणि।।३१८।।

जालरन्ध्र मग अँगन कौ कछु उचास सौ पाइ।
पीठि दियै लग सौ रहै डीठि झरोषा लाइ।।३१८।।

पुनर्यथा। शृङ्गारैरिति। हे प्रिये! इति सम्बुद्ध्यनुकर्षः। दूतीवाक्यं बोध्यम्। शृङ्गारैर्भूषणवस्त्रादिभिः अङ्गद्युतिर्न भवति किन्तु पतिमनोहरतैव अङ्गद्युतिरिति मदीया प्रतीतिः। तत्र दृष्टान्तमाह-नयनद्वयमुरुदीर्घं न भवति। यत्नशतैरपीत्यर्थः। एवं निश्चयेन केशलता प्रसारिता दीर्घीकृता प्रसरत्येवेत्यर्थः। दृष्टान्तालङ्कारोऽवगन्तव्यः।।३१७।। पुनर्यथा। विकसन्तीति। हे बाले! तव तनोर्यास्तस्याः कराणिकरणानि यदा तथा यत्र-तत्र हरिः कृष्णोऽपीति तिष्ठति। त्वत्तनुकान्तिकिरणकलाप्रदर्शनायेति भावः। तत्सौन्दर्याधिक्यवर्णनेन सङ्घट्टनमिच्छन्त्या दूत्या उक्तिः।।३१८।।

गुणवत्यपि सुभगेयमयि लसति दीपकलिकेव।
तावत्सापि विकाशते यावत्स्नेह युतैव।।३१९।।

जद्यपि सुन्दर सुघर पुनि सगुनौ दीपकदेह।
तऊ प्रकास करै तितौ भरिये जितौ सनेह।।३१९।।

लग्नं चक्षुर्मीनमिति शनिकज्जलविभयाऽपि।
युक्तं तनुदेशेषु तद्राज्यसुदिनमधुनाऽपि।।३२०।।

सनि कज्जल चष झष लगन उपज्यौ सुदिन सनेह।
क्यौ न नृपति ह्वै भोमिवै लहि सुदेस सब देह।।३२०।।

पुनर्यथा गुणवतीति। इयमपि सा बाला तावद्विकाशते यावत् स्नेहयुक्ता-एव निश्चयेन। एतेन तव स्नेहेन नैव तस्यां प्रसादो नान्येति भावः। कीदृशी सा गुणवती सकलगुणयुक्ता पुनः सौन्दर्ययुक्ताऽपि। केव दीपककलिकेव। अत्रेवार्थे एव शब्दो बोध्यः। अव्ययानामनेकार्थत्वाद् एव शब्दस्याप्युत्प्रेक्षा शब्देषु पठितत्वाद्वा। दीपककलिकाऽपि तावद्विकाशते यावत् स्नेहयुतैव कीदृशी दीपकलिका गुणवती वर्तिकायुक्ता वर्तिका गुणवतीवर्तिका युक्ता पुनः शुभगा सुन्दरी-इत्यर्थः। अत्रोपमनोपमेययोः शिलष्टविशेषणोपन्यासाद् वर्ण्यपदश्लेषगर्भितेयं पूर्णोपमा।।३१९।। नायकं प्रति दूत्या उक्ति। पुनर्यथा। लग्नमिति। अधुना इदानीं तत्तस्यास्तनुदेशेषु तनुरेव देशाविशेषास्तेषु मया

राज्यसुदिनं राज्यस्य मुहूर्त्तमपि प्राप्तमित्यर्थः। तदेवपूर्वार्द्धेन प्रतिपादितम्। कीदृशं राज्यसुदिनं यत्र चक्षुः नेत्रं मीनलग्नमस्ति। कीदृशं मीनलग्नं शनिरेव शनिरेव कज्जलविभा-अञ्जनप्रभा तया युक्तमित्यर्थः। अत्रमीनलग्नस्थशनिरपि राज्ययोगकारीति ज्योतिः शास्त्रे प्रसिद्धम्। अत्र शनि कज्जल विभयोर्मीनचक्षुषोश्चाभेदसम्बन्धेन प्रतिपादनात्समासभेदरूपकालङ्कारः।।३२०।।

ललने लालितालोचने पश्यसि कथय कमेव।
को धन्यो भाविताऽथवा कं तुष्टाऽतनुरेव।।३२१।।

लषि लौने लोयननिकौ कोयन होय न याज।
कौनगरीबनिवाजि वौ कित तू ठौ रति राज।।३२१।।

को विकलो न तवाङ्गनेऽपाङ्गशव्यधनेन।
यद्विःशल्ये मनसि नहि भाव्यं निःशल्येन।।३२२।।

लागत कुटिल कटाच्छ सर को न होय बेहाल।
काढ़त हियौ दुसाल करि तऊ रहत न टसाल।।३२२।।

पुनर्यथा। नायिकां प्रति दूत्या उक्तिः। ललने इति। हे ललने लालितेलोचने यया सा तत्सम्बुद्धौ त्वम् आभ्यां लोचनाभ्यां कं पश्यसीति-एव निश्चयेन कथय। एतेन यं त्वं पश्यसि स च धन्य इति भावः। अप्यवाको वा पुमान् धन्यो भविता भविष्यति। आभ्यां कं धन्यं द्रक्ष्यसीति तस्या आशयः। अतनुः कामः कं प्रति तुष्टः तोषमापन्नः। यत्र कामस्य तोषः स एव धन्य इति तत्सौन्दर्याधिक्यप्रतिपादनात् पर्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तराश्रयमिति लक्षणात् पर्यायोक्तमलङ्कारः। सौन्दर्यवर्णने गम्यमाने कं पश्यसि कोवाधन्यौ भविता कुत्र कामस्तुष्ट इत्यादि भङ्ग्यन्तरेणोक्तमिति लक्षणानुगतिः।।३२१।।

पुनर्यथा। हे अङ्गने। तव-अपाङ्ग। एव शराः बाणाः तेषां व्यधनेन प्रहारेण कः पुमान् विकलो न भवति। किन्तु सर्वेऽपि विकला भवन्तीति काकुः। यत् यस्मात् द्विः शल्ये मनसि हृदये सति हि निश्चयेन निःशल्येन न भाव्यं न भवितव्यमित्यर्थः। एतेनापाङ्गयोरतितदिष्टववर्णनेन नायकस्य तवापाङ्गशरण्यता वर्तते तां हरेति संघट्टनमिच्छन्त्या दूत्या उक्तिर्व्यज्यते।।३२२।।

वसतिर्ग्राम्यजनैरहो नागरिकृतान्वयैव।
तस्मादति हसिते नते सुचतुरता गतैव।।३२३।।

नागरि विविध विलास तजि वसी अवेलिन माह।
मूढ निमैग निवौकरै हूठौ दै अठिलाइ।।३२३।।

नन्दनन्दचन्द्रानना बाला मुदं ददाति।
लावण्येन युताऽपि यन्मधुरतरा प्रतिभाति।।३२४।।

**रही लटू ह्वै लाल कौ लषि बहुबाल अनूप।**
**कितौ मिठास दयौ दई इते सलौने रूप।।३२४।।**

पुनर्यथा। वसतिरिति। हे नागरि हे चतुरे! ग्राम्यजनैस्सह वसतिस्त्वयैव कृता तस्माद् ग्राम्यजनसहवासादतिहसितेन हेतुना ते चतुरगतैव आसीदित्यन्वयः। ग्राम्य जनास्तु अतिहसितप्रियाः चतुरास्तु मन्दहासप्रिया इति भावः। एतेन-इदानीं चतुरैः सह सङ्गतिं कुरु ग्राम्यजनसहवास प्रकृतिं त्यजेतिशिक्षारूपं दूतीवचनमिदम्। अत्र ग्राम्यजनगतहास्यादिरूपदोषस्तत्सङ्गत्या तस्यामपि प्राप्त इति। यदान्य गुणदोषाभ्यामुल्लासोऽन्यस्तौ यदिति लक्षणादुल्लासालङ्कारः।।३२३।। अथ नायकं प्रति दूत्या उक्तिः। नन्दनन्दनेति। हे नन्दनन्दन! हे कृष्ण! चन्द्रइव-आननं यस्याः सा बाला मुदं हर्षं ददाति। यत् यस्मात् लावण्येन युताऽपि अतिमाधुर्ययुता प्रतिभाति। एतेन तस्यां माधुर्यरूपो गुण उक्तः। लोके हि यद्वस्तु लावण्यभावेन युतं तन्मधुरं न भवतीति विरोध इव भासते। आभासश्चेद्विरोधस्य विरोधाभास इष्यते इति लक्षणात्। लावण्येनेति श्लिष्टपदोपादानाद् विरोधपरिहारः।।३२४।।

**गुणपर्वणि सर्वा बभुर्नवभूषणरचनेन।**
**कृता मलिनवदनास्तया सुरतमृदितवसनेन।।३२५।।**

**तीज परव सौतिन सजे भूषन वसन सरीर।**
**सवै गरगजे मुषकरीं वहै मरगजे धीर।।३२५।।**

**यदा शुक्लशाटीवृता हाटकसमविभयैव।**
**तदा तया शारदजलदतडिता तनूकृतैव।।३२६।।**

**सोहत धोती सेत मैं कनक वरन नव बाल।**
**सारद वारिद बीजरी भारद की जतु लाल।।३२६।।**

पुनर्यथा। गुणपर्वणीति। गुणाख्यं पर्वं गुणपर्व गुणगौरीति लोके प्रसिद्धम्। यद्वा गुणसङ्ख्याकं तृतीयातिथिरूपं पर्व गुणादिपर्व तस्मिन् सर्वाः नवानि च तानि भूषणवसनानि तेषां यद् रचनं यथास्थानविन्यास विशेषः। तेन करणभूतेन बभुः शोभमाना आसन् तया बालया सुरते च यन्मृदितं च तद्वसनं तेनैव ता सर्वा मलिनं वसनं यासां ताः एवं भूताः कृताः। एतेन स्तोकभूषणाधारणेन कान्तिपोषणकारिणी विच्छिन्तिरितिलक्षणाद् विच्छित्तिहावो बोध्यः। सुरतमृदितवस्त्रधारणरूपप्रतिबन्धके सत्यपि अन्यासां मुखमालिन्यरूपकरण-रूपकार्योत्पत्तेः तृतीया विभावना।।३२५।। पुनर्यथा यदेति। शुक्ला चासौ शाटी शुक्लशाटी शुक्लशाट्यावृता यदा भवति तत्समये शारदाः शरत्कालीना ये जलदाः तडिता विद्युल्लता च हारकं सुवर्णं सत्समा विभा कान्तिर्यस्याः सा तवैव तनूकृता आसीदित्यन्वयः। अत्र तत्सौन्दर्यशोभा वर्णनेन सङ्घटनमिच्छन्त्या दूत्या उक्तिः सम्भावनीया।

वर्ण्येनान्यस्योपामाया अनिष्पत्तिवचश्च तदिति लक्षणाच्चुर्थप्रतीपालङ्कारः। शारदजलदतडिद्रूपोपमाननादरप्रति लम्भनादनिष्पत्तिरवगन्तव्येति लक्षणानुगतिः।।३२६।।

मोहनाहमपि मोहिता मोहिष्यसि त्वमेव।
कनकयूथिमालायते यन्मालतीस्त्रगेव।।३२७।।

हौ रीझी लषि रीझि हौ छविहि छबीले लाल।
सोन जुही सी होत दुति मिलत मालती माल।।३२७।।

सा किञ्चिच्छ्रवणादरा जाताप्रियाधुनैव।
मुग्धतया किञ्चित्त्रपा किञ्चिद्वदति तथैव।।३२८।।

ढौरी लाई सुनत कौ कहि गोरी मुसक्यात।
थोरी-थोरी सकुच सौ भोरी-भोरी बात।।३२८।।

मोहमुपैष्यसि वीक्ष्य तन्मुखं गवाक्षविहारि।
ननु च लुब्धनयनोऽसि तद्रूपं मोहनकारि।।३२९।।

मोहि भरोसौ रीझिहौ उझकि झाकि इक वार।
रूपि रिझावन हार वह ये नारी रिझवार।।३२९।।

पुनर्यथा। मोहनेति। हे मोहन! हे कृष्ण! तां दृष्टवेति शेषः। अहं स्त्रीजातिरपि मोहितास्मित्वं तु मोहिष्यस्येव। यद्यस्या मालतीस्त्रक् मालतीपुष्पकृता कनकयूती स्वर्णयूथिका तस्याः या माला सैवाचरति। कनकयूथिकालायते स्वर्णयूथिकावत् पीतवर्णा भवति-इत्यर्थः। अत्र तत्सौन्दर्यं वर्णयित्वा नायकमभिसारयति। तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रह इति लक्षणात्तद्गुणालङ्कारः।।३२७।। पुनर्यथा सेति। सेति। हे प्रिय बाला-अधुनैव किञ्चित् श्रवणेतद्गुणानामिति शेषः आदरो यस्याः सेत्यर्थः। कीदृशी बाला किञ्चित्त्रपा ईषल्लज्जा तथैव मुग्धतया मुग्धभावेन किञ्चिद्वदतितद्गुणान् इति शेषः। स्वभावोक्तिरलङ्कारः।।३२८।।

पुनर्यथा। मोहमिति। प्रियेति सबुद्ध्यानुकर्षः। गवाक्षे विहारोविहरणं यस्य तद् गवाक्षविहारी वातयन गवाक्षोऽथ इत्यमरः। तन्मुखं वीक्ष तस्या वदनं दृष्ट्वा त्वं माहमुपैष्यसि प्राप्स्यसि ननु च निश्चयेन त्वं लुब्धे नयने यस्य स लुब्धनयनोसितद्रूपं तु मोहनकारीत्यन्वयः। अत्र समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनमितिलक्षणात् काव्यलिङ्गालङ्कारः। मोहनरूपकार्यस्य समर्थनीयस्य तद्रूपं मोहनकारीत्यनेन समर्थनात्।।३२९।।

बालायै माला त्वया दत्ता कुसुमकृतैव।
क्षणमपि तां न जहावहा सुरभीकृता तयैव।।३३०।।

नै को उहिन जुटी करी हरष जुदी तुम माल।
उर तै वास छुटौ नहीं वासु छुटै हूँ लाल।।३३०।।

पश्य त्वं जीवनकरी नीता लता मयैव।
लसति कनकपुष्पीव सा दवसितकोणतैव।।३३१।।

ल्याई लाल विलोकि ये जी की जीवन मूल।
रही भवन के कोन मैं सौन जुही सी फूल।।३३१।।

पुनर्यथा। बालायै–इति। हे प्रियेति! समुद्धयनुकर्षः। कुसुमैः सुमनोभिः कृता या माला बालायै त्वया दत्ता असीत्, अहो–इति कोमलालापे। तां मालां क्षणमपि क्षणमात्रमपि न जहौ न तत्याज। किञ्च तवैव सुरभिकृता सुगन्धीकृता यद्वा सुरभिकुसुमवद्–दृता–इत्यर्थः एतेन स्वाङ्गसङ्गत्यागान-र्हत्वमपि द्योत्यते। तद् दत्तमालाया अपि स्वाङ्गत्यागानर्हत्वमपिद्योत्यते। तद् दत्तमालाया अपि स्वाङ्गत्यागानर्हत्ववर्णनेन तत्प्रीतिं दर्शयन्त्या दूत्या उक्तिः।।३३०।। पुनर्यथा। पश्येति। दवसितं गृहं तत्कोणगतैव सा मयैव नीता कनपुष्णीव लसति तां त्वं पश्य। कीदृशी सा जीवानां जीवनकरी। पुनः कीदृशी लता लतेवकोमलतरा यद्वारलयोरभेदाद् रता प्रीतिमती। अतएव तवजीवस्य जीवनकरी। गृहं गेहो दवसितमित्यमरः। अत्र सेत्युपमेयस्य कनकपुष्पीत्युमानस्य जीवजीवनरूपसाधारण धर्मेण च–इवेत्युमावाचके न सहोपादानात् पूर्णोपमा बोध्या।।३३१।।

हरिरिव हृदये न धर तां हर इव नार्द्धं देहि।
किं तु प्रत्यङ्गं हरे तदङ्गानि विनिधेहि।।३३२।।

नहि हरि लौ हिय राधरौ नहि हर लौ अरधङ्ग।
एक तही कर राखिए अङ्ग–अङ्ग प्रति अङ्ग।।३३२।।

कृता प्रतिज्ञासुज्ञया सत्या कृता मयैव।
नहि चम्पक मालामिव त्वं हृदि धरसि तथैव।।३३३।।

रही पैज कीन्हीं जुमै दीन्हीं तमै मिलाइ।
राखौ चम्पकमाल लौ लाल हियै लपिटाइ।।३३३।।

कृष्णो द्वारि सश्रृङ्खले सकपाटेऽपि तथैव।
केन पथा गच्छति पुनर्गच्छति केन पथैव।।३३४।।

देष्यो जगि तौ वैसियै साकर लगी कपाट।
कित ह्वै आवत जात भजि को जानौ किहि बाट।।३३४।।

पुनर्यथा। हरिरिवेति। हे हरे कृष्ण। हरिर्विष्णुरिव तां हृदये न घर यथा विष्णु हृदये न धारयति पुनः शिव इव अर्द्धमर्द्धाङ्गं न देहि। यथा हरः पार्वतीमर्द्धाङ्गेन वहति तथा त्वं न धारय। किं तु तस्या

अङ्गानि-अङ्गं-अङ्गं प्रत्यङ्गं विनिधेहि धारय। सर्वाङ्गानां प्रियत्वादिति भावः। एतेन उक्तिः प्रस्तुता।।३३२।। पुनर्यथा कृतेति। सुज्ञया मयैव या प्रतिज्ञाकृता तद नयनायेति भावः। सा सत्याकृता-आनीनेत्यर्थः। इदानीं त्वं चम्पकमालामिव तां चम्पकपुष्पमाला सदृशीं हृदि नहि धरसि। किं धारयेति तस्या आशयः।।३३३।। अथ दर्शनानां चातुर्विध्ये स्वप्नदर्शनमुदा हरति। कृष्ण इति। सकपाटे तथैव सशृङ्खले द्वारि। दत्तकपाटे दत्तशृङ्खलेऽपि द्वारि हरिः कृष्णः केन पथा केन मार्गेण-आगच्छति। पुनरेव निश्चयेन केन पथा केन मार्गेण गच्छति, इत्यहं न जाने-इति नायिकायाः सखीं प्रति स्वाप्निकवृत्तान्तसूचकं वचनमिदम्। प्रथमं निद्रारम्भे सकपाट सशृङ्खलद्वारमस्ति। किं च स्वप्नदशायां तस्यागमनं पुनः स्वप्नावसाने त्यक्त निद्रत्वात् सकपाटं सशृङ्खलद्वारं निरीक्ष्य-अजानन्तीव सखीं प्रत्याहेति भावः।।३३४।।

सर्वनिशं सुप्ता सुखं हरिणा हृदयहरेण।
सोऽपि गतः सह निद्रया गम्फित करग्रहेण।।३३५।।

सुष सौ वीती सब निसा मनौ सुवे इक साथ।
मूका मेलि गह्यौ जु छिन हाथ न छोड़त हाथ।।३३५।।

निश्चलतनुलतिका च सा निश्चलं करनयनैव।
प्रियचित्रं पश्यति बभौ वनिता चित्रकृतैव।।३३६।।

दुचितै चित हलतिन चलत हसति न झुकत विचार।
लिषित चित्र पिय लषि चितै रही चित्र लौ नारि।।३३६।।

पुनर्यथा। सर्वनिशामिति। हे सखि इति सम्बुद्यनुकर्षः। अहं हृदयं हरतीति हृदयहरस्तेन हरिणा सहेति सहार्थे गम्यमाने तृतीया सर्वानिशामभिवप्येति सर्वनिशं सुखं यथा भवति तथा सुप्तास्मि। गुम्फितौ च तौ करौ गुम्फितकरयोर्ग्रहः ग्रहणं गुम्पितं करग्रहणं तेन करणभूतेन निद्रागतानि निद्रया च सह सोऽपि हरिरपि गत इति। यद्वागुम्फितकरयोर्ग्रहो ग्रहणं यस्येति कृष्णस्य विशेषणमेतत्। एतेन तेन सहसुखं सुप्ताऽस्मि यदा गुम्फित करग्रहो जातस्तदा निद्रागता तयैव सह सोऽपि गत इति स्वप्नवृत्तन्तान्तानु-कथनमिति।।३३५।।

अथचित्रदर्शनमाह। निश्चलेति। निश्चला तनुलतिका यस्याः सा निश्चलौ करौ नयने च यस्याः सा प्रियस्य चित्र पश्यतीति सखीं प्रति वदति। के इव चित्रीकृता वनितैव-अत्र-इवार्थे-एवशब्दः। यद्वा प्रिये! चित्रं पश्यति सति सा वनिता चित्रीकृता-एव बभौ-इत्यन्वयः। अत्र पूर्णोपमा।।३३६।।

कराङ्गुलीयकदर्पणप्रतिबिम्बितहरिमेव ।
पृष्ठस्थितमपि राधिका पश्यति सखि सुखमेव।।३३७।।

कर मुँदुरी की आरसी प्रतिबिम्बित पिय पाइ।
पीठि दिए निधरक लषै इक टक डीठि लगाइ।।३३७।।

राधा हरि तनु चिन्तया जाताहरिरूपैव।
दर्पणगतमपि निजमुखं दृष्ट्वा मुह्यति सैव।।३३८।।

पिय के ध्यान गही रही रही वही ह्वै नारि।
आपु-आपु ही आरसी लषि रीझत रिझवार।।३३८।।

अथच्छायादर्शनमाह। कराङ्गुलीति। राधिकैव निश्चयेन पृष्ठस्थितं पश्चाद्भागेव वर्तमानमपि हरिं सुखमनायासेनेति भावः। पश्यति। कीदृशं कराङ्गुलीकस्य यद्दर्पणं तस्मिन् प्रतिबिम्बितं प्रतिबिम्बरूपेण वर्तमानमित्यर्थ;। तृतीया विभावना। पृष्ठभागावस्थानरूपप्रतिबन्धकस्य सत्त्वेऽपि तद्दर्शनरूपकार्योत्पत्तेरिति दिक्।।३३७।। अथ दर्पणदर्शनमुदाहरति। राधेति। सखी सखीं प्रति तस्या ध्यानदर्शनदशामाह। सा राधा हरेस्तनुः हरितनुः हरितनोश्चिन्तया ध्यानेन सारूप्यावस्था प्राप्तिर्भवतीति व्यज्यते। तेन कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यापिबत् स्तनमित्यादि श्रीमद्भागवताशयोऽनुगमः।।३३८।।

प्रिय सामीप्यमवाप्य सा हर्षयुता ध्यानेन।
क्षणकम्पा खिन्ना क्षणं क्षणं युता पुलकेन।।३३९।।

ध्यान आन ढिग प्रानपति मुदित रहत दिन राति।
पलकम्पित पुलकित पलकि पलक पसीजत जाति।।३९।।

आगच्छति गच्छति पुनः कृष्णोऽनेन पथैव।
न तं ह्रिया पश्यामि हृदि वरीवर्ति वाञ्छैव।।३४०।।

कैवा आवत इह गली रहौ चलाइ चलै न।
दरसन की साधै रही सूधे होइन नैन।।३४०।।

अथ सामीप्यं प्रापकं ध्यानदर्शनमाह। प्रियेति साहर्षयुता विरहदशायामपि ध्यानेन प्रियस्य सामीप्यमवाप्य सात्त्विका विभावात् क्षणं कम्पो यस्याः सा क्षणं खिन्ना स्वेदयुक्ता पुनः क्षणं क्षणमात्रं पुलकेन रोमाञ्चितेन युता-आसीदित्यन्वयः। अत्र वियोगदशायामपि हर्षकम्पस्वेद रोमाञ्चसात्त्विकाविर्भाववर्णनेन ध्यानात् प्रियसमीपस्थेव सा जातेति भावः। 'तेन ध्यान प्राप्ताच्युता श्लेष निर्वृत्या क्षीणमङ्गलां इत्यादि श्रीमद्भगवताशयोऽनुगत इति।।३३९।। साक्षाद् दर्शन मुदाहरति। आगच्छतीति हे सखीति सम्बुध्यनुकर्षः। कृष्णः हरिः अनेनैव पथा मार्गेण आगच्छति पुनः गच्छति। तत्कृष्णं ह्रिया लज्जया अहं न पश्यामि। किन्तु हृदिदर्शनस्य वाञ्छैव वरीवर्ति-इत्यन्वयः। एतेन संदृश्य लज्जाभावप्राबल्येन सम्यग्दर्शनं न भवतीत्यर्थः। किन्तु पुनः पुनर्दर्शनवाञ्छैव मेऽस्तीति प्रीत्युत्कर्षो दर्शित इति पूर्वानुरागे चिन्तारूपाऽस्मर-दशाऽवगन्तव्या।।३४०।।

तव रूपस्याद्भुतकथा कथं हरे प्रवदामि।
यन्निमेषमपि लक्षितेऽनिमेषतामुपयामि।।३४१।।

लाल तुम्हारे रूप की कहौ रीति यह कौन।
जासौ लागत पलक दृग लागत पलक पलौन।।३४१।।

निजप्रयोजनसिद्धये वदाम्यहं न तवैव।
कृष्णप्राणप्रियोऽसि मे प्राणाः प्रिया ममैव।।३४२।।

अपनी गरज न बोलियत कहा निहोरौ तोहि।
तू प्यारे मो जीव कौ मो जिय प्यारौ मोहि।।३४२।।

अथ नायकं प्रति नायिकाया उक्तिः। तवेति। हे हरे! हे कृष्ण! तवरूपस्याद्भुतकथा–आश्चर्यरूपा वार्त्ता कथमहं तां प्रवदामि, तदेव प्रतिपादयति। यत् यस्मात् निमेषमात्रमपि रूपे लक्षिते सति–अहम् निमेषतामुपयामीत्यर्थः। अत्र निमेषमात्रं रूपे लक्षिते निर्निमेषभावप्राप्ति कथनेन सौन्दर्यातिशयं तव रूपेऽस्तीति व्यज्यते। तत्स्मरणान्निर्निमेषता प्राप्तिरवगन्तव्या। किञ्च। अहो रूपमिति, चकितास्मीति भावः। अत्र निमेषाऽभावरूपानिष्टप्रतिलम्भादनिष्टस्याप्यवाप्तिश्च तदिष्टार्थ समुद्यमादिति–लक्षणाद्विषादालङ्कृतिः।।३४१।।

पुनर्यथा। निजेति हे कृष्ण! निजप्रयोजनसिद्धये स्वार्थलाभाय त्वां प्रति–अहं प्रवदामि तव प्रयोजनाय नैवेति। एतेन मम त्वां प्रतिवाग्विलासे सति ममैव प्राणरक्षणरूपः स्वार्थः न कोऽपि तव स्वार्थ इति प्रतिपादयति। यतस्त्वं मे प्राणप्रियोऽसि। प्राणास्तु ममैव प्रिया इत्यन्वयः। अत्र समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थमिति लक्षणात् काव्यलिङ्गालङ्कारः। मे प्राणा ममैव प्रिया इति प्राणरक्षणरूप कार्यस्य समर्थनाल्लक्षणानुगतिः।।३४२।।

निर्मोहं त्वामनुगतं हृदयं मोहि ममैव।
दृष्टे जीवितमस्ति मेऽदृष्टे त्वयि तन्नैव।।३४३।।

तोही निर्मोही लग्यौ मोही यहै सुभाइ।
अन आयै आवै नहीं आयै आवत आइ।।३४३।।

प्रीतिपुरे माधव! महाविपदाकर्णि मयैव।
यत्र निरागतिदण्ड इति दण्डयश्चरसि मुदैव।।३४४।।

छुटन नयै यतु नैकु वस नेह नगर ग्रह चाल।
मारे फिर फिर मारियतु षूनी फिरत षुसाल।।३४४।।

पुनर्यथा। निर्मोहमिति। कृष्ण! इति सम्बुद्ध्यनुकर्षः। निर्मोहं मोहरहितं निस्नेहमिति यावत् त्वां

प्रति मोहोऽस्यास्तीति मोहि स्नेहयुतं ममैव मनोऽनुगतमस्ति। यत्र-यत्र त्वं गच्छसि तत्र-तत्रैव गच्छतीति भावः। त्वयि दृष्टे सति मे जीवितमस्ति। पुनस्त्वयि-अदृष्टेऽदर्शनमुपयाते सति तज्जीवनं मेनास्तीत्यन्वयः। एतेन त्वं निर्दयोऽसि-इति कोपोक्तिर्व्यज्यते। तस्मान्ममोपरि दयां कृत्वा सदैव दर्शनपथं याहीति प्रार्थनरूपो वाक्यार्थध्वनिरित्यलं पल्लवितेन।।२४३।।

पुनर्यथा। प्रीति-इति। हे माधव! प्रीतेः पुरं प्रीतिपुरं तस्मिन् मया महती विपदाकर्णि श्रुता। एव निश्चयेन तदाह। यत्र प्रीतिदुरेनिरागसिनि निरपराधे दण्डां भवति। दण्ड्यश्च सापराधोजन मुदैव हर्षेणैव चरतीत्यन्वयः। एतेन निरपराधे देहादौ तद्वियोगजनितसन्तापरूपो दण्डः दण्ड्यनेत्रादीनां कटाक्षविलासादिभिर्हर्षेण सञ्चारात्। यतो नेत्राभ्यामेवप्रीतिपत्तनमवगाहितमतताविव सापराधाविति तस्या आशयः। एतेन तत्प्रीतिपुरं त्वदीयामिति तस्मिन् दुर्विनयं दृष्ट्वा मयोक्तं नीत्या वर्तितव्यमिति भावः। अत्रापि कोपोक्तिरेव व्यज्यते। तस्मिन् दुर्विनयित्वरूपदोषोद्घाटनादिति।।३४४।।

प्रेमपत्तने नाथ किमु जाता निर्दयतैव।
क्वाऽपि मया न श्रुतमहो मृतमारणमत्रैव।।३४५।।

निर्दय नेह नयो निरषि भयौ जगत भयभीत।
यह न कहू अब लौ सुनी मरे मारियतु मीत।।३४५।।

मुखे मुखेऽनुश्रुतिरियं श्रुतौ श्रुतौ श्रुतिरेव।
जने जने पश्यामि हा कृष्ण कृष्णकृत एव।।३४६।।

दुःष हा इन चर्चा नहीं आनन आनन आन।
लागी फिरत ढकी दियै कानन कानन कान।।३४६।।

पुनर्यथा। प्रेमपत्तने-इति। अहो! इत्याश्चर्ये हे नाथ! प्रेम्णः पत्तनं नगरं यद्वा प्रेम-एव पत्तनं नगरं तस्मिन् किमु-इति परिप्रश्ने निर्दयतयैव जातामृतस्य मारणं मया क्वापि न श्रुतम्। अत्रैवश्रुतमित्यन्वयः। हे नाथ! इति सम्बुद्धया नायकं प्रति नायिकाया उक्तिः। तव विप्रलम्भे अहं मृतेव जाताऽस्मि। पुनः कामस्याभिलाषादिदशदशामध्ये मरणदशाऽस्ति सा जाता तदेव मृतमारणमिति भावः। तदुक्तं भरतेन-'रत विच्छेद हेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायं तु तद्वाच्यं चेतसा काङ्क्षितं तथा। वर्ण्यते तु यदि पत्युज्जीवनं स्याददूरतः। एष एव करुणात्मकविप्रलम्भविषय इति।।३४५।।

पुनर्यथा-मुखे-मुखे-इति। हा इति खेदे हे कृष्ण! जने-जने-अहं त्वां पश्यामि। कृष्णकृते। कृष्णार्थमेव-इति। श्रुतौ श्रुतौ सर्वस्य कर्णे-कर्णे-इयमेव श्रुतिः श्रवणं जातमित्यर्थः। एतेन त्वत्प्रीतिर्मयि विख्याता जाता तस्मात् त्वमपि मां प्रति प्रीतिपूर्वकं वर्तस्वेत्यर्थः।।३४६।।

नयने माधव! तावके मत्तरूपमदनेन।
सर्वत्रैव प्रथयतस्तव चरितं त्वरितेन।।३४७।।

वहके सब जियकी कहत ठौर कुठौर लषैन।
दिन औरे छिन और से ये छवि छाके नैन।।३४७।।

क्षण मपि मोहन! गेहतो बहिरवतिष्ठ मुदैव।
यावत्करपदरञ्जकं रक्तं भवतु ममैव।।३४८।।

नैकु उते उठि बैठिये कहा रहे गहि गेह।
छुटी जात नहि दी छिनक महदी सूषन देहु।।३४८।।

वामा रूक्षतया दृशोऽमन्दस्मितहसितेन।
मानं विज्ञापितवती बबुधे प्रियोऽपि तेन।।३४९।।

चितवन रूषे दृगन की हरसी विन मुसक्यान।
मान जनायौ मानिनी जान लियौ पिय जान।।३४९।।

पुनर्यथा। नयने-इति। हे माधव! तावके नयने रूपमदेन मत्ते जाते। अतस्त्वरितेन शीघ्रतया तव चरितं सर्वत्रैव प्रथयते विस्तारयत इति। एतेन त्वन्नेत्राभ्यामेव तच्चरितं प्रथितं प्रथितमित्युक्त्या ये मदमत्तास्तेषां चरितमनवधानतया सर्वत्र प्रथितं भवतीति वास्तवोऽर्थः।।३४७।।

पुनर्यथा क्षणमिति। हे मोहन! गेहतो गृहाद्बहिः क्षणमपि तिष्ठ। मुदैव हर्षेण यावन्मदीयं करपदरञ्जकं वस्तुमेहदी'-इति हिन्दीभाषायां प्रसिद्ध रक्तवर्णं भवेदिति। एतेन मद्रूपमोहितो दिवानिशं मत्समीपमेव वर्तते तस्मात् क्षणमपि बहिस्तिष्ठेति प्रीतिपूर्वकमेव स्वाधीनभर्तृकाया उक्तिः। अत्र न रसाभावशङ्का-ऽवगन्तव्या।।३४८।।

अथ मानाख्य विप्रलम्भे मानदशामाह। वामेति। सा वामा दृशः दृष्टेः रूक्षतया न मन्दस्मितं यस्मिन् एतादृशं यद्धसितं हासः, तेन मानं विज्ञापितवती। प्रियोऽपि हरिरपि तेन हेतुना मानं बुबुधे ज्ञातवानित्यर्थः। एतेन-अन्यथा सस्निग्धदृष्ट्या मन्दस्मितयुक्तहसितमुखी-आस्ते इदानीं तु न तथेति तद्विपरीतलक्षणलक्षितत्वात् मानवतीयमिति प्रियोऽपि बुबुधे-इति भावः।।३४९।।

प्रभवति हिमो हिमर्तुना मानः पत्यगुणेन।
नवनीतं युवतीमनो मृद्वपि कठिनमनेन।।३५०।।

पति रितु औगुन गुन बढ़त मानमाह कौ सीत।
जात कठिन ह्वै अति मृदौ रमनी मन नवनीत।।३५०।।

असौ गुडाकुसुमायतेऽतिथिरपि तिथौ यदैव।
समागतो मानेन सह कथमपि गच्छति नैव।।३५१।।

वाही दिन नैना मिट्यो मान कलह कौ मूल।
भले सिधारे पाहुनै ह्वै गुडहर कौ फूल।।३५१।।

पुनर्यथा। प्रभवतीति। हिमस्तुषारे हिमर्तुना प्रभवति, मानस्तु मत्युरगुणस्तेन पत्यपराधेन प्रभवति प्राबल्यं याति। किञ्च मृद्वापि नवनीतमनेन हिमर्तुना कठिनं भवति। तथा मृद्वपि युवतीनां मनोऽनेन मानेन कठिनं भवतीत्यन्वयः। अत्र हिमर्तुमानाभ्यां मृदुलतर नवनीतयुवतीमनसोः काठिन्यरूपधर्मापादकत्वे क्रमेणान्वयः। तेन यथासङ्क्यालङ्कारः। 'यथसङ्क्यं क्रमेणैव क्रमिकाणां समन्वयः' इति लक्षणात्। हिमर्तुगुणापत्यगुणयोरपि हिमवृद्धिमानवृद्ध्योर्हेतुमत्वे क्रमेणान्वयो बोद्धव्यः।।३५०।।

प्रणयमानमुदाहरति। असाविति। असावित्युङ्गुल्या निर्देशः। अतिथिस्तद् गृहागतः कोऽपि सम्बन्धी तद्गृहे यदैव तिथौ समागतः तदाप्रभृत्येव मानः समागत इति। मानेन सहैवातिथिः समागगत इति सख्याः सखीं प्रत्युक्तिः। स च अतिथि गुडाकुसुमायते गुडाकुसुम इवाचरति। वज्रः स्नक् स्त्री स्नुही गुडेत्यमरः। गुडाकुसुममपि यद्गृहे समागतं तत्र कलहकारि भवतीति लोके प्रसिद्धमेवमेतदागमनेऽपि कलहो जात इत्यर्थः। अत्रातिथेः पत्युर्वा प्रवासगमनवार्त्तां दृष्ट्वा तदनिच्छन्त्या नायिकाया मानोत्पत्तिरिति प्रणयमानहेतुरयमतिथिरिति सख्यभिप्रायः। प्रणयमानलक्षणं तु प्रतिबिम्बाख्यं भरतसूत्रोक्तमवगन्तव्यम्। स चातिथिर्मानश्च कथमपि न गच्छतीति तद्वियोगमसहमानानां सखीनामुक्तिः। अयमतिथिः पतिं प्रवासयति प्रवासवार्त्ताकरणात् सा च तत्सत्कारव्यवहारं दृष्ट्वा क्रुद्धेव जातेति मानाङ्कुरप्रतिपत्तिः। अत्र अत्र–आक्षेपोन्ये विधौ व्यक्ते निषेधे च तिरोहिते। अतिथिर्मानेन सहसमागत इति श्लिष्ट पदोपादानादविधिः। कदाऽयं गमिष्यतीति निषेधस्तिरोहित इति कथं कथमपि गच्छति नैवेति काकुस्वरेणोक्तम्। यद्वा सहोक्तिरपि सम्भवति।।३५१।।

तनूकृत्य लज्जामहो यत्तव हसितमतीव।
तच्छङ्कामृच्छति विषभ्रमं मधुरशुण्ठीव।।३५२।।

षरे अदव अठिला हठी उर उपजावत त्रास।
दुसह सङ्क विसकी करै जैसे सौठ मिठास।।३५२।।

सखि समानमानावुभौ जहर्तु मानं नैव।
परस्परानुनयं हृदि प्रेक्षन्तौ मनसैव।।३५३।।

दोउ अधिकाई भरे ये कैगों गहराइ।
कौन मनावै को मनै मानै मति ठहराइ।।३५३।।

पुनर्यथा। तनूकृत्येति। हे बाले इति सम्बुद्ध्यनुकर्ष। लज्जां तनूकृत्य लंघयित्वा यदतीव तव हसितं तन्मे मनसि शङ्कामच्छति ददाति। काकमिव मधुराचारौ शुष्ठी विषभ्रमं यथेति। अत्र बालाया अकस्मादकारणाद'ति हसितमालोक्य नायकस्य मानवतीयमिति शङ्का जाता। अत्रउपमेव भूतायास्तस्या

उपमानभूताया मधुरशुष्ठ्याश्च–उभयोरपि शङ्कास्पदरूपसाधारणधर्मेण इत्युपमावाचकेन सहोपादानात् पूर्णोपमा बोध्या।।३५२।।

अथ–उभयोरपि प्रणयमान मुदहरति। उभौ नायिका–नायकौ समानतुल्यो मानो ययोस्तौ मानं प्रणयमानं नैव जहतुः। मनसैव हृदि परस्परयोरनुनयं विनयं प्रेक्षन्तौ–आस्तामित्यन्वयः। अत्रोभयोः परस्परं प्रीत्युत्कर्षो व्यज्यते। पूर्वमानप्रणयकृतकालुष्यवशात् परस्परानुनयवाञ्छा परस्परयोरेवास्ति इति दिक्।।३५३।।

बाले मानं त्यज विहस हृदि धारय हरिमेव।
चल–चल चञ्चललोचने लसिता किं चकितेव।।३५४।।

हसि हसाइ उर लाइ उठि हरिन रुषौ है वैन।
जकित थकित ह्वै तकि रहै तकत तिलौछे नैन।।३५४।।

मानं कुरु नाहं प्रिये! वक्ष्ये शपथशतेन।
कथं सहसिते भूलते वितरिष्यति कोपेन।।३५५।।

मानकरत वरजत नहौ उलटि दिखावत सौँह।
करी रिसौ ही जाइगी सहज हसौ ही भौंह।।३५५।।

अथ मानिनीं प्रति सखी वचनानि। बाले! इति। मानं त्यजत यथापूर्वं तथा–इदानीमपि बिहस हास्यं कुरु एवं निश्चयेन हृदि हरिं कृष्णं धारय। चञ्चले लोचने यस्यास्तत्सम्बुद्धौ चल–चल–अत्यादरे वीप्सा। चकितेव किं लसितासीत्यन्वयः। अत्र मानापनोदनाय शिक्षारूपं सखीवचनमिदम्।।३५४।। पुनर्यथा। मानमिति हे प्रिये! मानं कुरु, इति–अहं शपथशतेन त्वां प्रति न वक्ष्ये नकथयामि मानं कर्तुं न वारयामीत्यर्थः। किन्तु हसितेन सहिते सहजहसितयुते इमे भूतले कथं केन प्रकारेण कोपेन वितरिष्यतीत्यन्वयः। 'आक्षेपः स्वयमुक्तस्य प्रतिधेषो विचारणादिति लक्षणाद्–आक्षेपालङ्कारः। प्रथमं मानापनोदननायागतामा कुर्वीति स्वयमुक्तवती पुनर्विचारयित्वाऽहं मानं कुरु त्वां प्रति–अहं न वक्ष्ये–इति लक्षणानुगतिः।।३५५।।

उज्ज्वलतामिच्छसि यदि स्निग्धे मनसि सदैव।
सा च रजो राजसगुणस्पर्शं भवति विनैव।।३५६।।

जो चाहौ चटकन घटै मैलो होइन मित्त।
रज राज न छुवाइये नेह चीकनै चित्त।।३५६।।

सुन्दरि नन्दसुतस्य यज्जडतेयं प्रतिभाति।
नार्ककुसुमकलिकामलिभ्रमवानलिरुपयाति।।३५७।।

षरी पातरी कान्ह की कौन वहाऊँ वानि।
आककली नरली करै अली अली जिय जानि।।३५७।।

हे मानिनि! इति सम्बुद्ध्याक्षेपः। स्निग्धे स्नेहयुक्ते मनसि यदि त्वं सदैव–उज्जलवतां निर्मलतामिच्छसि चेत्तर्हि सा च उज्जलता रज इव राजस गुणः तस्य स्पर्शं विनैव–उज्ज्वलता भवति। एवं स्निग्धे मनसि राजसगुणस्पर्शं विनैव–उज्ज्वलता शृङ्गारित्वं भवतीति भावः। शृङ्गार; शुचिरुज्ज्वलः–इत्यमरः। किञ्च स्निग्धादिश्लिष्ट विशेषणेन रज एव राजस इत्यभेदरूपकगर्भितोऽयं श्लेषालङ्कारः।।३५६।।

पुनर्यथा। सुन्दरीति। नन्दसुतस्य कृष्णस्य यत् यस्माद्–इयं जडता प्रतिभाति तवानुनयार्थं ना याति। यद्वा डलयोरभेदादुज्जलता जलभावे नीचस्वभाव इत्यर्थः। अत्र तत्प्रसादाय नायकस्य जड़ता वर्णिता। तव कोमला प्रकृतिस्तस्य जडतेयं य त्वां प्रति नायाति यथा–अर्ककुसुमकलिकामलि-भ्रमवान्–अलिर्भ्रमरो न याति। तत्र तस्य जडतैव भ्रमरस्तु मिथ्यैवेति भावः। एवं तेऽपि तवापि कोमल प्रकृतिं न जानाति मानं श्रुत्वा मां प्रति कोपयुक्तेति भ्रमवाननुयार्थमपि नायातीति। स्याद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृति रिति लक्षणाद् दृष्टान्तालङ्कारः।।३५७।।

सम्मुखता न कृता त्वया मानिनि शपथशतेऽपि।
कथमेते भ्रुकुटीलते तिर्यक् कृते नतेऽपि।।३५८।।

सोहै हू चाहौ नते किती दिखाँई सौह।
एहौं क्यों वैठी कियैं यैठी ग्वैठी भौंह।।३५८।।

अपररतः प्रिय! इत्यहं मन्ये जडवचनानि।
किं रसना मधुरसमिता रस्यति बिम्बफलानि।।३५९।।

तौ रस राच्यौ आन रस कहै कुटिलमति क्रूर।
जीव निवौरी क्यों लहै वैरी चखि अंगूर।।३५९।।

पुनर्यथा। सन्मुखेति। हे भामिनि शपथशतेऽपि कृते सति नायकेनेति शेषः। यद्वा मयेति शेषः। त्वया सम्मुखता साम्मुख्यं न कृतम्। भ्रुकुट्यौ च ते लते भ्रुकुटिलते एते भ्रुकुटिलते पूर्वं नतेऽपि सरलेऽपि कथं केन प्रकारेण तिर्यक् कृते–इति मानापनोदनाय सखीवचनम्।।३५८।। पुनर्यथा। अपरेति। अपरा सुरतोऽपररसः प्रियदूतीमानिवचनानि यानि श्रुतानि तानि जडानामज्ञानां वचनानि–अहमन्येन चायं सुज्ञवादः। तदेव दृष्टान्तेन समर्थयति। मधुररसमिता या रचना स किं निम्बफलानि रस्यति नहीति भावः। एतेन त्वद्रूपमाधुर्यवशाद् अन्यासु निन्द्यनिम्बफलतुल्या न तस्यानुरागो भावतेति भावः। अत्र–उक्तिरर्थान्तरन्यास स्यात्सामान्य विशेषयोरिति लक्षणाद्–अर्थान्तरन्यासालङ्कारः। अपरतः दूतीमोनि प्रिय इतीमानि वचनानि जडैरुक्तानीति विशेषोऽमिहितः। तत्समर्थनार्थं लोकप्रवादरूप-

मधुररसरसनाया निम्बफलानि न रोचन्त इति सामान्यमुपात्तमिति लक्षणानुगतिः। अपरतश्च प्रियो नास्तीति समर्थनीयार्थो लोकप्रवाद रूप रसनादृष्टान्ते समर्थित इति काव्यलिङ्गालङ्कारः। किञ्चा नयोर्नीरक्षीर न्याये नैकी भावात्सङ्करै इत्यलं विस्तरेण।।३५९।।

न कुरु नितम्बिनि! गर्वमिति सर्वं समयविलासि।
भवति शुचौ छाया हिता न भवति माघे मासि।।३६०।।

गहिरी ताख न कीजिये समय सुहागहि पाइ।
जी की जीवन जेठ लौ माह न छाह सुहाय।।३६०।।

हा हा दर्शय सुखमहो सफलय दृशं दृशैव।
चन्द्रमसं कुरुमन्दमिति पङ्कजमप्यधुनैव।।३६१।।

हा हा वदन उधार दृग सफल करै सब कोय।
रोज सरोजन कै परै हँसी ससी की होय।।३६१।।

पुनर्यथा। न कुर्वीति। हे निम्बिनि गर्वं न कुरु किन्तु मानं मुञ्च सर्वं वस्तु समयविलासि भवतीति। समये-समये सर्वं शोभते। तद्दृष्टान्तमाह-शुचौ ग्रीष्मे छाया हितकारिणी सैव छाया माघे मासि हिता न भवतीत्यन्वयः। अत्रापि सर्वं समये विलसति-अतस्त्वं मानं मुञ्च नायं मानावसर इति सामान्यमभिहितं तत्समर्थनाय छाया ग्रीष्यर्तौ हिता न शिशिरर्त्ताविविशेष उपात्तः। अर्थान्तरन्यासालङ्कारः इति। अत्र काव्यलिङ्गापत्तिः। वस्तुतस्त्वनयो सङ्कर एवेति दिक्।

पुनर्यथा। हाहेति। हा हा-इति दीनत्व भावनया त्वां विज्ञापयामीति सख्या उक्तिः। अहो-इतिकोमलालापे। मुखं निजं दर्शय तस्मै-इति शेषः। दृशा-एव निजदृष्ट्या तस्य दृशं सफलय सफली कुरु। किञ्चाधुना मुखं दर्शयित्वा चन्दमसं मन्दं कुरु, त्वन्मुखदर्शनने चन्द्रो मन्दद्युतिर्भविष्यति-इति भावः दृशा दृक्पातेन पङ्कजानामपि मन्दद्युतिर्भविष्यतीति भावः। एतेन त्वं चन्द्रमुखी पङ्कजनयनाऽसीति व्यज्यते।

निजस्तुतिं हिमकरमुखि! त्वं कारयसि हठेन।
क्वापि नाली रमते सखि विमधुवज्रकुसुमेन।।२६२।।

बहलि बड़ाई आपनी करवावत मति भूल।
विन मधु मधुकर के हियै गड़ै न गुड़हर फूल।।२६२।।

तीष्णदृशो विस्तृतदृशः कति न युवत्यः सन्ति।
साऽपरैव दृष्टिर्यया चतुरा वशी भवन्ति।।२६३।।

अनियारे दीरघ नयन किती न तरुनि समान।
वह चितवन औरै कछू जिह वस होत सुजान।।२६३।।

को लाभः प्रिय खेलया माधव हठं विहाय।
तामनुनय मन्दस्मितामुरुशपथा सुविधाय।।३६४।।

कहा लेहु गे खेल मैं तजौ-अटपटी बात।
नैकु हसौही है भई भौहै सौहै षात।।३६४।।

पुनर्यथा। निजेति। हे हिमकरमुखि त्वं निजस्तुतिमन्या नायिकाभ्योऽहं श्लाघनीयगुणास्मीति हठेन कारयसीति काकुस्वरेण सख्या उक्तिः। माकारयत्यर्थः। त्वं तु स्वयमेव श्लाघ्यगुणाऽसि किमन्योक्त्येति सख्यभिप्रायः। तदेव दृष्टान्तेन समर्थयति। विगतं मधु यस्मिन् तविमधु च तद्वज्रकुसुमं तेन-अलिर्भ्रमरः क्वापि न रमते तस्मात्त्वं समधुकुसुमसमासि त्वय्येव नायकस्य मनोभिरमते-इति मानापनोदाय सखीवचनम्। अत्रापि काव्यलिङ्गालङ्कारः।।३६२।। पुनर्यथा। तीक्ष्णेति तीक्ष्ण दृग् यासां ताः तीक्ष्णदृशः विस्तृता विस्तीर्णादृग् यासां ताः विस्तृतदृशो युवत्यः कति न सन्ति-अपितु वह्वयः सन्ति। किन्तु सा दृष्टिः अपरा अन्यैव। यया दृष्ट्या चतुराः नागराः वशीभवन्ति-इत्यन्वयः। एतेन चतुरवशीकरणक्षमा तवैव दृष्टिरिति सख्यभिप्रायः। तेन तदुपरि दृक्पातं कुरु मानं मुञ्जेति भावः।।२६३।। अथ मानावसरे नायकं प्रति सखी वाक्यानि। क इति। हे माधव! खेलया को ऽसौलाभो भवता प्राप्तः तस्मात् खेलां त्यज। खेला क्रीडा च कूर्दनमित्यहं हठं विहाय त्यक्त्वा मन्दस्मितां मन्दहसितां तां प्रियामुरुशपथानि विधाय कृत्वा-अनुनयमानं मोचयेत्यर्थः। अत्र नायिकानुगा सखी नायकं प्रति शिक्षारूपेण वदतीति भावः।।३६४।।

एहि तत्र माधव मानं त्यक्ष्यति सैव।
त्वदालोचसङ्कोचतः किमपि वदिष्यति नैव।।३६५।।

चलौ चलै छुटि जाइ गौ हठ रावरे सकोच।
षरे चढ़ाये ते अवर आयैं लोचन लोच।।३६५।।

रसवत्या निकटे रसः प्रिय! विलसति विरसेऽपि।
ददती क्षुरति मधुरतां ग्रन्थौ कठिनतरेऽपि।।३६६।।

अन रस हू रस पाइये रसिक रसीली पास।
जैसे सोटे की कठिन गाठौ भरी मिठास।।३६६।।

पुनर्यथा। एहीति। हे माधव! तत्र नायिकायाः समीपे एहि आगच्छ मुदा हर्षेण सा मानं त्यक्ष्यति। तव-आलोचस्त्वदालोचस्त्वन्मुखदर्शनमिति यावत्। तस्माद् यः सङ्कोचः तस्मात्किमपि तवापराध वचनानि नैव वदिष्यति न कथयिष्यतीत्यर्थः। अत्र सखी मानापनोदाय

नायकमभिसारयति।।३६५।। पुनर्यथा। रसवतीति। हे प्रिय! रसोऽस्यामस्तीति रसवती। तस्या रसवत्या निकटे विरसेऽपि समये मानावसरेऽपीत्यर्थः। रसः शृङ्गारः यद्वा रसो हर्षः यद्वा रसः प्रीति र्विलसति। विलासं प्राप्नोत्येव। तद्दृष्टान्तमाह। कठिनतरेऽपि ग्रन्थौ-इक्षुः अतिमधुरताम् अधिकमाधुर्यं ददातीत्यन्वयः। तस्मात्त्वं तत्समीपं गत्वा तामनुनय। तस्माद्रसनिष्पत्तिस्त्वयि भविष्यतीति सख्यभिप्रायः।।३६६।।

त्वदुदिततप्तवचोभिरपि रसिकरसो नापैति।
पयः पुनः परिपाकतोऽधिकमाधुर्यमुपैति।।३६७।।

सकल न सुख ताते वचन मोरस को रस षोइ।
षिन षिन औटै छीर लौ षीर सवादिल होय।।३६७।।

न भेदेन न सहायकौ नोपायैरपि सैव।
सन्ध्या हठ दुर्गं गता साधय सुरसयथैव।।३६८।।

कैहू बात न लगै थाके भेद उपाइ।
हठि हठ गढ़ बैठी सुचलि लीजे सुरँग लगाइ।।३६८।।

अनादरो वचसाकृतस्तव यत्कोवशेन।
ननु च नयननर्त्तनकला प्रथयति रसं रसेन।।३६९।।

सकुच न रहिये स्याम सुनिये सतरौ है वैन।
देत रचौ है चित कहै नेह नचौ है नैन।।३६९।।

नायकं प्रति सखीवाक्यम्। त्वदुतेति। त्वया-उदितानि त्वदुदितानि च तपानि कोपसमयोक्तानि वचांसि तैरपि रसिकस्य नायकस्यरसौ नापैति न गच्छति। तद्दृष्टान्त माह। पयः क्षीरं पुनः परिपाकतः पुनः पुनः पक्वं सत् यथा-अधिकमाधुर्यमुपैति-इति-अन्वयः। दृष्टान्तालङ्कारः।।३६७।। पुनर्यथा नायकं प्रति सखीवाक्यम्। न भेदेनेति। हे प्रिये! इति सम्बुद्ध्यनुकर्षः। सा बाला-इदानीं हठ एव दुर्गं दुर्गमस्थानं तत्र गता भेदेन भेदोपायेन न साध्या सहायकैर्बहुभिरपि न साध्या। उपायैर्दानादिभिरपि न साध्या। किन्तु सुष्ठुरसः प्रीतिः तत्पथैव प्रीतिमार्गेणैव साधय ता मनुनयेति सख्यभिप्रायः। यथा कश्चिद् दुर्गमस्थानं गतः भेदादिभिस्त्रिभिरुपायैर्न सिद्ध्यति किन्तु साम्नैव सिद्ध्यति तथेयमपि सुरसपथा साधनीयेति निष्कर्षः।।३६८।। पुनर्यथा। अनादरमिति। प्रिय! इति सम्बुद्ध्यनुकर्षः। हे प्रिय! तवानादरो यया वचसा वाक्येन कृतस्स कोपवशेन कोपाधीनेन तेनेत्यर्थः। ननु च निश्चयेन तस्या नयनयोः या नर्तनकला चाञ्चल्य चमत्कारः रसेन हर्षेण रसं प्रीतिं प्रथयति। विस्तारयतीत्यन्वयः। एतेन तदनादरं पृष्ठतः कृत्वा ताम्-अनुनय-इति सख्यभिप्रायः।।३६९।।

तामनुनेतुमहो समागतः साधुकृतमेव।
त्यज कनिष्किाऽधिष्ठितं तदङ्गुलीयकमेव।।३७०।।

आपे आप भली करी मैटन मान मरोर।
दूर करौ यह देखि है छला छिगुनिया छोर।।३७०।।

हिम रजनी हिमजलकणैरुपवसतामुपयाति।
अधुना तपनदिनेषु तत्काठिन्यं प्रतिभाति।।३७१।।

सीरे जतननि सिसिरनिशि तहि विरहिन तन पाइ।
वसिवो को ग्रीषम दिननि षरौ परोसित पाइ।।३७१।।

पुनर्यथा। तामिति। अत्रापि प्रिये! इति सम्बुद्ध्यनुकर्षः। हे प्रिय! तां प्रियामनुनेतु महो!–इति कोमलालापे त्वं समागतः। तदेव निश्चयेन साधुकृतं समीचीनं कृतं किन्तु कनिष्ठिकायामधिष्ठितमन्य-नायिकाङ्गुलीयकं त्यज यर्हि–एनं सा द्रक्ष्यति तर्हि तवापराधः सत्यो भविष्यतीति सख्या अभिप्रायः।।३७०।। दूतीमानदशावर्णनम्। अथ नायकं प्रति सखी वाक्येन विरहिण्या दशामाह। हिमेति। उप समीपे वसन्ति ते–उपवसन्तः। समीपवासिनस्तेषां उपवसतां जनानां हिमर्तुरजनी हिमरजनी। हिमरजनी हिमजलकणैः शीतलजलबिन्दुभिः करणभूतैः अपयाति–अपगच्छति। अधुना–इदानीं तपनर्तुदिनेषु तत्तेषां समीपवासिनां जनानां काठिन्यं जीवनाशक्यं प्रतिभातीत्यन्वयः। एतेन तस्या विरहाग्निज्वाला सन्तापसन्दोहै रुपवासिनी हिमर्तुरजन्यां शीतलजलसेकेन जीवति तपनदिनेषु तज्जीवनं कठिनतरं प्रतिभाति–इति विरहनिवेदनाख्यं सखीकर्म–व्याख्यातम्।।३७१।।

हिमतम्यामपि मधुपते ससाहसस्नेहापि।
तदुपस्थातुं न क्षमा सखी सजलवसनापि।।३७२।।

अडि दै आले वसन जाड़ेहू की रात।
साहस कै के नेहवस सषी समै ढिग जात।।३७२।।

रसाम्भोजरसभाजनं सिञ्चति तापशमाय।
पृषदपि न सरति तत्तनौ त्वरिता सखी निनाय।।३७३।।

औंधाइ सीसी सुलषि विरहवरी विललात।
वीचहि सूष गुलाब को छीटौ छुई न गात।।३७३।।

या तपर्तुतपने पुरा मता माघरजनीव।
सैवोशीरकुटी हरे दृष्टा दहन पुरीव।।३७४।।

जिह निदाघ दुपहर रहै भई माघ की रात।
तिह उसीर की रावटी षरी आवटी जात।।३७४।।

पुनर्यथा। हिमतध्यामिति। साहसश्च स्नेहश्च ताभ्यां सहिता ससाहस सस्नेहा साहसं कृत्वा सस्नेहापि सजलमार्द्रवसनं यस्याः सा सखी चहचरी हे मधुपते! हे कृष्ण तत् तामुपस्थातुं तत्समीपावस्थानं कर्तुं हिमतध्यां हिमर्तुनिशायामपि न क्षमा न समर्था बभूवेत्यन्वयः। एतेन तद्विरहाग्निसन्तापाधिक्यं वर्णयन्ती ततसङ्घट्टानमिच्छन्ती सखी प्राहेति भावः।।३७२।। पुनर्ययथा। रसाम्भोजेति। सरसायामम्भोजं रसाम्भोजं स्थलकमलानि यावत् तस्य यो रसो जलं तस्य यद्भाजनं काचकुप्यमिति यावत्। तापक्षमाय तापशमनाय शान्त्यै सखी सिञ्चति। तत्तनौ तस्यास्तनौ देहे। पृषदपि बिन्दुमात्रमपि न सरति न गच्छति। विरहाग्निज्वालया शुष्कत्वात्। तदा सखी त्वरिता सती तद्भाजनं निनाय नीतवतीत्यन्वयः। एतेन तद्विरहसन्ताधिक्य वर्णनेन नायकमभिसारयतीति भावः। अत्र रसाम्भोजरसभाजनसेफरूपकारणस्य पुष्कलत्वेऽपि बिन्दुमात्रमपि न सरतीति कार्याजनिरुक्ता तेन कार्याजनिर्विशेषोक्तिः, सति पुष्कलाकारेण-इति लक्षणाद् विशेषोक्तिरलङ्कारः।।३७३।। पुनर्यथा। येति। या-उशीरस्य कुटीविहारस्थलमितियावत्। पुरा पूर्वं संयोगावस्थायामित्यर्थः। तपर्तुतपने ग्रीष्मर्तुसन्तापे माघरजनीव माघमासरात्रिरिव शीतलसौगन्ध्यादि गुणत्वाद् आसीत् सैव-उशीर कुटी-इदानी विरहावस्थायां दहनपुटीव दृष्टा-अग्निकुटिकेव दृष्टेयमिति शेषः। विरहे शीतलोपचाराः कामोद्दीपनकरा उद्दीपिते च कामे महासन्ताप इति भावः। अत्रोशीरगृहस्य शीतलसौगन्ध्यादि गुणैस्तस्याः सन्तापाधिक्यरूपदोषप्राप्तिरुल्लासालङ्कारः।।३७४।।

विकसितवनवल्लीकुसुमदलपरिमलमादाय ।
प्रथयति वर्षसमीरणो विरहशुचिं दहनाय।।३७५।।

विकसित नव वल्ली कुसुम निकसत परिमल पाइ।
परस प्रजारस विरह हिय वरसि रहे की पाइ।।३७५।।

कति वारं न जगाद सा दृष्ट्वा खद्योतानि।
वर्षति नभसोऽनिलमिति प्रविश प्रविश सदनानि।।३७६।।

विरहजरी लष जी गननि कह्यौ न उहि कै वार।
अरी भाव भजि भीतरै बरसत आजु अँगार।।३७६।।

पुनर्यथा विकसतेति। विकसितानि वल्लीकुसुमानि तेषां यानि दलानि तेषां यः परिमलः सुगन्धस्तद् गुणमादाय गृहीत्वा-एतेन शीतलमन्द सुगन्धेति पवनस्य त्रैविध्यमुक्तम्। वर्ष समीरणः वर्षर्तुपवनः दहनाय सन्तापाय तस्या इति शेषः। विरहशुचिं विरहाग्निसन्तापरूपदोषप्राप्तेरुल्लासालङ्कारः।।३७५।।

पुनर्यथा कतीति। हे हरे! इति सम्बुद्ध्यानुकर्षः। सा बाला मां प्रतीति शेषः। खद्योतानि कीटविशेषाणि दृष्ट्वा कतिवारम् इति न जगाद्। न कथितवती। हे सखिनभसोगगनाद्-अनलं वर्षति तस्मात्त्वं सदनानि प्रविश प्रविशेत्यन्वयः। अत्र वर्षाकालीनकीटविशेष दर्शनेन चमत्कारातिशयत्वात्-शृङ्गारिणां

कोऽपि वर्षर्तुजनितानन्दो भवति। स च तस्याः सन्तापाधिक्यप्रद इति नभसोऽनलवर्षणोत्प्रेक्षा गम्यते। अत्र खद्योतानां खद्योतरूपधर्ममपह्नुत्यिनभसोऽनलमेव वर्षतीत्यनलत्वसमारोपात् शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नइति लक्षणाद् गम्योत्प्रेक्षागर्भितेयं शुद्धापह्नुतिरिति दिक्।।३७६।।

धूम्राभा नेमे घना शुचौ दिक्षु विलसन्ति।
किन्तु धूमधारैव यन्मदनो दहति जगन्ति।।३७७।।

धुरवाहो इन अलि वहै धुवाँ धरनि चहु कोद।
जारत आवत जगत कौ पावस प्रथम पयोद।।३७७।।

जलधारा प्रावृषि भवा पावकतोऽप्यधिकैव।
स च दहति स्पर्शेन सखि दहतीयं दृष्टैव।।३७८।।

पावक झरतै मेह झर दाहक दुसह विसेषि।
दहै देह वाके परस याहि द्रगन ही देषि।।३७८।।

पुनर्यथा। धूम्राया–इति। शुचौ–आषाढमासे इत्यर्थः। धूम्राभा धूम्रवर्णा ये इमे दिक्षु विलसन्ति ते–इमे न घनाः मेधा न सन्तीयर्थः। मेघमण्डलं चतुर्दिक्षु दृष्ट्वोत्प्रेक्ष्यते। किन्तु–इयं धूमस्य धारैव विलसति। कुतोऽयं धूम इत्याकाङ्क्षायां यत् यस्मात्–मदनः कामः जगन्ति लोकान् दहति तस्य मदनाग्नेरियं धूमधारैवेति उक्तास्पदा वस्तूत्प्रेक्षा। 'सम्भावना स्यादुत्प्रेक्षावस्तुहेतुफलात्मना–उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे इति लक्षणात्।।३७७।। पुनर्यथा जलधारेति। हे सखीति नायिकाया उक्तिः। प्रावृषि वर्षाकाले भवा या जलधारा सा च पावकतः अग्नेरपि अधिकैव प्रतिभातीति। आधिक्यमेव प्रतिपादयति। सच पावकः स्पर्शेन न दहत्य यं जलधारारूपोऽग्निः दृष्ट एवेति तदाधिक्यप्रतिपादनाद् अधिकतद्रूपरूपकालङ्कारः। किञ्च वर्षाकालीना जलधारा प्रियं विना कामोद्दीपनकरी तद्दर्शनतोऽपि कामाग्निर्मां दहतीवेति विरहिण्या उक्तिः।।३७८।।

मारेणाहं मारिता तिष्ठामीह मृतैव।
रसाकमलजलसेकतः किं मारयति मुधैव।।३७९।।

मार सुमार करी षरी मरी मरीहिन मार।
सींच गुलाब धरी धरी अरी वरीहिन वार।।३७९।।

लिम्पसि यदघनचन्दनं वारं वारमतीव।
विरहदहनदग्धामहो पुनरपि किं दहसीव।।३८०।।

अरै परै न करै हियौ षरे जरे पर जार।
लावत धोरि गुलाब सौ मलय मिलै घनसार।।३८०।।

पुनर्यथा। मारेणेति। हे सखीति सम्बुद्ध्यनुकर्षः। मारेण कामेन–अहं मारिता ताडिता बाणादिभिरिति शेषः। मृतैव–अत्रापि–एव शब्दः–इवार्थे ज्ञातव्यः। तेन मृततुल्याऽहं तिष्ठामीति। इह मुधैव वृथैव रसाकमलजलसेकतः स्थलाब्जनीरसेकतः मां किं मारयति मा मारयेत्यर्थः। एते न त्वं विरहाग्निसन्तापशान्त्यर्थं स्थल कमलजलैः मामुपचरसि। तस्मात्तदाधिक्यमिति तदभिप्रायः। तस्मान्मां शीतलोपचारैर्मा–उपचर इति निषेधोऽपि व्यज्यते। अत्र विरुद्धस्थलकमलजलसेकतो मारणरूपकार्य सम्पत्तेर्विरुद्धात्कार्य सम्पत्तिर्दृष्टा काचिद्विभावनेति लक्षणाद्विवनेऽति लक्षणाद्विभावना–ऽलङ्कारः।।३७९।। पुनर्यथा। लिम्पसीति। हे सखीति सम्बुद्ध्यनुकर्षः। यद्यस्मात् घनं च चन्दनं च घनचन्दनं कर्पूरमिश्रितचन्दनं वारं–वारं–अतीव मम देहे लिम्पति शीतलत्वायेति भावः। तद्विरहदहनेन पूर्वं दग्धां मां दहसीवेत्यन्वयः। अत्र तापनिवर्तकधनचन्दनादिलेपनतः पुनर्दग्धां मां दहसीवेति–अनुक्तास्पदोत्प्रेक्षया सन्तापाधिक्यरूपकार्यसम्पत्तेर्विरुद्धात्कार्यसम्पत्तिदृष्टा काचिद्भावनेति लक्षणाद्विभावनाऽलङ्कारः।।३८०।।

नाथेनाहं विस्मृता जलदागमसमयेऽपि।
ददति वारि नहि वारिदा वारि पिबन्ति च तेऽपि।।३८१।।

कौन सुनै कासौं कहौं सुरति विसारी नाह।
वदावदी जिन लेत है ये बदरा बदराह।।३८१।।

विरहशुचिर्जलदागमे कथमपि शाम्यति नैव।
प्रिय! तव नाम श्रवणतो बाला जीवति नैव।।३८२।।

दुःसह विरह दारुन दसा रह्यो न और उपाइ।
जात जात ज्यौ राषिये प्रिय कौ नाम सुनाइ।।३८२।।

पुनर्यथा। नाथेति। हे सखीति सम्बुद्ध्यनुकर्षः। नाथेन प्रियेण जलं ददति–ते जलदा मेघाःतेषां य आगमः जलदागमः जलदागमस्य समयः कालः जलदागमसमयः प्रावृट्काल इत्यर्थ। तस्मिन्नपि–अहं विस्मृताऽस्मीति वर्षर्त्तावपि नागत इति भावः। एतेन वारिदा मेघास्ते यथार्थनामानः। यतो वारि जलं न ददति किन्तु वारि पिबन्ति–इति जलशोषणं कुर्वन्तीत्यर्थः। सन्तापाधिक्यप्रदत्वात्। एतेन वारिदशब्दे दा दाने–इत्यस्य न प्रयोगः किन्तु दोऽवखण्डने इत्यस्यैव प्रयोग इति मया ज्ञातमिति भावः।।३८१।।

पुनर्यथा। विरहेति नायकं प्रति सखी वाक्यम्। विरहशुचिर्विरहाग्निः जलदागमे मेघागमे कथमपि नैव शाम्यति। अयमग्निस्तु जलदागमे शाम्यति। विरहाग्निस्तु नैव शाम्यति–इति–इतराग्नेरस्य विशेषोऽनिहितः। तेन व्यतिरेकालङ्कारलङ्कारः। सैव बाला हे प्रिय! तव नामाश्रवणतो जीवति न तस्या जीवनेऽन्योविधिरिति दिक्।।३८२।।

वदन् पिपासित इति पुनर्निर्दयसारङ्गेन।
अनुस्मारिते प्रियतमे सा श्वसिति श्वासेन।।३८३।।

फिरि सुधि दै सुधि द्याइय्यै यह निरदई निरास।
नई नई बहुरौ भई दई उसास उसास।।३८३।।

उपोवनमुपवनमहोदृष्ट्वा विरहिकुलानि।
कुहू कुहूरित्येव पिकधूर्तकुलैरुक्तानि।।३८४।।

वन वागनन पिक बट परातकि विरहिन मत मैन।
कुहो कुहो कहि-कहि उठत करि-करि राते नैन।।३८४।।

पुनर्यथा। निर्दयश्चासौ सारङ्गश्चातकः पक्षि विशेषः। तेन पिपासितोऽहमिति वदन् प्रियतमेऽनुसारिते सति सा बाला श्वासेन श्वसिति जीवतीत्यर्थः। यदा चातकवचः श्रृणोति तदा तदा प्रियस्मरणतः श्वासं गृहीत्वा श्वसिति जीवतीयमिति ज्ञायते, अन्यथाश्वासग्रहणस्याप्यनवकाश इति भावः। अत्र स्मृतिरलङ्कारो बोध्यः। 'स्यात्स्मृतिभ्रान्तिसन्देहैस्तदङ्कारलङ्कृतित्रयमि'ति लक्षणात्।।३८३।।

पुनर्यथा। उपोवनमिति। नायिका उक्तिः। यद्वा नायकं प्रति सख्या उक्तिः। अहो' इति कोमलालापे। हे सखि! उपवनस्य-उप इति उपोपवनम्। आरामः। आरामः स्यादुपवनमित्यमरः। वनस्य-उप-इति उपवनम्। गहनं काननं वनमित्यमरः। विरहः प्रियवियोगो येषामस्ति ते विरहिणः। विरहिणां कुलानि समूहाः विरहकुलानि दृष्ट्वा पिकः कोकिला एवं धूर्त्ताः पिकधूर्ताः तेषां कुलानि तैः पिकधूर्तकुलैः कुहूँ कुहूरित्येव वचनानि उक्तानीत्यन्वयः। अत्र पिका एव धूर्ता इति पिकधूर्त्तास्तेषां कुलानि तैः पिकधूर्त्तकुलैः कुहूः कुहूरित्येव वचनानि-उक्तानीत्यन्वयः। अत्र पिका एव धूर्त्ता इति समाभेदरूपकालङ्कारः। यथाधूर्तकुलानि वनोपवनस्थानि भवन्ति। तानि च विश्वासार्थं पान्यकुलान्याह्वयन्ति तथा कोकिला अपि कुहूँ कुहूरिति वचनानुकरणमुक्त्वा विरहि कुलान्याह्वयन्ति। यथा पान्थानां धनापहरणं धूर्त्तकुलैः कृतं तथा कोकिलकुलैरपि विरहिणां मनोहृतमितिभावः। एतत्तु धूर्त्तरूपकेनैव व्यज्यते तस्माद् वसन्तावसरे विरहो मा भूदिति वाक्यार्थ-ध्वनिरित्यलं विस्तरेण।।३८४।।

नाडी ज्ञानबलेन प्रियमयेति निर्द्धारितम्।
बाधा तेन गदेन हेतुरुचौ तौ तदगदम्।।३८५।।

मैं लषि नारी ज्ञान राप्यौ करि निरधार यह।
वहई रोगनिदान वहै वैद ओषध वहय।।३८५।।

दुर्बलता देहेऽपि विरहे प्रेम प्रबलता।
नीरसता मासेऽपि घनवर्षे हरिता यवाः।।३८६।।

विरह सुषाई देह नेह कियौ अति डहडहौ।
जैसे बसरे मेह जरै जवासौ ज्यौ जमै।।३८६।।

पुनर्यथा। नाडीति। सोरठा छन्दस्तु विपर्यस्तदोहावृत्तेन भवति। हे प्रिये। इति सख्या उक्तिः। मया नाडीज्ञानबलेन–इति निर्धारितं विचारितमस्ति। तेनैव गदेन तेनैव रुजा तस्या; बाधा दुःखं तव विरहेणेत्यर्थः। तावेव हेतु रुजौ हेतुर्निदानं रुक्–रोगश्च त्वद्विरह एव हेतुत्वेन रोगत्वेन ज्ञातावित्यर्थः। अगदमौषधमपि तत् तवादर्शनमित्यर्थः। एतेन तवादर्शने ध्यान प्राप्ताश्लेषानन्देन तदेवौषधं जातमित्याशयः। तस्मात्त्वं शीघ्रं तस्यै दर्शनं देहि–इति सख्यभिप्रायः। सोरठावृत्तम्।।३८५।।

पुनर्यथा। सोरठा वृत्तम। दुर्बलतेति। विरहे तवेति शेषः। देहे तस्या इति शेषः। दुर्बलता दौर्बल्यं जातं पुनः प्रेम्णः प्रीतेः प्रबलता–प्राबल्यं जातमित्यर्थः। यथा घनवर्षे घना वर्षन्त्यस्मिन् निति घनवर्षः। प्रावृट्कालः तस्मिन्। या सोयवासवृक्षे नीरसता जाता यवास्तु हरिता जाता इत्येर्थः। अत्र विरहे देहदौर्बल्ये यवासनीरसत्वं दृष्टान्तः प्रेम्णः प्राबल्येयवाहरिता–इति दृष्टान्तः। 'या सोयवासो दुस्पर्शो धन्वयासः कुनासक' इत्यमरः।।३८६।।

साहित्ये मनसो रहो किं जातं विरहेण।
गगनगता गुडिका यथा कृष्टा भवति करेण।।३८७।।

कहा भयो जो बीछुरे मो मरती मन साथ।
उड़ी जात कितहू गुड़ी तऊ उड़ायक हाथ।।३८७।।

हृदयतडागे विरहजलपूर्णे वयसि सुखेन।।
त्वं दुर्योधन इव हरे जलस्तम्भकरणेन।।३८८।।

विरहविथा जलपरस विन वसियतु मोहिय ताल।
कछु जानत जल थम्मविधि दुर्जोधन लौ लाल।।३८८।।

अथ प्रियलिखितपत्रिकावृत्तं दोहावृत्तेन साहित्यमिति। अहो! इत्याश्चर्ये हे प्रिये! इति सम्बुद्ध्यनुकर्षः। सहितस्य भावः साहित्यम्–आवयोर्मनसोः साहित्ये सति विरहेण किं जातं न किमपीत्यर्थः। तद् दृष्टान्तमाह–यथा गुडका गगनगता आकाशस्था दूरे तिष्ठति। परन्तु करेण हस्तेन कृष्णा भवति। समीपमाच्छतीतित्यन्वयः। एवमहमपि स्वरूपेण तव दूरस्था मानसिकव्यापारेण समीपस्थैव इति भवता ज्ञेयमिति प्रियलिखितपत्रिकावृत्तम्। एतेन मास्व समीपमुपकर्षयेति व्यज्यते।।३८७।। पुनर्यथा। हृदयेति। हरे हरे! हे कृष्ण! हृदयमेव तडागः तस्मिन् विरहएव जलं तेन पूर्णे सुखेन अनायासेन वससि। मदीये हृदये त्वं सदैव वससीति भावः। जलस्तम्भकरणेन तडागे यथा दुर्योधन इवेति। अत्रोपमानोपमेयसाधारणधर्मोपमा वाचकानां चतुर्णामुपादानात्–हृदयमेव तडागः–विरह एव जलमित्यभेदरूपकगर्मिता पूर्णोपमा विज्ञेयेति नायिकालिखितपत्रिका–वृत्तमवधेयम्।।३८८।।

ज्वर मनङ्गकृतमेव अबला सोढुं न क्षमा।
सहन्तोऽपि न त एव येऽपि रक्तवीर्योद्भवाः।।३८९।।

पावस कठिन जु पीर अबला कैसे सहि सकै।
तेऊ धरत न धीर रकतबीज सम उपजै।।३८९।।

सघनः सा तडिदेव इह विरहेण स्थापिते।
वर्षति यतो दृगेव ज्वलति च तथा निरन्तरम्।।३९०।।

सुई बिजुरी सोइ मेह आनि इहा विरहा धरे।
आठौ याम अछेह द्रग जुव रत बरसत रहत।।३९०।।

पुनर्यथा। सोरठाछन्दः। ज्वरेति। अनङ्गकृतमेव ज्वरं सन्तापं-अबला-अहं सोढुं न क्षमा न समर्था आसमिति कुत इत्याशङ्कायां ये रक्तवीर्योद्भवा अपि रक्तवीर्यो नाम कश्चिद् दैत्यः तदुद्भवाः अतिबलिनः तेऽपि न सहन्ते। रक्तवीर्यस्तु श्रीमद्भगवतीरूपं दृष्ट्वा मोहित आसीत्। अङ्गज्वरेण सन्तापित इत्यर्थः। अहन्तु-अबलेति साभिप्रायविशेष्योपादितत्परिकरांकुर इति। निर्बलास्तु-अनङ्गज्वरं कथमपि न सहन्त इति तस्या आशयः। एतेन अनङ्गो मां सन्तापयति तस्मात्वं मत्सहायार्थं शीघ्रमागच्छेति पत्रिकावृत्तं व्यज्यते। यद्वा रक्तवीर्योद्भवा मानवा अङ्गवन्तः स तु-अनङ्गोऽदृश्यरूपः तत्कृतसन्तापोऽङ्गवता केनाप्यसह्य इति तदाशयः। अङ्गवन्तस्तु समानबलाः अनङ्गो महाबल इति निष्कर्षः।।३८९।।

पुनर्यथा। स इति। स एव घनो मेघः सैव तडिद् विद्युद्-इदमेव मे विरहेण वियोगेन मदीये दृष्टिनेत्रे स्थापिते त्ववत्सीपादाकृष्य-अत्रैव स्थापिते जातित्वादेक वचनम्। यस्माद् दृगेव दृष्टिरेव वर्षति तया निरन्तरं ज्वलति प्रकाशते। यो मेघो वर्षतौवर्षति या तडित् ज्वलते स एव घनो मदीये नेत्रे निरन्तराश्रुबिन्दुभिर्वर्षति तडिदपि निरन्तरं ज्वलति एतेन वर्षाकालस्त्वत्समीपेनास्ति त्वद्वियोगे न मदीये नेत्रे वर्त्तते तस्मात्त्वं शीघ्रमागच्छेति नायिकालिखितपत्रिकावृत्तमिदम्।।३९०।।

अश्रुवराट धरे च सजलपक्ष्मशृङ्गलधरे।
ध्यानं स्तिमिततरे च दृशौ विरहयोगासने।।३९१।।

कौड़ा आसू बुंद करि साकर वरुनी सजल।
कीन्है वदन निमुन्द द्रग मलंग हारे रहत।।३९१।।

हरिणा किञ्चिद् दग्धया साञ्जनदृग् जलयैव।
विज्ञाता विरहव्यथाऽनक्षरपत्रिकयैव।।३९२।।

तर झुरसी ऊपर गली कज्जल जल छिरकाइ।
पिय पाती विनही लिषी वाची विरह बलाइ।।३९२।।

पुनर्यथा। इदानी मदीये दृशौ विरह एव योगासने जाते-इत्यर्थः। कीदृशे दृशौ-अश्रूण्येव वराटाः अश्रु-वराटाः तान् धरतः-इति-अश्रुवराटधरे। पुनः कीदृशे सजल पक्ष्मणी-एव शृङ्खलवरे ययोस्ते पुनः कीदृशे। ध्यानेनस्तिमिततरे निश्चलतरे ध्यानस्तिमिततरे यथा कश्चिद् योगी योगासनारूढो ध्यानस्तिमित लोचनः सशृङ्खलो वराटधरश्च भवति। तथा मदीये नेत्रे विरहयोगासनारूढे जाते-इति प्रियालिखितपत्रिकावृत्तं विज्ञेयं तस्मात्त्वं शीघ्रमागच्छेति व्यज्यते। अत्र समाभेद रूपकालङ्कारः।।३९१।।

पुनर्यथा। हरिणेति। अक्षराणि न सन्त्यस्यामित्यनक्षरा चासौ पत्रिका तयैव-अक्षरोल्लेखरहितयैव पत्रिकाया हेतुभूतया हरिणा कृष्णेन विरहव्यथा वियोगपीडा तस्या इति शेषः। विज्ञाता-आसीत्। पुनः कीदृश्या। साञ्जनम्-अञ्जनसहितं दृग्जलमश्रु यस्यामिति साऽञ्जनदृग्जला तया। एतेन प्रियां प्रेषितां पत्रिकां साञ्जनदृग्जलां किञ्चिद् दग्धामक्षरोल्लेखरहितां वीक्ष्य। विरहकृतव्यथां हरिर्ज्ञातवानिति साभिप्रायविशेषणोपन्यासात् परिकारालङ्कारः। अत्र सख्याः सखीं प्रत्युक्तिः सम्भावनीया। तेनास्या अतिविरह व्याकुलत्वं व्यज्यते।।३९२।।

हरये पत्री प्रेषिता लिखितं किमपि न यत्र।
हरिरपि वेद तयाऽखिलं विरहदुःखमुरुतत्र।।३९३।।

विरहविकल विनही लिखी पाती दही पठाइ।
आँक विहू-रीऊ सुचित सूनी वाचत जाय।।३९३।।

प्रिय! लिखितुं नाहं क्षमा नो वक्तुं त्रपयैव।
तव हृदेव मे हृदगतं कथयिष्यति किमु नैव।।३९४।।

कागत पर लिखत न वनै कहत सँदेस लजात।
कहि है सब तेरौ हियौ मेरे हिय की बात।।३९४।।

पुनर्यथा। हरय इति। यत्र किमपि न लिखितं विरह-व्याकुलत्वात्। लिखितुं गृहीता पुनर्नलिखिता-अनवधानतया-एतादृशी पत्री हरये कृष्णाय प्रेषिताऽस्ति। तया अलिखितपत्रिकाया तत्र-उरु-अधिक-विरहदुःखं विरहव्यथेति हरिरपि वेद ज्ञातवानिति सख्या सखीं प्रत्युक्तिः। एतेन तस्या अतिविरहव्याकुलत्वं द्योत्यते।।३९३।।

पुनर्यथा। हे प्रिये-इति। हे प्रिय! अत्रत्यं वृत्तमहं लिखितुं न क्षमा यतस्त्रपा भवति, तया हेतुभूतयाऽत्र किमपि न लिखितमस्ति, पुनर्वक्तुं सन्देशादिभिरपि नाहं क्षमा। न समर्था। किन्तु तव हृदेवत्वन्मन एव मे मदीयं हृद्गतं वृत्तं किमुनैव कथयिष्यति किन्तु कथयिष्यत्येवेति काकुः। एतेनसन्देशकथनार्थं मदीयं मन एव त्वत्समीपमगमित्याशयः। यद्वा-अवयोर्मनसोरैक्ये त्वन्मन एव कथयिष्यति किं सन्देशपत्रिका दिवभिरिति भावः। इदमेव वृत्तं तया लिखितमिति।।३९४।।

रसरक्तं रसिकेन यल्लिखितं सरसहृदैव।
पत्रं विरहखनित्रमिव विधृतं तया हृदैव।।३९५।।

रँगराती राते हियै प्रीतम लिषी बनाइ।
पाती काती विरह की छाती लइ लगाइ।।३९५।।

करे धृता परिचुम्बिता हृदये शिरसि कृताऽपि।
बाहूभ्यामुपगूहिता प्रियपत्रिका तयाऽपि।।३९६।।

कर लै चूमि चढ़ाइ सिर उर लगाइ भुज भैट।
लहि पाती प्रिय की प्रिया वाचत धरत लपेट।।३९६।।

अथ नायिकालिखितपत्रिकावृत्तमाह। रसरक्तमिति। रसिकेन शृङ्गाराभिज्ञेन। यत्पत्रं सरसं प्रीतियुक्तं हृन् मनो यस्य स सरसहृत् तेन सरसहृदैव लिखितमस्ति। तत्तया हृदा हृदयेनैव धृतं कमिव विरहखनित्रमिव विरहविदारकमेवेत्यर्थः। पत्रे–आगते सति भाविसंयोगानन्दः प्रादुर्वभूवेत्यर्थः। कीदृशं पत्रं रसरक्तं लाक्षारसेन रक्तं रक्तवर्णम्, अत्र लाक्षारसोल्लेखेस्वानुरागो दर्शितः अनुरागस्य रक्तवर्णत्वात्। यद्वा रसेन हर्षेण रक्तमनुरागयुक्तमित्यर्थः। अत्रयोपमेयोपमानवाचकानां त्रयाणामुपादानाद्धर्मलुप्तोपमालङ्कारः।।३९५।।

पुनर्यथा करे–इति। अपि पुनः। प्रियस्य पत्रिका तया करे धृता वाचनार्थमिति भावः। पुनर्विचार्य हृदये धृता प्राणप्रियेस्येयं पत्रिका हृदि प्राणवद् धारणीयेति भावः। पुनर्बाहुभ्यामुपगूहिता सखीं प्रति तदानन्दा गमदर्शनार्थमित्यर्थः। पुनः शिरसि कृता मां प्रति प्रियेण प्रेषिता अतः शिरोधार्या। पातिव्रत्यपरिपालन–शीलत्वादितिभावः। पुनः प्रतिचुम्बिता अस्यां पत्रिकायां प्रियनाम लिखितमस्ति तस्मान्नाम्नपि चुम्बिते तदानन्दांशत्वात्।।३९६।।

तावदेव तापो न सखि शाम्यति यत्नशतेन।
यावदार्द्रवसनोपमो हरिर्धृतो हृदयेन।।३९७।।

कोटि जतन कोऊ करौ तन की तपन न जाइ।
जौ लगि भीजे चीर लौ रहै न प्यौ लपिटाइ।।३९७।।

विना जलदमपि केकिकुलमभिनृत्यति समुदेव।
नन्दसुतेनानन्दिता दिगियं निश्चितमेव।।३९८।।

नाचि अचानक ही उठे बिन पावस वनमोर।
जानत हो नन्दित करी यह दिस नन्दकिशोर।।३९८।।

श्यामे श्यामघनेन सखि! मिलनं मया मुदैव।
जागरेऽपि निद्राऽधुना क्षुद्रा कुत्र गतैव।।३९९।।

सोवन सपने स्याम घन हिलि मिलि रहत वियोग।
तबहि टरी कित हू गई नीदौ नीदन जोग।।३९९।।

अथ च विरहे नायिकाया अभिलाषदशामाह। तावदिति। हे सखि! यावद्–आर्द्रवसनोपमः–आर्द्रवत्तापहारकत्वात्–हरिः कृष्णः मया उरसि हृदयेन धृतः तावदेव यत्नशतेन–उपायशतेन तापो न शम्यति। यथार्द्रवसने धृते तापशान्तिः तथा तस्मिन्निति तस्या आशयः। एतेनाभिलाषदशा–उदाहृता भवति।।३९७।।

पुनर्यथा। विनेति। हे सखीति सम्बुद्ध्यनुकर्षः। इयं दिक्–नन्दसुतेन कृष्णेन–आनन्दिता–आनन्दयुता कृतेत्यर्थः अस्यां दिशि नन्दसुतागमनं जातमिति भावः। यतश्चतुर्दिक्षु निरीक्षन्ती सखीं प्रति वदति–इयमिति–अङ्गुल्या निर्देशः। तत्कुत इत्यपेक्षायामाह। यस्माज्जलदं विनाऽपि मुदासहितं समुद्धर्षमिति यावद्' निश्चयेन केकिना मयूराणां कुलं अभिसम्मुखं नृत्यति। तस्य मेघ श्यामत्वात् तेषां मेघभ्रमो जात इत्यर्थः। अत्रानुमानालङ्कारः।।३९८।।

चिन्तामुदाहरति। स्वप्ने–इति। स्वप्नदशायां श्यामश्चासौ घनः तेन मेघश्यामेन कृष्णेनेत्यर्थः। मया सह मुदैव हर्षेणैव मिलनमासीदित्यर्थ;। अधुना जागरे जागरदशायामपि एव निश्चेयन सा क्षुद्रा निन्दनीया निद्राकुत्रगतेति न ज्ञायते यस्यां निद्रायां स्वप्न आसीत्। स्वप्ने च मिलनमासीत् सा निद्रा–इदानीं क्व गतेति चिन्ताधिक्यसूचनार्थं वचनमिदम्।।३९९।।

चित्ते हरिचित्तामणौ चिन्ताऽपरा न कापि।
दृशा मिलितयोरपि दशोरनिमेषता तदापि।।४००।।

जब जब वैसुधि कीजिए सब सबही सुधि जाहि।
आषिन आँषि लगी रहत आषै लागत नाहि।।४००।।

घनकुञ्जच्छायेषु सखि! लसिततसरसपवनेषु।
प्रभवति मनस्तदेव मे दिनकरसुता तटेषु।।४०१।।

छघनकुञ्ज छाया सुखद सीतल मन्द समीर।
मन ह्वै जात अजौ वहै वा जमुना के तीर।।४०१।।

स्मरणदशामाह। चित्ते इति। 'चित्तं तु चेता हृदयमित्यमरः। हरिरेव चिन्तामणिः। चिन्तामणिस्तु चिन्तितार्थदायकः एवं हरिरपि चिन्तितार्थप्रद इत्यर्थः। तस्मिन् हृदये सति अपरा काऽपि चिन्ता नास्ति तदा तस्मिन् समयेऽपि ध्यानदशायामित्यर्थः। तस्य दृशा मिलितयोः अपि मदीयदृशोः ममनेत्रयोः अनिमेषता निमेषराहित्यं जातम्। तद्दर्शनार्थमित्यर्थः। यद्वा शान्तपक्षे गुरुः शिष्यं प्रतिप्राह। चित्ते हृदये हरिचिन्तामणौ धृते सति काऽपि सांसारिकगृहधनादि चिन्ता न कार्या स एव सर्वं करिष्यति–

इत्यर्थः। तस्य दृशा मिलतयोर्दृशाध्यानावस्थायामित्यर्थः। अत्र हरिरेव चिन्तामणिरिति समाभेदरूपकालङ्कारः।।४००।।

पुनर्यथा। घनेति। हे सखि! घना घनीभूता कुञ्जानां छाया येषु। 'निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे'–इत्यमरः। लसितः शोभितः सरसः समकरन्दः पवनो येषु दिनकरसुतायाः कालिन्द्याः तटेषु पुलनेषु मे मनः तदेव प्रभवतीत्यर्थः। अत्र घनकुञ्जच्छायेष्वित्यनेनानान्दत्व लसितसरसेत्यादिना सौगन्ध्यं दिनकरसुतेत्यनेन शीतलत्वं व्यज्यते। यत्पूर्वं कृष्णेन सह संयोगावसरे सानन्दं मनः तदेवाऽधुनापि यमुनातटदर्शने स्मृत्यलङ्कारः स्मरणाख्यस्मरणदशा च बोध्या।।४०१।।

यत्रयत्र सखि माधवो दृष्टस्तदा मयैव।
तदधुनाऽपि कर्षति दृशं स्थानं सुभगगतैव।।४०२।।

जहाँ-जहाँ ठाढ्यौ लघ्यौ स्याम सुभग सिरमौर।
उन विन छिन गहि रहत द्रगन अजौ वह ठौर।।४०२।।

जाग्रत् स्वप्नसुषुप्तिभिर्न न च मोदामोदेन।
विस्मरामि हरिमहमहो चिन्तयामि हृदयेन।।४०३।।

जागत सोवत सुपनहूँ सरसरि चैन कुचैन।
सुरति स्याम घन की हियै विसरैहू विसरैन।।४०३।।

पुनर्यथा। यत्रेति। हे सखि! माधवः कृष्णः तदा तस्मिन् समये संयोगावस्थायां यत्र-यत्र स्थाने दृष्टःपूर्वमित्यर्थ;। तत्स्थानमधुनाऽपि विरहदशायामपि सुभगतयैव सौन्दर्यतयैव दृशं दृष्टिं कर्षति। बध्नातीत्यर्थः। एतेन यत्र-यत्र पूर्वं रमितं तत्स्थानमपि तत्स्मरणवशात्सौन्दर्यमावहति। एतेन श्रीकृष्णसौन्दर्यमभिव्यज्यते प्रीत्युकर्षश्च ध्वन्यते। अत्र दशालङ्कारौपूर्वोक्तौ।।४०२।।

पुनर्यथा। जाग्रदिति। जाग्रत्स्वप्नसुप्तिभिः अवस्थात्रयैरपि मोदो हर्षः। आमोदो दुःखमनयोः समाहारः। मोदामोदं तेन अहो! इति कोमलालापे हे सखि! अहं हरिं कृष्णं न विस्मरामि किन्तु हृदयेन मनसा न विस्मरामि किन्तु हृदयेन मनसा चिन्तयामि ध्ययामि-इत्यवन्यः। एतेन विस्मारकधर्मवदवस्था-त्रयहर्षदुःखादिरूपप्रतिबन्धके सत्यपि अविस्मरणरूपकार्योत्पत्तेस्तृतीया विभावना किञ्च अवस्थात्रय साक्षी स एवेति व्यज्यते। हर्षशोकौतु ध्यानावस्थायां न विस्मारकाविति-इति मनसा चिन्तयामि इत्यनेन गम्यते। अत्रापि स्मरदशा स्मृत्यलङ्कारश्च।।४०३।।

सरसदृशा भ्रकुटीनटनपीतपटच्छविनैव।
सम्प्रति कुञ्जविहारिणा हृदयं हृतं ममैव।।४०४।।

भ्रकुटी मटकन पीत पट चटक लटकती चाल।
चल चख चितवन चोर चित लियौ विहारी लाल।।४०४।।

मन्द पवन चन्दन कुसुममाला हरिं विनैव।
उपभुक्ता इतरे इमे जाता अद्य ममैव।।४०४।।

औरे भाँति भये वये चौंसर चन्दन चन्द।
पति विन अति पारत विपति मारतमारुत मन्द।।४०४।।

गुणकथनमुदाहरति। सरसेति। हे सखीति। हे सखीति सम्बुद्ध्यनुकर्षः। सम्प्रति-इदानीं कुञ्जेषु विहरतीति कुञ्जविहारी। तेन हरिणा मे हृदयं मनः हृतं चोरितमस्ति। अत्र चौरचातुर्यं कुञ्जविहारीत्यनेन व्यज्यते। पुनः कीदृशेन सरसा सशृङ्गारा यद्वा प्रीतिसहिता तादृक् यस्य ते न मनः कीदृशेन भ्रकुट्याः नटनं च पीतपटच्छविश्च यस्मिन् तेन पीतश्चासौ पटश्च पीतपटः तस्यच्छविः कान्तिरिति पीतपटस्तु तस्मिन्नेव शोभते। श्यामतनुत्वादिति भावः। एतेन मे मनस्तत्रैव गतं तेन चोरितमित्यर्थः। अत्रगुणवर्णना-रूपा स्मरदशा।।४०४।।

उद्वेगदशामाह-मन्दपवनेति। हे सखीति सम्बुद्ध्यनुकर्षः। मन्दश्चसौ पवनश्चन्दनं च कुसुमानां मालाश्च-अद्य-इदानीं हरिं विनैव मया-उपभुक्ताः संसेविताः सन्तः इमे पदार्थाः ममैव-इतरे जाताः। अन्यत्वेनैव दृश्यन्त इत्यर्थः। किन्तु इति सौगन्ध्यादिगुणं विहाय सन्तापप्रदा जाता इति भावः। अत्र-इमे-इतरे जाता इति 'भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनादिति लक्षणाद् भेदकातिशयोक्तिरलङ्कारः।।४०५।।

किमुमत्ता ग्रामे जना मत्ता किं त्वहमेव।
ये वदन्ति सर्वे शशिं मुधा शिशिरकरमेव।४०६।।

हौही वैरी विरह वस कै वौरौ सब गाँव।
कहा जानिये कहत है शशिहि तीतकर नाव।।४०६।।

इतस्ततो विचरति न सा न च रमते वनितासु।
सुखमुपलभते न क्षणं हरिविरहे क्षणदासु।।४०७।।

ह्योंते ह्वाँ ह्वौते इहाँ नैको धरतन धीर।
निस दिन वाढ़ी सी फिरति गाढ़ी बाढ़ी पीर।।४०७।।

किममि दूरमनुयाति या पुनरायाति तथैव।
विरहदोलयान्दोलिता निःश्वासेन सहैव।।४०८।।

इत आवत चलि जात उत चले छ सातक हाथ।
चढ़ी हिडोरै सी रहै लगी उसारन साथ।।४०८।।

पुनर्यथा। किमु-इति। हे सखीति समुद्ध्यनुकर्षः। किमु सति परिप्रश्ने ग्रामे जनास्त एव मत्ताः

किन्तु अहमेव मत्तास्मीति त्वां प्रति पृच्छामि। ग्राम्यजनानां मत्तत्वं प्रतिपादयन्नाह। ये ग्रामे जनास्ते सर्वे शशिं चन्द्रं शिशिरकरं शीतकरं वदन्ति तन्मुधा मिथ्यैव स तु मां सन्तापयतीत्यर्थः। अतो नाऽयं शीतकरत्वारोपस्तु ग्राम्यजननिन्दया व्यक्तिकृत इति शुद्धापह्नुतिरलङ्कारोऽवगन्तव्यः।।४०६।।

पुनर्यथा इतस्तत इति। हरिविरहे कृष्णविप्रलम्भे सा बाला-इतस्तो विचरति च पुनः वनितासु न रमते क्षणदासु रात्रिषु क्षणमपि सुखं नोपलभते। इत्यन्वयः। अभिलाषस्मृतिचिन्तागुणकथनोद्वेग-सम्प्रलापायाश्च। उन्माद आधिर्जडतामृति'रिति दशाऽत्र कामदशा-इति भरतोक्तेर्विप्रलम्भे उद्वेगदशाऽत्र विज्ञेया।।४०७।।

पुनर्यथा किमपीति। सा बाला किमपि दूरमनुयति अनुगच्छति। तथैव पुनः-आयाति-आगच्छति। विरह एव दोलायतया-आन्दोलिता सती निःश्वासेन सहैव गमनागमनं करोतीत्यर्थः। अत्रापि उद्वेगाख्याः कामदशा बोध्या।।४०८।।

पुनः पुनः पृच्छति कथं कथय कथय हरिरेव।
किं करोति स च किं वदति कदाभिलिष्यत्येव।।४०९।।

फिर फिर बूझत कहि कहा कहौ सामरे गात।
कहा करत देष्यौ कहाँ अली चली क्यौ बात।।४०९।।

नायं सखि! रजनीकरो राहुः स्फुरति निशासु।
भयभीतश्चन्द्रोदये शुभ्रो भाति दिशासु।।४१०।।

जोन्ह नहीं यह तमवहै कियै जु जगत निकेत।
होत उदै ससि के भयौ मानौ ससि हर सेत।।४१०।।

प्रलापदशामुदाहरति। पुनः पुनरिति। हरिःकृष्णः एव निश्चयेन कथं वर्तते इति त्वं कथयेत्यादरे वीप्सा सह च हरिः कृष्णः कि करोति किं वदति। कदा कस्मिन् काले एव निश्चयेन न मिलिष्यतीत्यन्वयः। प्रलापोऽनर्थकं वच इत्यमरः। अत्र वारं वारं सखीं प्रति करणेनप्रलाप-दशाऽवगन्तव्या।।४०९।।

पुनर्यथा। नायमिति। हे सखि ! निशासु नायं रजनीकरः किन्तु राहुरेव स्फुरति। तदेव प्रतिपादयति। चन्द्रोदये भवितव्ये सति भयभीतः सन् शुभ्रवर्णो भाति शोभते। अत्र-आपं चैव हलान्तानां यथा वाचा निशा दशा इत्यादि वचनाद् आवन्तत्वं बोध्यम्। किञ्च राहुत्वारोपाय चन्द्रज्योत्स्नायाः शुभ्रत्वधर्मस्या पह्नवः। तस्मात्-शुद्धापह्नुतिरिति। किञ्चभयभीतानां वदनवैवर्ण्यं भवतीति प्रसिद्धम्। अत्रापि प्रलापदशा-ऽवगन्तव्या।।४१०।।

साश्रुमुखी बाला वचो जगाद यदा तदेव।
श्रुत्वा साश्रुमुखा जना जाताः केन किमेव।।४११।।

कहे जु वचन वियोगिनी विरह विकल अकुलाइ।
किये तकिहि असुँवा सहित असुयन बोल सुनाइ।।४११।।

न विलज्जति मनसाऽपि मत्ताप्रियविरहेऽपि।
पुनः पुनः प्रलपति लपति रजनीष्वपि दिवसेऽपि।।४१२।।

तजी सङ्कसकुच तन चित बोलत बाक कुवाक।
दिन छनदा छाकी रहत छुटत न छिनछवि छाक।।४१२।।

मृदितकुसुममालेव सा विरहे हरे तवैव।
यत्सखीभिरपि परिचिता कथमपि कथमपि सैव।।४१३।।

करके मीजे कुसुम लौ गई विरह कुम्हिलाइ।
सदा समीपिन सषिन हू नीठ पिछानी जाइ।।४१३।।

पुनर्यथा। सेति। अश्रूणि मुखे यस्याः साऽऽश्रुमुखी बाला यदा यस्मिन् काले यदेव वचो जगाद कथितवती तदेव वचः श्रुत्वा के जनाः साश्रुमुखा न जाताः किम्? अपितु सर्वे जनाः साश्रुमुखा जाता इति भावः। अत्रापि-अनर्थक वचोरूप प्रलपनं श्रुत्वा सर्वे साश्रुमखाजाता इति प्रलापदशोदाहरणं विज्ञेयम्।।४११।।

अथोन्मादशामुदाहरति। नेति। सा बाला मनसा न विलज्जति प्रियस्य कृष्ण्स्य विरहेऽपि पुनर्मत्ता जाता मत्तेव जाता अत्र-इव शब्दाक्षेपः कर्त्तव्यः। यतो रजनीष्वपि दिवसेऽपि पुनः पुनः प्रलपति व्यक्तं भाषतेइत्यन्वयः। अत्र सख्याः सखीं प्रति-उक्त्या प्रलापोदाहरणम्।।४१२।। व्याधिमुदाहरति। मृदितिमृदिता चासौ कुसुमानां मालेव सा बाला हे हरे! कृष्ण! तवैव विरहे सति यद् यस्मात् सखीभिरपि सहचरीनिरपि सैवेयमिति कथमपि केनापि प्रकारेण परिचिता परिचयप्राप्तेत्यन्वयः। अत्रातिकाश्यवर्णेन व्याधिदशोदाहरणं बोद्धयम्।।४१३।।

पूर्वमल्पतनुरेव सा विरहेणाल्पकृतैव।
मृतिरपि दृग्दर्पणधरो नतां लभतेऽधुनैव।।४१४।।

करी विरह ऐसी तऊ गैल न छाड़त नीच।
दीन्हें हू चसमा चषन चाहै लहै न मीच।।४१४।।

प्रतिदिन जीवनसंशये जीवति सा पुनरेव।
मृत्युशशकरिपुणा न यत्क्रांता दहनमियेव।।४१५।।

नित संसौ हंसौ वचत मनौ सुइह अनुमान।
विरह अगिन लपटि न सकै झपटिन मीच सिचान।।४१५।।

पुनर्यथा। पूर्वमिति। सा बाला पूर्वमेव अल्पतनुः तन्वङ्गी पुनर्विरहेण तव वियोगेन अल्पकृतैव तनूकृतैव वर्त्तते। अति दुर्बलत्वमाह। अधुनैव निश्चयेन मृतिर्मृत्युर्यमोऽपि दृग्दर्पणधरः सन् दृगुपकारि दर्पणं दृग्दर्पणं तं धारयति स तथा भूतोऽपि सन् तां न लभते-इत्यन्वयः। अत्र सूक्ष्मवस्तु विलोकनाय लोको दृग्दर्पणं घाटयति इति प्रसिद्धम्। अत्र तां न लभत इत्यतिशय दौर्बल्य प्रतिपादनाद् व्याधिदशोदाहृता भवति। विशेषोक्तिरलङ्कारः।।४१४।।

पुनर्यथा। प्रतीति। हे हरे-इति सम्बुद्ध्यनुकर्षः नायकं प्रति सख्या उक्तिः। जीवनस्य संशये तस्या इति शेषः। प्रतिदिनमित्यनेन अद्यजीविष्यति न मेवति प्रतिदिनं सखीनां संशये सति-एव निश्चयेन सा पुनर्जीवति तदेव प्रतिपादयति। यतः मृत्युरेव शशकरिपुः पक्षिविशेषः सिचन इति भाषायां प्रसिद्धः तेन स्वस्य दहनभियेव स्वपक्षदाह भीतेनेव यत् नाक्रान्ता तस्माज्जीवतीत्यर्थ;। अत्राप्यति कर्श्यवर्णनेन व्याधि दशा बोध्या।।४१५।।

नयन जलं वरुणीगतं न कपोलस्थलमेति।
पतितं सपदि कुचस्थले सद्योऽदर्शनमेति।।४१६।।

पल न प्रकट वरुनी न वढ़ि नहि कपोल ठहराइ।
ते असुँवा छतियाँ परै छंछनाइ छपि जाइ।।४१६।।

तप्तं तद्विरहानलैः क्लिन्नं प्रीतिरसेन।
खिन्नं वहसि हृदेव किं नीरं नयनपथेन।।४१७।।

प्रजरै आगि वियोग की बह्यौ विलोचन नीर।
आठौ याम रहै हियौ उड्यो उसास समीर।।४१७।।

माधव! निश्चलतामिता न प्रवदति चकितेव।
दृग्बाणेन हता नु किं निहता दुष्टदृशेव।।४१८।।

जकी जकी सीह्वै रही बूझै बोलन नीठ।
कहू डीठि लौनी लगै कै काहू की डीठि।।४१४।।

पुनर्यथा। नयनजलमिति। नयनजलं नेत्रवारि तस्या इति शेषः वरुणीगतं सत्कपोलस्थलं नैति न गच्छति। सपदि शीघ्रं कुचस्थले पतितं सत् सद्यः तत्कालमदर्शनमेति-इति-अन्वयः। अत्र नेत्रजलस्य हृदये दर्शनाभाववर्णनेन सन्तापाधिक्यप्रतिपादनाद् व्याधिदशेयमुदाहृता।।४१६।।

पुनर्यथा। तप्तमिति। नायिकां प्रति सख्या उक्तिः। हे बाले! इति सम्बुद्ध्याक्षेपः। हृदा हृदयेन खिन्नं गात्रप्रश्रवणरूपं नीरं वारि। किमिति परिप्रश्ने त्वं नयनपथेन नयनमार्गेण वहसि धारयसि कीदृशं कीदृशं नीरं तद्विरहानलैः तप्तं पुनः तत्प्रीतिरसेन जलेन न क्लिन्नभार्द्रतरमित्यन्वयः। अत्रापि सन्तप्ताश्रु प्रवाहस्य हृदयोत्पन्नस्वेदजलव्याजेन प्रश्रवणमुक्तं तेन व्याधि दशोदाहृता।।४१७।।

जडतामाह। माधवेति। नायकं प्रति सख्या उक्तिः। हे माधव! हे हरे! निश्चलतामिता प्राप्ता सती सा बाला न प्रवदति पुनश्चकितेवजाता। दृगेव बारः तेन दृग्बाणेन शरेण निहतात्वयेति शेषः। किं वा नु इति परिप्रश्ने दुष्टदृशा दुष्टदृष्ट्या केनापि निहतेव दृश्यत इत्यर्थः। अत्राङ्गाना निश्चलशैथिल्यादि वर्णनेन जडतारूपा स्मरदशाऽवगन्तव्या।।४१८।।

किं मृतेव निश्चलतया किं व्यथया रहितेव।
हरे हन्त! हरिणीदृशा न वदति कृच्छ्रगतेव।।४१९।।

मरी डरी कि टरी व्यथा कह षरी चलि चाहि।
रही कराहि कराहि अति अब मुष अहिन आहि।।४१९।।

प्राणनाथ विरहे तनौ प्राणा वृथा वसन्ति।
तिथिषु यथा सदवमतिथिः केऽपि तां गणयन्ति।।४२०।।

गिनती गनवे तै रहे छतहू अछत समान।
अलि अवये तिथि औस लौ परे रहै तन प्रान।।४२०।।

विरहविपति सहचरि सुखैस्त्यक्तानीमाङ्गानि।
दुःखानि तु जीवेम सह विगमिष्यन्त्यवशानि।।४२१।।

विरह विपति दिन परत ही तजे सुषन सब अंग।
रहि अबलौ परवश दुषौ भये चला जिय सङ्ग।।४२१।।

पुनर्यथा। किमिति। हे हरे! हे कृष्ण! सा बाला निश्चलतया किं मृतेव लक्ष्यते। किं वा व्यथया पीडयारहितेव दृश्यते दुःखसूचक वचनराहित्यात्। हन्त! इति खेदे हरिण्याः दृगिवदृक् यस्याः सा हरिणीदृशा बाला। अत्रापि आपं चैव हलन्तानामिति- भागुरिमतेनाबन्तत्वं बोध्यम्। पुनः कृच्छ्रगतेव न वदति-अत्रापि जडतारूपास्मरदशाऽवगन्व्या।।४१९।।

अथ दैन्यदशामुदाहरति। प्राणेति। अत्र नायिकायाः सखीं प्रत्युक्तिः, हे सखीति सम्बुद्ध्यनुकर्षः। प्राणनाथस्य पत्युर्विरहे सति तनौ देहे मदीये-इत्यर्थः। मम प्राणाः वृथा वसन्ति। प्राणानां सत्त्वेन कोऽपि स्वार्थ-इति भावः। तद्दृष्टान्तमाह। तिथिषु सर्वासु तिथिषु गणनीयासु अवमतिथिर्यथा सत्यपि तां तिथिं केऽपि न गणयन्ति। एवं प्राणानां सत्त्वेऽपि न प्राणवत्त्वं गण्यते-इति दैन्यमुदाहृतम्।।४२०।।

पुनर्यथा। विरहे इति। विरह एव विपत तस्या हे सहचरि! इमानि मदीयान्यङ्गानि सुखैस्त्यक्तानि-अत्र सुख-दुःखेऽङ्गसङ्गिनी भवतः। सङ्गिनस्तु। सङ्गिनस्तु विपदि न त्यजन्ति-इति सम्प्रदायः। दुःखानि तु जीवेन सह विगमिष्यन्ति। यतः अवशानीत्यन्वयः। एतेन वियोगविपत्सु जीवनं दुःखप्रदमिति व्यज्यते तेन दैन्यं ज्ञेयम्।।४२१।।

विरहादिह मरणं वरं मन्ये निश्चितमेव।
विरहेद्वावपि दुःखितौ मृतः सुखी पुनरेव।।४२२।।

मरन भलौ वरु विरह तै यह विचार चित जोइ।
मरन मिटै दुष एककी विरह दुहुन दुख होइ।।४२२।।

मरणे कृत्वा निश्चयं सुमुखी विरहयुताऽपि।
प्रतिचन्द्रं प्रति पङ्कजं तिष्ठतिमरुतमथापि।।४२३।।

मारिवे कौ साहस करै वछी विरह की पीर।
धावत ह्वै समुहै ससिहि सरसिज सुरभि समीर।।४२३।।

पुनर्यथा। विरहादिति। हे सखीति सम्बुद्ध्यानुकर्षः। इह संसारे विरहाद् वियोगान् निश्चितमेवाहं मरणं वरं श्रेष्ठं मन्ये, यतो विरहे द्वावपि दुःखितौ भवतः। पुनर्मृतः सन्नेक एव निश्चयेन सुखी भवति-एक एव दुःखीतिभावः। एतेन दैन्य दशोदाहरणमिति ज्ञेयम्।।४२२।।

पुनर्यथा। मरणे-इति सख्याः सखीं प्रति उक्तिः। सा सुमुखी विरह दुःखपीडिता सतीतिभावः। मरणे निश्चयं कृत्वा। प्रतिचन्द्रं पुनः प्रतिपङ्कजं यथाऽपि मरुतं प्रतितिष्ठति। एते चन्द्रादय उद्दीपन-विभावाः कामोद्दीपनकारिणः तस्माद्विरहेऽतिदुःखप्रदाः तस्मादेतेषां साम्मुख्येऽतिशयदुःखं भविष्यति ततो मरणं भविष्यतीति साम्मुख्यकरणप्रयोजनं तेन दैन्यस्योदाहरणं विज्ञेयम्।।४२३।।

माघे निश्यपि दवदहनयुक्तो ग्राम इतीव।
श्रुत्वा पथिक मुखेन सा ज्ञाता निःश्वसितीव।।४२४।।

सुनत पथिक मुँह माड निसि लुवै चलै लहि गाँव।
विनहू बूझै विन कहै जियत विचारी वाम।।४२४।।

सव्रीडा क्रीडावशादुन्मुद्रितनयनाऽपि।
मामालिङ्गन्ती साङ्गना महोहरत्यधुनाऽपि।।४२५।।

लहि रति सुख लगियै गरै लषी लजीली डीठि।
षुलतन मो मन गड़ि रही तहै अधखुली डीठि।।४२५।।

तस्या मृदुताडितमही मानसहरं ममैव।
विप्रलापोऽपि सस्मितो मधुरो भवति सदैव।।४२६।।

मान्यै मनुहारी भरी मार्‌यौ षरी मिठाहि।
वाकौ अति अनषा हरौ मुसकाहट विन नाहि।।४२६।।

प्रोषितनायिकामुदाहरति। माघे-इति। माघे मासि-अपि पुनः निशि रात्रौ दहनयुक्तो ग्रामोऽस्तीति

केनचित्पथिकेनोक्तं श्रुत्वा प्रोषितनायकः सा निःश्वसितीवेति तेन विज्ञाता माघमासे निशि दवदहनस्या भावात् तदीयविरहाग्निज्वालावलीढो ग्रामोऽयमिति तेनानुमितं तेन प्रेषितनायकोदाहरणम्।।४२४।।

अथ नायककृतस्मृतिदशामाह। सव्रीडितेति। व्रीडया सहिता। सव्रीडा पुनः व्रीडावशाद् उन्मुद्रितेमयने यया सा–अपि मामालिङ्गन्ती साऽङ्गना अधुना इदानीमपि मनोहरति यदा क्रीडावशात्सव्रीडमालिङ्गनं तया कृतं तद्दशा स्मरणादधुना ऽपि मे मनोहृतमिति भावः। तेन स्मृतिदशा विज्ञेया।।४२५।।

तस्या इति सखीं प्रति नायकस्योक्तिः। हे सखीति सम्बुद्ध्यनुकर्षः। अहो ! इति कोमलालापे। तस्याः प्रियाया मृदुताडितं कोमलप्रहार एव निश्चयेन मम मानसहरो जातः–इत्यर्थः। सस्मितो मन्दहासयुतो विप्रलापो विरोधोरिक्तरपि सदैव मधुरा भवतीत्यन्वयः। विप्रलापो विरोधोक्तिरित्यमरः। एतेन पूर्व संयोगावस्था कृतमदुताडितविप्रलापादि–इदानीं विरहे मधुरत्वान्न विस्मरामीतिभावः। तेन स्मृतिदशा विज्ञेया।।४२६।।

प्रोञ्छति पश्यति चिन्तयति तत्कपोल तुलयाऽपि।
प्रियाप्रेषितं प्रियतमस्ताम्बूलं तमथापि।।४२७।।

सरसत पौंछति लषि रहत लगि कपोल के ध्यान।
कर लैष्यौ पाटल विमल प्यारी पठये पान।।४२७।।

सदसि कुटुम्बजनस्य सा तिष्ठति पृष्ठकृतैव।
क्वापि क्षणमपि सस्मितं पश्यति मामुदितैव।।४२८।।

बड़ी कुसुम की भीर मैं रही बैठि दै पीठि।
तऊ पलक परिजात इति हेरि हसौ हीं डीठि।।४२८।।

इति श्रीशृङ्गारसप्तशतिकायां विप्रलम्भशृङ्गारवर्णनं द्वितीयः परिच्छेदः।।२।।

पुनर्यथा। प्रोञ्छतीति। सख्याः सखीं प्रत्युक्तिः। प्रियतमः कृष्ण प्रियाप्रेषितं ताम्बूलं तमथाऽपि–अधुनाऽपि पुनः पुनः तत्कपोल तुलनया तस्याः कपोलमिति ध्यायति। अपि पुनः प्रोञ्छति पुनः पश्यति–इति–अन्वयः। अत्रापि स्मृतिदशा विज्ञेया।।४२७।। पुनर्यथा। सदसीति। कुटुम्बजनसदसि गोष्ठ्यां सा बाला पृथुं कृतं यया सा पृष्ठ कृतैव पृष्ठभागं कृत्वा स्थिता तिष्ठति। क्वापि कस्मिन्नपि अवकाशकाले सर्वेषां दृशं छलयित्वेति भावः मुदितैव सती सस्मितं यथाभवति तथा क्षणमपि मा मां पश्यतीत्यन्वयः। एतेन तस्याः प्रीत्युत्कर्षं सखीषु वर्णनेन स्मृतिदशाऽवगन्तव्या।।४२८।।

इति श्रीशृङ्गारसप्तशतीव्याख्यायां विप्रलम्भशृङ्गारवर्णनं नाम द्वितीयः परिच्छेदः।।२।।

□□

## तृतीयः परिच्छेदः
### ( नायकनायिकावर्णनम् )

गोपायित्वा निज तनुं नितम्बिनीषु यदास।
बाला तदा सदीपिका काचघटीव चकास।।४२९।।

बाल छबीली तियन मैं बैठी आपु छिपाइ।
अरगट ही फानूससी परगट होत लषाइ।।४२९।।

सहजतया सितशाटिका तन्व्या धृता यदेव।
लसति नीरयन्त्रोच्छलितलगतदीपकलेव।।४३०।।

सहज सेत पचतारिया पहिरत अति छवि होत।
जल चादर के दीप लौ जगमगात तन ज्योति।।४३०।।

किमपि न कुङ्कुमकेसरं चम्पकमपि तुलयाऽपि।
तद्रूपेण च काञ्चनं न हि कञ्चन कलयामि।।४३१।।

केसर क्यों सर कै सकै चम्पा कितक अनूप।
गात रूप लषि जात दुरि जात रूप कै रूप।।४३१।।

अथ नायिकावर्णनम्। गोपायित्वेति सखीं प्रति नायकस्योक्तिः। सा बाला निजां तनुं गोपयित्वा वस्त्रादिनेति भावः। नितम्बिनीषु–अन्यनायिकासु मध्ये यदा आस स्थितवती तदा सदीपिका दीपेन सहिता काचस्य घटीव चकास दिदीपे–इत्यन्वयः। अत्रोपमानोपेयसाधारणधर्मोपमावाचकानां चतुर्णामुपादानात् पूर्णोपमा बोध्या।।४२९।। पुनर्यथा। सहजेति। सहसजस्य भावः सहजता साधारणतयेति भावः। तन्व्या सिता चासौ शाटिका यत् यस्मिन् काले एव निश्चयेन धृता धारिता आसीत्। तदा तस्मिन् काले नीरयन्त्रोच्छलितं यज्जलं तद्गता–तस्मिन् वर्तमाना दीपस्य कलेव लसति शोभते अत्र धृतसितशाटिकातन्वी रूपोपमेयस्य नीरयन्त्रोच्छलितजलगतदीपककला रूपोपमानस्य इवेत्युपपमावाचकेन सहोपादानात् धर्मलुपोपमा बोधव्या।।४३०।। अथ देहद्युतिवर्णनम्। किमपीति। हे सखीति सम्बुद्ध्यनुकर्षः। तद्रूपेण तस्या रूपेण कुङ्कुमं चकेसरचानयोः समाहारः कुङ्कुमकेसरं किमपि न तुलयामि। कुङ्कुमं पीत कावेरे घुसृण कुसुमात्मकमिति हारावली। किञ्जल्कः केसरोऽस्त्रियामित्यमरः। अपि पुनः चम्पकं चम्पकपुष्पमपि न तुलयामि। पुष्पे जाती प्रभृतय इति वचनात् चम्पकपुष्पं गृहीतव्यं काञ्चनं सुवर्णमपि कञ्चन कलयामि। तस्मात्तुच्चत्वेन जानामीत्यर्थः। एतेन वर्ण्येनान्यस्योपमायाः अनिष्पत्ति वचश्च तदिति लक्षणात् चतुर्थः प्रतीपालङ्कारो विज्ञेयः।।४३१।।

किं कुमुदं का कौमुदी किमादर्शकुसुमानि।
यद्विलोक्य विमलानि खलु सन्तिजगन्नयनानि।।४३२।।

कहाँ कुसुम का कौमुदी कितक आरसी ज्योति।
जाकी उजराई लषै आँषि ऊजरी होति।।४३२।।

विभूषराञ्जनजतुरसास्तनुदृक्चरणतलेषु ।
शोभायै न भवति किमु गणिता गणनीयेषु।।४३३।।

तनुभूषन अंजन दृगन पगन महावर रंग।
सोभा ही कौ साजियतु कहि वेहीके अङ्ग।।४३३।।

पुनर्यथा। किमिति कुमुदं किं न किमपीत्यर्थः। कौमुदीचन्द्रज्योत्सा न कापीत्यर्थः। आदर्शं दर्पणं कुसुमानि पुष्पाणि च किं न किमपीत्यर्थः। यद् यां विलोक्य खलु निश्चयेन जगतां नयनानि विमलानि न सन्ति–इति काकुः किन्तु सन्त्येवेत्यर्थः। अत्र प्रतीपमुपमानस्य वैयर्थ्यमपि मन्यते–इति लक्षणात् तृतीय प्रतीप प्रकारो विज्ञातव्यः।।४३२।। पुनर्यथा विभूषणेति। विभूषणानि काञ्चनमयान्येव भूषणानि। अञ्जने च जतुरसश्चलाक्षारसश्च–एतेषां समाहारः विभूषणाञ्जनजतुरसाः। तनुश्च दृक् च चरणतलञ्च एतेषां समाहारः तेषु यथाक्रमेणान्वयः। विभूषणानि तन्वै। अञ्जनं दृशि जतुरसश्चरण तलेषु एते शोभायै कान्त्यै न भवन्ति। किन्तु गणनीयेषु षोडशसंकरभेदेषु गणिता इत्यर्थः। अत्र यथा संख्यं क्रमेणैव वक्रमिकाणां समन्वय इति लक्षणाद् यथासङ्ख्यालङ्कारः। षोडशसंस्कारश्च–

आदौ मज्जनचारुचीरतिलकं नेत्राञ्जनं कुण्डलं
नासामौक्तिकपुष्पहारकबरीकण्ठे च मुक्तावली।
अङ्गे चन्दनलेपनं कुचमणिः क्षुद्रावली घण्टिका-
ताम्बूलं वरकङ्कणं चतुरता शृङ्गारकाः षोडश।।-इति ४३३।।

कमनीया तनुकान्तिरिति कर्षति नयनयुगानि।
यदुपयन्ति प्रतिबिम्बितां न खलु चन्द्रकिरणानि।।४३४।।

वाहि लषै लोयन लगै कौन युवति की जोति।
जाके तन की छाह ढिग जोन्ह छाह सी होति।।४३४।।

कनकयूथिकुसुमेषु वामपि जानाति न कोऽपि।
यदि न प्रथयति दाहतः सहजः सुरभिगुणोऽपि।।४३५।।

कहि लहि कौन सकै दुरी सौन जुही मे जाइ।
तन की सहज सुवासना देती जोन बताइ।।४३५।।

पुनर्यथा। कमनीयेति। तनुकान्तिः–तस्या इति शेषः। कमनीयकान्तिमती। कर्षति बध्नाति सर्वेषां नयनयुगानि तां दृष्ट्वा तत्रैव यान्तीति भावः। यदुपयस्याः–उपसमीपे चन्द्रस्य किरणानि खलु निश्चयेन प्रतिबिम्बितां प्रतिच्छायत्वं न यन्ति। न गच्छन्ति किमु अपितु प्रतिबिम्बित्वं प्राप्नुवन्ति

एवेत्यर्थः। एवं च तस्यास्तनुशोभायाः प्रकाश-रूपायाः प्रतिच्छायेव चन्द्रज्योत्स्ना लसतीति भावः।।४३४।। पुनर्यथा कनकेति। कनकयूथिकायाः कुसुमेषु शयितां तां कोऽपि न जानाति वर्णैक्यादिति भावः। यदि च तस्याः सहजः सुरभिगुण; सुगन्धिगुणो देहतो न प्रथयति-इति-अन्वयः। एतेन तस्याः कनकयूथ्याश्च वर्णैक्यं प्रतिभाति। अत्रापि कनकयूथिका कुमान्येव ज्ञायेयानि पुष्पेजाती प्रभृत इति वचनात्। किञ्च तस्याः सौरभ्यगुणाधिक्यात् तामहं जानामीति नायकोक्तिरवगन्तव्या। अत्र भेदे वैशिष्ट्योः स्फुर्त्तामुन्मीलितविशेषकावितिलक्षणाद् उन्मीलितालङ्कारः।।४३५।।

विधिना तनुकमनीयता हेतोराभरणानि।
रचितानीव दृशां पदस्थित्यै विमलकराणि।।४३६।।

मानहु विधि तनु अच्छ छवि सुच्छ राषिवे काज।
द्रग पग पौंहन कौ किये भूषन पायं दाज।।४३६।।

चलत्कनकपुष्पीव सा कनकसमावयवैव।
कार्पासककुसुमप्रभा लसति शुक्तवसनैव।।४३७।।

देषी सौनजुही फिरत सौनजुही से अंग।
युति लपटन पट से तहू करत बनौटी रंग।।४३७।।

पुनर्यथा। विधिनेति। तनोः कमनीयता हेतोः तस्या इति शेषः। विधिना ब्रह्मणा दृशां पदस्थित्यै विमलकराणि-आभरणानि रचितानीवेत्यन्वयः। तस्या अङ्गेषु सर्वेषां दृक्पातेन मालिन्यं स्यात् तेनाङ्गकमनीयताहानिः। सा मा भूद् एतदर्थं विधिना विमलकराणि-आभरणानि रचितानि इत्येव सिद्धास्पदाहेतुफलोत्प्रेक्षा प्रथमं दृशां पदानि आभणेष्वेव पतन्ति ददन्तरमङ्गेष्विति भावः। तेन भूषणैर्न तस्याः कमनीयता किन्तु स्वाभाविकीति तात्पर्यम्। हेतुफलोत्प्रेक्षयोरुभयोरप्युदाहरणं बोध्यम्।।४३६।। पुनर्यथा। चलन्निति। सा बाला चलन्ती चासौ कनकपुष्पीव स्वर्णयुथिकेव लसति। यूथिकाम्लानके पुष्प विशेषेऽपि च योषित'-इति मेदिनी। कनकसमा अवयवा यस्याः सा। पुनः कर्पासककुसुमस्य प्रभेव प्रभा यस्याः सा। पुनः शुभ्रसवनं यस्याः सा एवेत्यवधारणे।।४३७।।

यत्तनुकान्त्या मम मनो भिन्नं कठिनमतीव।
मदनः पञ्चशरैर्युतस्तेन कृतार्थोऽतीवा।।४३८।।

रहि न सक्यौ कसि कर रह्यौ बस कर लीन्हौ मार।
भेद दुसार कियौ हियौ तन दुति भेदै सार।।४३८।।

कुङ्कुमरागः समतया न तदङ्गेषु विभाति।
केवलसुरभिगुणानुगोऽनुगतजनो जानाति।।४३९।।

कंचन तन धन वरन वर रहौ रंग मिलि रंग।
जानी जात सुवास तै केसर लाये अंग।।४३९।।

तनुकान्त्या मुक्तावली मणिकर्पूरविभेव।
सखी स्पृशति तृणेन तां चतुराऽचतुरतरेव।।४४०।।

ह्वै कपूर मनि मै रही मिलि तनु द्युति मुकतालि।
छिन छिन षरी विचच्छनी लषत छ्वाय तृन आलि।।४४०।।

पुनर्यथा। यत्तनुकान्त्या अतीव कठिनं मम मनः हृदयं भिन्न सत् यत् येन द्विशल्यतां प्रापतत् तेन मदनः कामः कृतार्थीकृत इव जातः कामस्तु पुष्पधन्वा पञ्चभिः शरैः पर मर्माणि भिनत्ति इदानीं यत्तनुकान्त्यैव मर्मभेदे जाते स्वयं कृतार्थ इव भवति-इति भावः।।४३८।।

पुनर्यथा कुङ्कुमराग इति। तदङ्गेषु तस्याः अङ्गेषु कुङ्कुमरागः समतया न विभाति न प्रकाशते वर्णैक्यादिति भावात्, अत एव अनुगच्छति-इत्यनुगतः जनः सखीजनः केवलं सुरभिगुणानुगः सन् तत्सौगन्धं ज्ञात्वा जानाति। एतेन भेदे वैशिष्ट्योः स्फूर्त्तावुन्मीलित विशेकावितिलक्षणात् विशेषकालङ्कारो बोद्धव्यः।।३३९।। पुनर्यथा। तनुकान्त्येति। तनोः कान्त्यादीप्त्या तस्या इति शेषः। तत्प्रभाभिभूता मुक्तानामवली मुक्तावली। मुक्तामणिमाला। मणिश्चासौ कर्पूरः मणिकर्पूरः तस्य विभा इव भा यस्याः सैव जाता अत एव चतुरा सखी अचतुरेव मुग्धतरेव तृणेन तां मुक्तावलीं स्पृशति-इत्यन्वयः। अत्र कर्पूरमणिस्तु तृणस्पर्शेन ज्ञायत इति प्रसिद्धम्। सहचरी मणिकर्पूरभ्रमत्वात् तृणेन स्पृशतीति भावः। 'मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते।' इति लक्षणान् मीलितालङ्कारः।।४४०।।

अतिशयविमलतया जगति सखि यदङ्गमुकुराणि।
अङ्गरागनिश्वासतोऽप्यासन् मलिनतराणि।।४४१।।

करत मलिन आछी छविहि हरत जु विमल विकास।
अङ्ग राग-अङ्गनि लग्यौ ज्यौं आरसी उसास।।४४१।।

मा धारय हाटकरचितमाभरणं पुनरेव।
दर्पणगतमालिन्यमिव प्रकटीभवति तदेव।।४४२।।

पहिर न भूषन कनक के कहि आवत इह हेत।
दर्पन के सौ मोरचे देह दिषाई देत।।४४२।।

पुनर्यथा। अतिशयेति-अङ्गान्येव मुकुराणि अङ्गमुकुराणि यदङ्गमुकुराणि-अतिशयविमलाया हे सखि! इति नायकोक्तिः। जगति लोके अङ्गरागा एवं निःश्वासतः इति पञ्चभ्यास्तसिल् तस्मादपि मलिन तराण्यासन्। यथा मुकुराणि निःश्वास वातेनापिमालिन्यं यान्ति-एवमङ्गान्यप्यङ्गरागतो मलिनान्यभूवन्निति समाभेद रूपकालङ्कारः।।४४१।। पुनर्यथा मा धारेयेति। नायकं प्रति नायकस्य उक्तिः। हाटकेन स्वर्णेन रचितमाभरणं पुनरेव त्वं धारयतस्तदेव-आभरणं तवाङ्गेष्विति शेषः। दर्पणगतं मालिन्यमिव प्रकटी भवतिप्रकाशते-इत्यर्थः। शीघ्रस्फूर्तौ दृष्टान्तः।।४४२।।

बहुयत्नैरपि साहसैस्तर्तुं जननयनानि।
नहि तनुसौरभसागरं कथमपि शंकुरिमानि।।४४३।।

लीहै हू साहस सहल कीन्है जतन हजार।
लोयन लोयन सिन्धु तन पैरिन यावत पार।।४४३।।

किमङ्गानि किं कनकमयभूषणानि विलसन्ति।
इति तदङ्ग सङ्गं विना सहचरिजना नयन्ति।।४४४।।

डीठिन परत समान दुति कनक-कनक से गात।
भूषनकर करकस लगत परस पिछानै जात।।४४४।।

लसिता दीपशिखेव सा कनकाङ्गप्रभयाति।
यत्सदीपमिव मन्दिरं दीपं विना विभाति।।४४५।।

अंग अंग नग जगमगत दीपसिषा सी देह।
दिया बुझाये ह्वै रहै अधिक उज्यारौ गेह।।४४५।।

पुनर्यथा। बहुयत्नैरिति। तनोः सौभगं सौन्दर्यं तदेव सागरः सिन्धुः तं जना एव एव नयनानि जननयन्तानि। यद्वाजनानां नयनानि-इमानि-इत्यङ्गुल्या निर्देशो बहुभिर्यत्नैरपि पुनः बहुभिः साहसैः कथमपि केनाप्युपायेन तर्त्तुं पारङ्गन्तुं नहि शेकुरित्यन्वयः। यथा जनाः सागरं तर्त्तुमसमर्थाः तथा नयनान्यपि सौन्दर्यं तर्त्तुमशक्तानीति समाभेदरूपकम्। एतेन सौन्दर्याधिक्यं व्यज्यते।।४४३।। पुनर्यथा। किमङ्गानीति। हे सहचरिजनाः। तदङ्गसङ्गं विना तदाश्लेषं विना इति नैव यन्ति न जानन्ति दर्शनेनैवेति भावः। इतीति किमिमानि किं तस्याः अङ्गानि पुनः किं कनकमयभूषणानि-इत्यन्वयः। अत्र स्वर्णभूषणानामङ्गानां च वर्णैक्यात् स्पर्शं विना न भेदस्फूर्तिरिति भावः। यदाङ्गसङ्गोभवेत्तदैव जनास्तद्भेदं जानन्तीत्युन्मीलितालङ्कारः। भेद-वैशिष्ट्योः स्फूर्तावुन्मीलितविशेषकावितिलक्षणात्। अत्र मार्दवं काठिन्याभ्यां भेदस्फूर्तिरिति लक्षणानुगतिः।।४४४।। पुनर्यथा। लसितेति। अङ्गानां प्रभा-अङ्गप्रभा कनकवद्-अङ्गप्रभाकनकाङ्ग प्रभा तया अति अतिशयेन दीपस्य शिखेव सा बाला लसिता शोभिता बभूव यत् यस्मात् दीपं विनाऽपि मन्दिरं गृहं सदीपमिव दीपसहितमिव विभाति शोभते-इत्यन्वयः। अत्र 'विभावना विनापिस्यात्कारणं कार्यजन्म चेत्।' इति लक्षणाद् दीपं विनाऽपि गृहप्राकाश्यरूप कार्यसम्पादनाद् विभावनालङ्कारः।।४४५।।

सखि! यदङ्गमुकुरेषु तत्प्रतिबिम्बं प्रतिभाति।
द्वित्रिचतुर्गुणिताकृता भूषणविभा विभाति।।४४६।।

अंग अंग प्रतिबिम्ब परिदर्पन से सब गात।
दुहरे तिहरे चौहरे भूषन जानै जात।।४४६।।

ता तन्वङ्ग्यपि निजतनुप्रभामयूख भरेण।
विलसति पीनतरेव खलु निन्दितचन्द्रकरेण।।४४७।।

अंग अंग छवि की लपट उपटत जात अछेह।
षरी पातरीउ तऊ लगै भरी सी देह।।४४७।।

पुनर्यथा। सखीति। हे सखीति नायकस्योक्तिः। अङ्गान्येव मुकुराणि-अङ्गमुकुराणि यस्याः अङ्ग-मुकुराणि यदङ्गमुकुराणि तेषु यदङ्गादर्शेषु भूषणानां विभा कान्तिः तत्प्रतिबिम्बप्रभया तत् प्रतिच्छायदीप्त्या अति अतिशयेन द्वित्रिचतुर्गुणिता कृता सती विभाति शोभते-इत्यन्वयः। यथा मुकुरेषु तत्तत् प्रतिबिम्बपातवशात् द्वित्रिचतुर्गुणितत्वं भवति एवमङ्गेषु भूषणविभायाः तत् प्रतिबिम्ब पातेन द्वित्रिचतुर्गुणित्वं विभातीत्यन्वयः। अत्राङ्गान्येवमुकुराणि-इति समासभेदरूपकालङ्कारः।।४४६।। पुनर्यथा। सेति। निन्दिताश्चन्द्रस्य करा अंशवो येन तेन निजतनोः प्रभाया ये मयूखाः गभस्तयस्तेषांभरेण भारेण सा बाला तन्वङ्ग्यपि सूक्ष्मरूपाऽपि खलु निश्चयेन पीनतरेव स्थूलतरेव विलसतिविशेषेण शोभते-इत्यर्थः। अत्र कार्श्यरूप प्रतिबन्धके सत्यपि स्थूलत्वरूपकार्य सम्पादनात् तृतीया विभावनाऽलङ्कारः।।४४७।।

यदा परिम्लाना तदा ज्ञाताऽऽलिभिरपि सैव।
अतो न धरचम्पकतनो चम्पकस्त्रजमधुनैव।।४४८।।

रञ्चु न लहियतु पहिरयौ कञ्चन से तन बाल।
कुम्हिलानै जानै परी उर चम्पे की माल।।४४८।।

लावण्येन च सगुणता तव रूपे प्रतिभाति।
मुहुरप्यापिबतोर्दृशोस्तृष्णा तदपि न याति।।४४९।।

त्यौं त्यौं प्यासेई रहै ज्यों ज्यों पियत अघाय।
सगुन सलौने रूपकी जुन चष तृषा बुझाय।।४४९।।

पुनर्यथा। यदेति। चम्पक इव तनुर्यस्याः सा चम्पकतनुः तत्सम्बुद्धौ हे चम्पकतनो! अत्र चम्पकशब्देन चम्पकपुष्पभवं गन्तव्यम्, पुष्पेजाती प्रभृतय इति वचनात्। त्वं चम्पस्त्रजं चम्पकपुष्पमाला अतो हेतोः न धर मा धारय। अधुना एवं यदा सा चम्पस्त्रक् परिम्लाना जाता तदा-आलिभिरपि सैव चम्पक स्त्रक् परिज्ञाता या पूर्वं वर्णैक्यात् न ज्ञायते-इत्यर्थः। तनोर्मालायाश्च भेदस्फूर्ति सदभावान्मीलितालङ्कारः।।४४८।। पुनर्यथा लावण्येति हे बाले! इति नायकोक्तिरवगन्तव्या। तव रूपे लावण्येन हेतुना सगुणता प्रतिभाति तदेवाह यतो मुहुरपि वारं वारम् आपिबतोः सादरावलोकनं कुर्वतोर्दृशोः मदीययोरिति शेषः। मदीयनेत्रयोः तृष्णा सादरवलोकनेच्छा तदपि न याति न गच्छतीत्यन्वयः।

अत्र वारं वारं सादरावलोकनेऽपि न तृष्णाशान्तिरिति कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे'–इति लक्षणाद्विशेषोक्तिरलङ्कारः।।४४९।।

चतुरतयालं चन्द्रमुखि तव चित्रारम्भाय।
कति न चित्र चतुरैरहो चकितं धृतिमपहाय।।४५०।।

लिषन बैठि जाकी सबी गहि गहि करब गरूर।
भये न केते जगत के चतुर चितेरे कूर।।४५०।।

तव तनुरवधितयैव कृता सर्वरूपस्य वै।
मम दृक् तदनुगतैव दृगनुगतं तत्सौभगम्।।४५१।।

तो तन अवधि अनूप रूप लग्यो सब जगत कौ।
मो द्रगलागे रूप दृगन लगे अति चटपटी।।४५१।।

सुरभि सचिक्कणश्यामशुचितरलरुचिरकेशेषु।
का पथेषु गत्वा मनो मुह्यति मुहुरपि तेषु।।४५२।।

सहज सचिक्कन स्याम रुचि सुचि सुगन्ध सुकुमार।
गनतनमन पथअपथ लषि विथुरे सुथरे बार।।४५२।।

पुनर्यथा। चतुरतयेति। हे चन्द्रमुखि! अहो! इति कोमलालापे यद्वा–अहो इत्याश्चर्ये। चित्रेषु चतुराः चित्रकार्ये चातुर्येण वर्त्तमानास्तैः कति बारं बहुवारमित्यर्थः। धृतिं धैर्यमपहाय त्यक्त्वा तवचित्रस्य आरम्भाय यतत्त्वच्चित्रं कर्तुमित्यर्थः। न चकित किन्तु बहुवारं चकितमिति काकुः। अतः चतुरतयाचातुर्येण अलं निवारणीयमित्यर्थः। एतेनातिशयसौन्दर्यतव तनौ–अस्तीति व्ययते। प्रतिक्षणं नवनवोत्पन्नसौन्दर्यदर्शनेन चित्रकर्त्तारश्चकिता इति भावः तेन मुग्धावस्थावगन्तव्या।।४५०।। पुनर्यथा। तवेति। सोरठा वृत्तमिदम्। हे बाले! इति सम्बुद्ध्यनुकर्षः। तव तनुर्मूर्त्तिः। सर्वरूपस्य सर्वेषां रूपाणां त्वद्रूपमेव शेवधिरिति भावः। एतेन सर्वरूपसौन्दर्यं त्वय्येव स्थितमिति व्यज्यते। अत एव मम दृक् मे दृष्टिः तदनुगतैव आसीत् त्वद्रूपत एवानुगता। तत्सौभगं तत्सौन्दर्यं दृगनुगतः दृष्टिषु प्रतियातमित्यन्वयः। अत्र दीपकैकावलीयोगान्माला दीपकमिष्यते इति लक्षणान्मालादीपकालङ्कारः। अत्र सर्वेषां रूपं त्वय्येवानुतमित्यादिना तत्तदुचितलिङ्ग परिणामेन अन्वायाद् दीपकं रूपादीनामुत्तरोत्तर विशेषण प्रभावेण एकावली योग–इति लक्षणानुगतिः।।४५१।। अथ केशवर्णनम्। सुरभीति। सुरभयः सचिक्किणाः श्यामाः शुचयस्तरलाः रुचिराश्च ये केशास्तेषु कीदृशेषु कुत्सिताः पन्थानःकापथास्तेषु कापथतुल्येत्यर्थः। गन्तुमशक्येष्विति भावः। मे मनो गत्वा मुहुर्मुहुरपितेषु गच्छति। पुनः पुनस्तत्रैव याति–इति भावः। कश्चित्कापथं गत्वा मुहुरपि तेषु गच्छति। एतत्तु तेष्वेव मुह्यतीत्याश्चर्यमिति नायकस्य उक्तिः।।४५२।।

तव सुकेशि! केशा अमी त्याजयन्ति जगतोऽपि।
बन्धयन्ति बन्धनमिता हृत्वा हृदयमितोऽपि।।४५३।।

छुटट छुटावै जगत तै सटकारे सुकुमार।
मन बाँधत वैनी बधे नील छबीले बार।।४५३।।

पुनर्यथा। तवेति। हे सुकेशि ! अमी–इत्यङ्गुल्या निर्देशः अमी तव केशाः इति बहुवचनोपादानात् प्रसृताः केशा इति तयाऽति मुक्ताः सन्तः जगतः लोकाद् अन्यान् त्याजयन्ति। विरक्तिमुत्पादयन्तीत्यर्थः यान् दृष्ट्वा जनो मुह्यति तदलाभे सन्तापाधिक्यादि्वरागोत्पत्तिरिति भावः। पुनः इतोऽपि मत्सकाशाद् हृदयं मनः ममेति शेष। हृत्वा चोरयित्वा स्वयं बन्धनमिताः प्राप्तः सन्तः अन्याद् बन्धयन्ति। ये विमुक्ताः तेऽन्यान् जगतस्त्याजयन्ति। ये बद्धास्ते अन्यान् बन्धयन्तीति विरोधदर्शनाद् 'आभासत्वेऽपि विरोधस्य विरोधाभास इष्यते' इति लक्षणात् विरोधाभासालङ्कारः।।४५३।।

कृत्वा तद्दर्शनमहो वेणीं यासि वृथैव।
अस्या अप्येणीदृशो वेणी चरणमितेव।।४५४।।

ताहि देखि मनतीरत न भटकत फिरत बलाइ।
जा मृगनैनीके सदा वैनी परस तपाइ।।४५४।।

उन्नमय्य बाहुद्वयं कचपुञ्जं गृह्णाति।
प्रिया केशबन्धे मनः कस्य न सा बध्नाति।।४५५।।

कच समेटि कर भुजि उलटि षये सीस पट डारि।
काकौ मन बाँधत न यह जूरौं बाँधन हार।।४५५।।

अथ वेणीवर्णनम्। कृत्वेति। अहो इत्याश्चर्ये हे सखे! इति सम्बुद्ध्याक्षेपः। मित्रं प्रति नायकस्योक्तिः। तस्याः बालायाः दर्शनं कृत्वा पुनर्वेणी नदीत्रयसङ्गमरूपां वृथैव यासि। अस्या ऐणीदृशः चरणमिता प्राप्ता वेणी गुम्फितकेशरूपा वर्तते–इत्यन्वयः। एतेन वेणीदर्शनार्थमागच्छ वेणी तु तस्याश्चरणगतैवेति वेणी शब्दप्रयोगादत्र वेणीशब्दस्यार्थद्वयोपपादत्वादि्वरोधाभासपरिहारः। यद्वा मुक्तामणि गुम्फिता वेणी तस्याश्चरणाब्जलम्बिनीति तां त्वं पश्येति नायकं प्रति सख्या उक्तिः। मुक्तामणिभप्रभासरस्वतीति तिसृणां सङ्गमो वेणी प्रसिद्धं तस्माद् वेणी दर्शनादेव वेणीदर्शनं भविष्यत्येव पुनस्तदर्थः मायाहीति निषेधसिद्धिः।।४५४।। वेणी बन्धनक्रियामाह। उन्नमय्येति। सा प्रिया बाहुद्वय मुन्नमय्य–ऊर्ध्वं कृत्वाकचानां पुञ्जं केशसमूहं यदा बन्धनार्थं गृह्णाति तदा स्वकीये केशबन्धे कस्य मनो न बध्नाति–अपितु सर्वस्य बध्नाति–इति काकुः। एतेन मदीयं मनः तत्रैव बद्धम्–इति नायकोक्तिरवगन्तव्या।।४५५।।

कनक-घटितमणि जटितमपि तिलके भाले भाति।
बाले किं शशिमण्डले वासरमणिरुपयाति।।४५६।।

नीकौ लसत लटार पर बैंदी जटित जराम।
छविहिं बढ़ावत रवि मनौ ससिमण्डल में आय।।४५६।।

लोकेऽङ्को धृतबिन्दुः किल दशगुणतामुपयाति।
वदनमिन्दुमुखि! विन्दुयुतमगणितविभं विभाति।।४६७।।

कहत सबै वेंदी दिए आँक दसगुनो होत।
तियललाट वैंदी दियै अगनित बढ़त उदोत।।४५७।।

अरुणविन्दु विस्तृत कचं वदनं लसति तदेव।
सूर्याचन्द्रमसावसौ ग्रसते राहुरिरिहेव।।४५८।।

भाल लाल वैंदी छुटे वार वार छुवि देत।
गह्यो राहु अति आहकरि मनु ससि सूर समेत।।४५८।।

लालटभूषणं वर्णयति। कनकेति। हे बाले! कनकेन सुवर्णेन घटितं मणिभिर्जटितमपि तिलकं तिलकाकृतिभूषणमित्यर्थः। बिन्दी (टिकुली)-इति लोके प्रसिद्धम्। तव भाले भाति शोभते। तत्रोत्प्रेक्षते। किमित्युप्रेक्षायां शशिमण्डले चन्द्रमण्डले वासरमणिः सूर्यं किमुपयाति गच्छति-इति-अद्भुतोक्त्या नायकोक्तिरिति।।४५६।। ललाटविन्दुं वर्णयति। लोके इति। हे इन्दुमुखि! हे चन्द्रवदने। लोकेअङ्क एकआदिरूपः धृतोविन्दुर्यस्मिन् स धृतबिन्दुः सन् किल निश्चयेन दशगुणतामुपयाति। एकादशशतसहस्रेत्यादिना दशगुणत्वं विभातीति। विन्दुना कुङ्कुमादि बिन्दुना काचिविन्दुना वा युक्तं तव वदनं मुखं तु-अगणिता अनन्तसङ्ख्या गुणा विभा कान्तिर्यस्मिन् तद् एतादृशं विभातीति ततोऽप्याधिक्यप्रतिपादनाद् व्यतिरेकालङ्कारः।।४५७।। पुनर्यथा। अरुणेति। हे बाले! इति सम्बुद्ध्यनुकर्षः। तदेव ते वदनं यद् अरुणो रक्तवर्णो विदुर्यस्मिन् तत् पुनर्विस्तृताः कचाः केशा यस्मिन् तत् एवं लसति शोभते। इह लोके असौ राहुः सूर्याचन्द्रमसौ पुष्पवन्तौ एक कालावच्छदेन ग्रसत इवेत्युत्प्रेक्षा। वदनं चन्द्रः अरुणबिन्दुः सूर्यः विस्तृताः कचाः राहुरित्यद्भुतोपमालङ्कारः ललाटभूषवर्णनेन नायकोक्तिरवगन्तव्या।।४५८।।

यदा विन्दुहीरक जटितमिन्दुमुखी विदधाति।
क्रोडीकृतबुधविधुसमं तदाननं प्रतिभाति।।४५९।।

तिय मुख लखि हीराजरी वैंदी बढ़ै विनोद।
सुत सनेह मानौ लियौ बुध पूरन विधु गोद।।४५९।।

अरुणबिन्दुरक्षतयुतः तव वदने लसति स्म।
राहुमियेव कलानिधे; कलाकुजे वसतिस्म।।४६०।।

भाल लाल वैंदी लसै आषत रहे विराजि।
इन्दु कला कुज मैं वसी मनौ राहुभयभाजि।।४६०।।

मिलितश्चन्दन विन्दुरपि गौरमुखच्छविनैव।
तथा तथा विलसति मदारुण्यं यथा यथैव।।४६१।।

मिलि चन्दन वैंदी रही गोरे मुख न लषाय।
ज्यौं ज्यौं मद लाली चढ़ै त्यों त्यों उघरत जाइ।।४६१।।

यदेति। इन्दुमुखी हीरकेन मणिना जटितं विन्दुं ललाटभूषणं यदा यस्मिन् काले विदधाति धत्ते। तदा तस्मिन् काले तदाननं तस्या आननं वदनं क्रोडीकृतः बुधो येन एतादृशो यो विधुश्चन्द्रः तेन समं प्रतिभाति–इत्यन्वयः। अत्र विधोः पुत्रत्वात् बुधस्य क्रोडीकरणं युक्तमिति भावः। स्याद्बिम्ब प्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिरितिलक्षणात्।।४५९।। पुनर्यथा। अरुणेति। हे बाले–इति सम्बुद्ध्याक्षेपः। अक्षतैर्युतः अरुणश्चासौ बिन्दुस्तव वदने मुखे लसति शोभते यथा कलानिधेश्चन्द्रस्य कलाराहोर्भिया भीत्येव कुजे भौममण्डले वसति तस्मात्तथेति हेतूत्प्रेक्षागर्भितोऽयं दृष्टान्तः उत्प्रेक्षाऽलङ्कारः।।४६०।। पुनर्यथा। मिलत इति। गौरं वर्णं च तन्मुखं तस्य या छविः तयैव चन्द्रस्य बिन्दुर्मिलित आसीत्। वर्णैक्यान्न भासते–इति भावः। पुनर्यथा यथैवमदारुण्यं मदस्य यौववस्य यद्वाऽऽसवमदस्यारुणभावे वदने आयाति। तथा तथैव विलसति भिन्नत्वेन प्रकाशत इत्यर्थः। भेदवैशिष्ट्यो स्फूर्तावुन्मीलितविशेषकाविति–लक्षणादुन्मीलिता–लङ्कारः।।४६१।।

अरुण बिन्दु कुङ्कुमतिलक वदनमिषै रसवन्ति।
कुजगुरुशशिनो योगतो दृग्जगन्ति कुर्वन्ति।।४६२।।

मङ्गल बिन्दु सुरङ्ग मुष ससि केसर आड़गुरु।
इनकनाड़ी लहि संग रसमय किय लोचन जगत।।४६२।।

पञ्चवर्णवरबिन्दुना वदनप्रभा विभाति।
तदुपरि चित्र पटच्छटाधिकसुषमामुपयाति।।४६३।।

पंचरँग रँग वैंदीबनी उठी जागि मुषजोति।
पहिरै चीरचिरौटिया चटक चौगुनी होति।।४६३।।

पुनर्यथा। अरुणेति। कुजो भौमः गुरु बृहस्पतिः शशीचन्द्र एतेषां समाहारः कुजगुरुशशिनः। योगतः एकत्रावस्थानात् मिषेण व्याजेन रसवन्ति कुर्वन्ति। रसोजलं रसो हर्ष रसः श्रृङ्गार उच्यते' इत्यनेकार्थाभिधानात्। अरुणविन्दु प्रतिरूपत्वात् तन्मिषेण गुरुः। वदनप्रतिरूपकत्वात् तन्मिषेण कुजेः

कुङ्कुमतिलक प्रतिरूपकत्वात् तन्मिषेण गुरुः। वदनप्रतिरूपकत्वात् तन्मिषेण चन्द्रश्च एक राशौ यथा समेष्यन्ति। तदा जगन्ति लोकात् रसवन्ति भवन्ति-इति ज्योतिःशास्त्रयोक्तजयोगः प्रसिद्धः। अत्रापि दृशोः रसवन्ति कुर्वन्ति-इति श्लेषभूत कैतवापह्नुतिगर्भित समाभेदरूपकालङ्कारः।।४६२।। पुनर्यथा पञ्चवर्णेति। पञ्च वर्णश्चासौ वरः श्रेष्ठो यो बिन्दुस्तेन करणभूतेन वदनस्य प्रभा तस्या इति शेषः। विभाति शोभते, तदुपरि पञ्चवर्णवरबिन्दुयुक्त-वदनोपरिचित्रवर्णो यः पट; तस्य या छटा कान्तिश्चाकचिक्यं साऽधिकसुषममुपयाति शोभाधिक्यं ददातीत्यर्थः। सुषमा परमा शोभाइत्यमरः।।४६३।।

किञ्चित् कुञ्चितनासिकं नर्तितदृशं तथापि।
कण्टकमिव तद्भ्रूतटं विद्धयति मामद्यापि।।४६४।।

नासा मोरि नचाइ दृग् करी ककाई सौंह।
काँटे सी कसकत हियै गड़ी कटीली भौंह।।४६४।।

तिर्यक् तिलकज्यं सरलतिलकबाणफलमेव।
भ्रुकुटिधनुर्दृष्ट्वाऽतनुस्तरुणमृगं हन्त्येव।।४६५।।

षौरि पनच भ्रकुटी धनुष बधिक समरतजि कान।
हनत तरुन मृग तिलक सर सुरक भाल भरि तान।।४६५।।

नयनयुगं कृतमज्जनेसज्जं शृङ्गाराय।
तदञ्जनमपि सम्भवति खञ्जनमदभङ्गाय।।४६६।।

रस सिँगार मज्जन किये कज्जन भज्जन दैन।
अज्जनरञ्जनहू बिना षज्जन गज्जन नैन।।४६६।।

भ्रुकुटि शोभा वर्णयति। किञ्चिदिति। तद्भ्रूतटं तस्या भ्रूतटं तथापि। किञ्चित्कुञ्जिता नासिका यस्यां क्रियायां यथाभवति तथा पुनर्नर्त्तितता तादृक् यस्यां क्रियायामिति कण्टकमिव अद्यापि अधुनाऽपि मां विद्धयति-इति स्मृतिदशोक्ता।।४६४।। पुनर्यथा तिर्यगिति। अतनुः कामः भ्रुकुटिरेव धनुर्धृत्वा तरुण एव मृगस्तं हन्त्येव प्रहरत्येव। कीदृशं भ्रुकुटिधनुः तिर्यक् तिलकमेव ज्या प्रत्यञ्चा यस्मिन् तत्। पुनः सरलतिलकमेव बाणं फलं यस्मिन् तत्। तिर्यक्तिलकमध्यदेशे बाणफलकाकारं सरलतिलकमस्ति। भ्रुकुटि युगं धनुषाकरं गृहीत्वा तरुणमृगं निहन्ति इति स्पष्टार्थ।।४६५।। पुनर्नेत्रे वर्णयति। नयनयुगमिति। हे कृतमञ्जने कृतं मज्जनं स्नानं यया सा कृतमज्जना तत्सम्बुद्धौ नयनयोर्युगं तवेति शेषः। यदा शृङ्गाराय शृङ्गारं कर्तुमित्यर्थः। सज्जमासीत् तदा-अनञ्जनमपि अञ्जनरहितमपि खञ्जनानां पक्षिविशेषाणां मदभङ्गाय स भवतीत्यन्वयः। हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मतेति लक्षणाद् द्वितीया विभावना नेत्रयुगस्याञ्जनराहित्येऽपि खज्जन मदभङ्गरूपकार्यसम्भव सामर्थ्याधिक्य वर्णनात्।।४६६।।

चित्तेन च चातुरतया तामनुनयनयुगेन।
अहमहमिकया मदनमतमाचरितं त्रितयेन।।४६७।।

अटतै टरत न वर घरे दई मरक मनुमैन।
होड़ी होड़ा वढ़ि चलै चित चतुराई नैन।।४६७।।

नूनं मदनमहामुनेर्योगगतिः पठितैव।
नयनाभ्यामद्वैततावाप्त्यै श्रुतिः श्रितैव।।४६८।।

जोग जुगति खिषई सबै मनो महामुनि मैन।
चाहत प्रिय अद्वैतता काननचारी नैन।।४६८।।

पुनर्यथा। चित्तेनेति। नायकोक्तिः। यद्वासख्याः सखीं प्रत्युक्तिः। यद्वानायकं प्रति सख्या उक्तिः। प्रथमं चित्तेन च पुनः चातुरतया चातुर्येण तामनुगतां चातुरता मनुपश्चान्नयनयुगेन-एतेन त्रिततयेन-अहमहमिकयाऽहंपूर्वमहं पूर्वमिति क्रियया मदनस्य कामस्य मतं जगन्मोहनादिकार्यकरणोद्यत-त्वमाचरितमासीदिति-अन्वयः। एतेनैषां त्रयाणां मध्ये सर्वेऽपि मदनमतानुसारिण इति भावः। 'अत्राहं प्रथमिका भाजामेककार्यान्वयेऽपि स' इतिलक्षणात् समुच्चयालङ्कारस्य द्विवतीयो भेदः।।४६७।। पुनर्यथा नूनमिति। नयनाभ्यां नूनमिति वितर्के मदन एव महामुनिः तस्माद् योगस्य संयोगस्य गतिरेव निश्चयेन पठिता पुनः अद्वैताया अवाप्त्यै प्राप्तये श्रुतिः कर्णःश्रिता आश्रितेत्यन्वयः। अत्र योगगतिः अद्वैतावाप्त्यै श्रुतिः श्रितेति श्लिष्ट पदोपादानात् मदनस्योपमेयस्य महामुनेरूपमानस्य चोभयत्रार्थान्तर सम्भवेनानुरञ्जनात् श्लेषमूलकसमाभेद रूपकालङ्कारः। स च नूनमिति सम्भावनाया असिद्धास्पदा-फलोत्प्रेक्षागर्भितोऽव-गन्तव्यः।।४६८।।

अद्भुत इति मृगलोचने मृगया विधिस्तवैव।
यल्लोचनमृगकृतचतुरनरहिंसनमधुनैव ।।४६९।।

खेलन सिखये अलि भले चतुर अहेरी मार।
काननचारी नैनमृगनागरन रन सिकार।।४६९।।

यत्रिपर्णसायकसमं दृष्ट्वा नयन युगं च।
लज्जयेव मज्जति जले तिमिकुलमब्जकुलं च।।४७०।।

सायक सम घायक नयन रँगे त्रिविध रँग जात।
झषौ विलषि जल जात दुरि लषि जल जात लजात।।४७०।।

पुनर्यथा। अद्भुत इति। हे मृगलोचने तवैव मृगया विधिः वनविहारविधिः इतिहेतोः अद्भुतो भाति। इतीति किं यत् यस्मात् लोचने एव मृगौ ताभ्यां कृतं चतुरनराणां नागरजनानां हिंसनं वधः। अधुनैव जातमित्यन्वयः। अन्यत्र मृगया विधौ वधिकादिनरकृतो मृगवधः, अत्र लोचमृगकृत

चतुरनरहिंसनमित्यद्भुतत्वं अत्र अकारणात्कार्यजन्मचतुर्थीस्यादिवभावना'-इति लक्षणात् चतुर्थी विभावना ज्ञातव्या।।४६९।। पुनर्यथा यत्रिवर्णेति। त्रयोवर्णा यस्मिन् सः त्रिवर्णः स चा सौ सायको वाणस्तेन समं तुल्यं नयनयोर्युगं दृष्ट्वा लज्जयेव स्वयं तत्साभ्याभावात् तिमिकुलं मत्स्यकुलमब्जकुलं कमलानां कुलं समूहश्च जले मज्जतीत्यसिद्धास्पदा हेतूत्प्रेक्षा तिमिकुलानामप्सु लज्जाहेतुना मज्जनमसिद्धमिति लक्षणानुगतिः। सम्भावनास्यादुत्प्रेक्षावस्तुहेतुफलात्मना उक्तानुक्तास्पदायात्र सिद्धासिद्धास्पदे परे-इति लक्षणात्।।४७०।।

पश्यामन्थरमीक्षणं मन्मथसायकतोऽपि।
हरे! हारि हरिणीदृशो हरिणीलोचनतोऽपि।।४७१।।

वरजीते सर मैन के येसे देषे मैन।
हरिनि से नैनान तै हरिनी के ये नैन।।४७१।।

वदन विनिर्गतवचनमिह मत्वालीकमितीव।
विलोचनं रचयति विधिः संलापायाकृतीव।।४७२।।

झूठे जानि न सङ्ग्रहे मनुमुह निकसे वैन।
याही तै मानौ किए बातन कौ विधि नैन।।४७२।।

दृशि लग्नं विद्धति मनो व्यथयत्यङ्गमितीव।
तावकीन ईक्षणशरस्तीक्ष्णो विषमोऽतीव।।४७३।।

द्रगन लगत वेधत हियौ पिकल करत अँग आन।
ये तेरे सब तै विषम ईछन तीछन बान।।४७३।।

( सम्पादकः-४७२ दोहायास्तृतीयचतुर्थपादयोः स्थाने लिथोप्रिंटकारेण ४७३ दोहायाः प्रथमद्वितीयपादयोरुपयोगः कृत आसीदेतेन टीकासङ्गतिर्नभवति। अतः मया टीकामाधारीकृत्य ४७२ दोहायाः तृतीयचतुर्थपदयोर्निर्मितिर्व्यधायि। )

पुनर्यथा पश्येति। हे हरे! इति सख्या उक्ति। हरिण्या दृगिव दृक् यस्या सा हरिणीदृक् तस्याः हरिणीदृशः अस्या इति शेषः। मन्मथस्य कामस्य सायकतः बाणादपि-अमन्थरं क्षीक्ष्णतरमीक्षणत्वं पश्य पुनः कीदृशां हरिणीनां लोचनतोऽपि हारि मनोहरमित्यन्वयः। अत्रोपमानभूत मदनसायक-हरिणीलोचनयोरप्यनयोर्लोचनयो रुपमेयभूतयोराधिक्यप्रतिपादनात् व्यतिरेकालङ्कारः। हरे हरिणीत्यादि-हकारोपादानात्-शब्दालङ्कारेषु यमकालङ्कारोऽपि ज्ञेयः।।४७।। पुनर्यथा। वदनेति। वदनात् विनिर्गतं वदनमलीकं मिथ्या भवति-इहास्मिन् नायकयोः संलापे-इत्यर्थः। तस्मादकृतीव-अकृतार्थ इव विधिर्ब्रह्मा संलापाय परस्पर वाग्विलासाय विलोचनं रचयतीति लोचनरचनाय-अहेतोर्हेतुत्वसम्भावनमसिद्धास्पदा हेतूत्प्रेक्षाऽवगन्तव्या। अत्र वाक्कृतः संलापो न समीचीनो लोचनव्यापारकृतं सङ्केतसूचनादिकं सत्यमिति

निष्कर्षः।।४७२।। पुनर्यथा दृशीति। इति सम्बुद्ध्याक्षेपः। नायकोक्तिः। तवायं तावकीन ईक्षणशरो दृशिलग्नः सन् मनोहदयं विद्धति। इतीव हेतोः अङ्ग व्यथयति पीडयति। अतएव-अतीववतीक्ष्णो विषमश्चेतन्वयः अत्र विरुद्धभिन्नदेशत्वं कार्यहेतोरसङ्गतिरिति लक्षणादसगङ्गतिरलङ्कारः।।४७३।।

अयि सलज्जमपि चञ्चलं सकज्जलं प्रतिभाति।
वशीकर्तुमिव किं नरं लोचन युगं न याति।।४७४।।

फिर फिर दौरत देषियतु निचले नैकु रहैन।
ये कजारारे कौन पर करत कजाषी नैन।।४७४।।

नीलशाटिका जवनिकां कृत्वा दृग्विधिकेन।
निगृहीतमानसमृगो हृदयगतोऽपि बलेन।।४७५।।

सारी डारी नील की चोट अचूक चुकै न।
मो मन मृग कर वर गहे अहे अहेरी नैन।।४७५।।

दृक् पतगी शशहिंसिका प्रडीनादिभेदेन।
गत्वा मनः पतङ्गमपि नीचैर्नयति बलेन।।४७६।।

नीचै ई नीचै निपट डीठि कुही लौ दौरि।
उठि ऊचै नीचै दियौ मन कुलङ्ग झकभोरि।।४७६।।

अयीति। कोमलालापे हे बाले-इति सम्बुद्ध्याक्षेपः। लोचनयोर्युगं सकज्जलं कज्जलेन सहितं चञ्चलं प्रतिभाति। नरं पश्यन्तं जनमित्यर्थः। किं वशीकर्तुं नयाति किन्तु यात्येवेति काकुः।।४७४।। पुनर्यथा। नीलेति। दृगेव वधिकः व्याधः तेन हृदयगतोऽपि मानसमृगः मनोमृगः बलेन नीलानीलवर्णा चासौ शाटिका च परिधानीय वस्त्रं सैव जवनिका तां कृत्वा निगृहीत इत्यन्वयः। यथा बधिको हरितपत्रादिरचिता जवनिकीकृत्वा मृगं गृह्यति तथा यमोपीति समाभेदरूपकालङ्कारः।।४७५।। दृष्टिर्वर्णयति। दृगिति। दृक् दृष्टिः तस्या इति शेषः। शशहिंसिका पतगी इवेति-इव शब्दाक्षेपः। प्रडीनादि भेदेन प्रडीनोड्डीन सडीनान्येताः खगगतिक्रियाः। इत्यमरः। गत्वा मन एव पतङ्गः पक्षिविशेषः तमपि बलेन नीचैर्नयति नीचैः पातयति। स्ववशीकरोतीति निष्कर्षः। अत्र समाभेदरूपकालङ्कारः।।४७६।।

परस्परं नयने उमे निजकटाक्षखड्गेन।
पक्ष्मचर्मणी युद्धतो वीरचक्रगमनेन।।४७७।।

फूले फलक तलै फरी पल कटाक्ष करवार।
करत वचावत पियनयन पायक घाय हजार।।४७७।।

विज्यं भ्रुकुटि धनुश्चलं चित्तं बेध्यमनेन।
धनुष्मत्त्वमद्भुतमतो वक्रदृष्टिबाणेन।।४७८।।

तिय कतक मनौति सिषी विन जिन मौह कमान।
चलचित बेधत चुकत नहिवेक विलोचन बान।।४७८।।

पुनर्यथा। परस्ररमिति। उभे नयने नायकयोरिति शेषः। निजः कटाक्ष एव खड्गस्तेन कारणभूतेन तथा वीरवच्चक्रगमनं तेन परस्परं युद्ध्यतः युद्ध कुरुतः,कीदृशे उभे नयने पक्ष्मणी एव चर्मणी ययोस्तादृशे यथावीरौ खड्गचर्मणी धृत्वा चक्रगत्या युद्ध्यतःतथा–उभे नयने इति समाभेद-रूपकालङ्कारः।।४७७।। पुनर्यथा विज्यमिति। हे बाले! इति सम्बुद्ध्यनुकर्षः। तव धनुष्मत्त्वमद्-भुतमाश्चर्यरूपमित्यर्थः। तदेवाह। विगताज्या प्रत्यञ्चा यस्मात् तत् विज्यं भ्रुकुटिरेव धनुः वक्राचासौ दृष्टिः वक्रदृष्टिः वक्रदृष्टिरेव बाणस्तेन करणभूतेनानेन धनुषा अनेन बाणेन चलं चञ्चलं चित्तं बेध्यं लोकस्तु प्रत्यञ्चायुक्तधनुषा सरलबाणेन स्थिरं बेध्यं बिध्यति, अयं तु न तथेति हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मतेति विभावनाऽलङ्कारः।।४७८।।

दृशं विकर्षन्तीय दृक् दत्त्वा मय्यलसैव।
रमणी पुनरन्तर्हिता त्वरितं द्वारगतैव।।४७९।।

ऐचत सी चितवन चितै भई ओट अलसाइ।
फिरि उझकन कौ मृगनयनि द्रगन लगनिया लाय।।४७९।।

द्रुतं चन्द्रवदना च सा वसनावृतवदनैव।
प्रदर्शयित्वा निजतनुं दहनलतेव गतैव।।४८०।।

सटपटात सी सखिमुखी मुष घूँघट पट ढाकि।
पावक भर सी झमकि कै गई औचकाँ झाँकि।।४८०।।

वदन पटान्तर्गतनयनयुगमतिचलं विभाति।
उच्छलदमरसरिज्जले मीनद्वयमिव याति।।४८०।।

चमचमात चंचल नयन विच घूँघट पट झीन।
मानहु सरसरिता विमल जल उछलत जुग मीन।।४८१।।

पुनर्यथा। दृशमिति। सखीं प्रति नायकोक्तिः। अलसा अलसयुतैव तस्याः दृक् दृष्टिः। मयि दृशं दत्वा मां विकर्षन्ती सा रमणी द्वारगतैव त्वरितं पुनः अन्तर्हिता अन्तर्गृहेगता–आसीदित्यन्वयः अत्र मां विकर्षन्तीवेत्युत्प्रेक्षा बोध्या।।४७९।। द्रुतमिति। चन्द्रवदवदनं यस्याः सा वसनेन आवृतम् आच्छन्नं वदनं यस्याः सा निजां तनुं मामिति शेषः। प्रदर्शयित्वा। दहन लतेव। अग्निज्वालेव द्रुतं शीघ्रमेव गता–आसीत् तामधुनाऽपि स्मरामीति भावः। सखीं प्रति नायकस्योक्तिः।।४८०।। वदनेऽति।

वदनस्य पटः तस्यान्तर्गतम्। यन्नयनयुगं तस्या इति शेषः। अतिचल मतिचञ्चलं विभाति शोभते। अमराणां सरिता अमरसरित् स्वर्णदी तस्या यज्जलं अमरसरितज्जलम् उच्छलञ्च तद् अमरसरिज्जलमुच्छलदभरसरितञ्जलं तस्मिन् मीनयोर्द्वयं मीनद्वयं मीनद्वयमिव याति-इति अन्वयः। अत्रोपमेयादीनां चतुर्णामुपादानात् पूर्णोपमा बोध्यः।।४८१।।

अतिखञ्जनमृगमीनमपि न हि तुल्यं कथमेव।
दृशो यदर्द्धदृशैव हरिरासवशीकृत एव।।४८२।।

वारौ बलि तो दृगन पर अलिखञ्जन मृगमीन।
आदी डीठि चितौ न जिहि किए लाल आधीन।।४८२।।

पूर्वं पीयूषायते या दृक् प्रिये तवैव।
सा वृश्चिकदंशायते विरहेऽधुना ममैव।।४८३।।

जोत बहुती दिषा दिषी भई अभी इक अंक।
दगै तिरीची डीठि अब ह्वै बीछी कौ डंक।।४८३।।

हृदिकुशाग्रनयनाग्रकृतवेध वेदना नैव।
यथानासिका बेधकृत वेददुःखमधुनैव।।४८४।।

बेधन अनियारे द्रगन बेधत करत न षेद।
वर बस बेधत मो हियौ तो नासा कौ वेध।।४८४।।

अलीति। अलयो भ्रमराः खञ्जनः पक्षिविशेषः मृगाश्चमीनाश्च-एषां समाहारः-अलि खञ्जनमृगमीनं तस्या; दृशः दृष्टेः कथमपि तुल्यं नहीति। यत् यस्मात् अर्द्धाचासौ दृक् अर्द्धदृक् तथा अर्द्धदृशैव किञ्चिद् दृष्टैव हरिः कृष्णे वशीकृतः सन् आस स्थित इत्यर्थः। हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता' इति लक्षणाद्विभावना।।४८२।। पूर्वमिति। हे प्रिये! या तवैव दृक् दृष्टिः पूर्वं संयोगावस्थायां पीयूषायते पीयूषमिवाचरति। सा दृक् अधुनैव विरहे वियोगावस्थायां ममैव वृश्चिकदंशायते वृश्चिकदंशनमिवाचरति पीडयतीत्यर्थः।।४८३।। नासिकावेधं वर्णयति। हृदीति। कुशाग्रमिव यन्नयनाग्रं तीक्ष्णतरमित्यर्थः। तत्कृतो यो बेधस्तस्य या वेदना पीडा सा तथा हृदि मदीये मानसेनैव भवति तीक्ष्णाग्रेण वस्तुनो वेधो युक्त इति भावः। यथा नासिकायां यो वेधः छिद्रं तत्कृतो यो वेधो व्यधनं तस्य दुःखमधुनैव जातमित्यर्थः। स्वयं विद्धः परहृदयं विध्यतीति अकारणात्कार्य-जन्मदृष्टा काचिदि्वभावना इति लक्षणाद् विभावनाऽलङ्कारः।।४८४।।

लसति नीलमणिभूषणं नासाविवरमतीव।
चम्पककलिकायामलिर्निःशङ्कं वसतीव।।४८५।।

जटितनीलमनि जगमगै सींक सुहाई नाक।
मनौ अली चम्पक कली वसि रसलेत निसांक।।४८५।।

मानभ्रमजनकेन सखि ललनाललिततरेण।
मा भूषयनासाविवरमयि लवङ्गकुसुमेन।।४८६।।

जदपि लौंग ललितौ तऊ तूँ न पहिरइ आँक।
सदा संग बढ़िये रहै रहै चढ़ी सी नाक।।४८६।।

तव गर्वं नासाभरणमुक्ताफलद्वयेन।
जगदद्दृशां ग्रसनं भवति यद्ग्रथितेनानेन।।४८७।।

इन दोई मौती सुगथ तू नथगरव निसाक।
जिन पहिरत जगदृगग्रसत लसत हसत सीनाक।।४८७।।

नानाभूषणं वर्णयति। लसतीति। नीलमणेर्भूषणं यस्मिन् तत् नासायां विवरं छिद्रं अतीव लसति शोभते। तद्दृष्टान्तमाह चम्पककलिकायां यथा अलिर्भ्रमरः निःशङ्कं यथा भवति तथा वसतीवेत्युत्प्रेक्षागर्भितोऽयं दृष्टान्तः।।४८५।। मानभ्रमेति। अयि–इति कोमलालापे हे सखीति सख्याः नायिकां प्रत्युक्तिः। लवङ्गकुसुमेन नासायाः विवरं मा भूषय। लवङ्गं देवकुसुममित्यमरः। कीदृशेन ललनानामपि ललिततरेण। पुनः कीदृशेन। मानभ्रमजनकेन मानभ्रमसूचकेनेत्यर्थः।।४८६।। तवेति नासाया आभरणं नासाभरणं तत्सम्बुद्धौ हेनासाभरण! मुक्ताफलद्वयेन तव गर्वो वर्तते। यत् यस्मात् अनेन मुक्ताफलद्वयेन ग्रथितेन सता जगद् दृशां लोकदृष्टीनां ग्रसनं बन्धनं भवतीत्यर्थः। एतेन तव नासाभरणं दृष्ट्वा जगद्दृष्टयस्तत्रैव सौन्दर्यशोभावशीभूता यान्ति। तेन वर्त्तुलाकारं जगद्दृग्ग्रसनकारि यन्त्रमित्यर्थः।।४८७।।

नासाभूषणसजलभुवि धन्योऽसि त्वमनेन।
निर्विशङ्कमनिशं रसो यदधरमधुररसेन।।४८८।।

बेसर मोती धनि तुही को पूछै कुल जाति।
पीवै कर तिल ओठ कौ रस निधरक दिनरात।।४८८।।

मृदुलतया सौरभतया सुकपोलं प्रतिभाति।
महासहासुमनोदलं न हि लग्नं प्रतिभाति।।४८९।।

वरन वास सुकुमारता सब विधि रही समाइ।
पषुरी लगी गुलाब की गातन जानी जाय।।४८९।।

सज्जति कज्जलविन्दुमिह परदृक्पातभयेन।
प्रियप्रियावदने दृशो निपतन्त्यधिकमनेन।।४९०।।

लौने मुख डीठि न लगै यों कहि दीनौ ईठ।
दूनी ह्वै लागन लगी दियै डिठौना डीठि।।४९०।।

पुनर्यथा। नासाभूषणेति। हे नासाभूषण! जलजा नासिकाऽऽभरस्थमुक्ताफलभुवि पृथिव्यामनेन हेतुना त्वं धन्योऽसि यत् निर्विशङ्कं यथा-भवति तथा-अधरस्य मधुररसेन-अनिशं निरन्तरं रतोऽसीत्यन्वयः। अन्येषां यदा-कदाचित्तल्लाभस्त्वं तु रिन्तरमधुररसास्वादी अत एव भाग्यवान्-इति भावः।।४८८।। कपोलौ वर्णयति। मृदुलतयेति। मृदुलतया मार्दवेन सौरभतया सौगन्धेन सुष्ठुकपोलयोः प्रभया कान्त्या च अति अतिशयेन लग्नं यत् महासहायाः सुमनसः अम्लानस्तुममहासहा-इत्यमरः। दलं लग्नं सद् भिन्नत्वेन प्रतिभाति। मीलितालङ्कारः। 'मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते'-इति लक्षणात्।।४८९।। भालश्यामबिन्दुं वर्णयति। रज्जतीति प्रियः नायकः इह प्रियायाः वदने परस्य अन्यस्य यो दृक् पातः तस्य भयेन कज्जलस्य विन्दुं सज्जति। अनेन कज्जलविन्दुना दृशः दृष्टयः सर्वेषामिति शेषः। अधिकं यथा भवति तथा निपतन्तीत्यन्वयः। अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थ-समुद्यमादितिलक्षणात् विषमालङ्कारः।।४९०।।

चन्द्रादपि सुन्दरमुखी मुखेनाधुना भासि।
सुन्दरि कज्जलबिन्दुना चन्द्रमुखी जाताऽसि।।४९१।।

प्रियतिय सौहसि कै कह्यौ लष्यौहिठौना दीन।
चन्द्रमुखी मुखचन्द्र सौ भलौ चन्द्र सम कीन।।४९१।।

शुभ्रशाटिका पिहितमपि कर्णाभरणं भाति।
उषसि रविप्रतिबिम्बमिव देवनदीमुपयाति।।४९२।।

लसत सेतु सारी ढप्यौ तरलत यैना कान।
पर्यो मनौ सुरसरि सलिल रविप्रतिबिम्ब विहान।।४९२।।

श्रवणविभूषणमौतिकप्रतिबिम्बानि पतन्ति।
किमिह कपोलस्पर्शतः स्वेदकणा विलसन्ति।।४९३।।

लसै मुरासा तिय स्रवन यौ मुकतनि दुति पाइ।
मानहु परस कपोल के रहे स्वेद कन आइ।।४९३।।

सुन्दरीति। हे सुन्दरि! इति नायकोक्तिः। चन्द्रादपि सुन्दरं मुखं यस्याः सा त्वं भासि शोभसे। कज्जलबिन्दुयुतेन मुखेन अधुना त्वं चन्द्रमुखी चन्द्रवन्मुखं यस्याः सा एतादृशी जाताऽसि। अत्रापीष्टार्थसमुद्यमादनिष्टाप्तिस्तस्माद्विषमालङ्कारः।।४९१।। श्रवणभूषणवर्णनम्। शुभ्राचाऽसौशाटिका तया पिहितमाच्छन्नमपि कर्णाभरणं भाति शोभते। तद्दृष्टान्तमाह। उषसि प्रभाते रवेः प्रतिबिम्बमिव देवनदी गङ्गामुपयातीत्यन्वयः। दृष्टान्तालङ्कृतिः।।४९२।। श्रवणभूषणं वर्णयति। श्रवणेति। श्रवणं

विभूषणं यन्मौक्तिकं तत्सम्बुद्धौ हे श्रवण विभूषण मौक्तिक:! इह बालाया वदने इति शेष:। तव प्रतिबिम्बा: छायाविशेषा: निपतन्ति तत्रोत्प्रेक्षते। कपोलस्पर्शत: हेतो: स्वेदकणा: स्वेदबिन्दवो विलसन्ति वेति तवापि तत्कपोलस्पर्शत: सात्त्विकभावरूपे स्वेदकणाविर्भाव इति भाव:।।४९३।।

कमलसमं श्रुतिमण्डनं मम हृदि मग्नमतीव।
न नि:सरति कुन्ताग्रमिव तेनाऽतनु: कृतीव।।४९४।।

सालत है नटसाल सी कैहू निकसत नाहिं।
मनमथ ने जानौ कसी षुभी षुभि जियमाह।।४९४।।

तनुवसनावृततनुलते! लससि तनुप्रभयैव।
सिन्धौ सन्तानकलता किसलयवृता यथैव।।४९५।।

झीमै पट मै झलमली झलकत ओप अपार।
सुरतरु की जनु सिन्धु मैं लसी सपल्लव डार।।४९५।।

मन्दस्मित मुखमभिदशन कान्तिकिरणजालेन।
चाकचिक्य चकिता दृगपि कथमपि याति बलेन।।४९६।।

नैक हसौ ही बानि तजि लष्यौ परत मुष नीठ।
चौका चमक निचौन्ध मैं परे चौंध सी डीठि।।४९६।।

कमलेति। श्रुतेर्मण्डनं कमलसमं कमलाकारं तत्सदृशरचनयासुवर्णविरचितमिति यावत् मम हृदि मानसे अतीव मग्नं सत् कुन्ताग्रमिव न नि:सरति। तेन हेतुना-अतनु: काम: कृतीव कृतार्थ इव जात इत्यर्थ:।।४९४।। तन्विति। सूक्ष्मं यद्वसनं तेन आवृता तनुलता यस्या: सा तत्सम्बुद्धौ तरुप्रभवैव तनुदीप्तैव त्वं तथैव लससि शोभते यथैव सिन्धै समुद्रे किसलयवृता नूतनपत्रयुता सन्तानकस्य कल्पतरो: लतेत्यन्वय:। अत्र समुद्रस्य तनुवसनावृतत्वे-उपमानोपमेयभाव:। करचरणारुणभावस्य नवीन पल्लवानां चोपमानोपमेयभाव: कल्पतरुलतायास्तस्याश्चोपमानोपमेयभाव: तेन पूर्णोपमा बोध्या।।४९५।। दशनप्रभां वर्णयति। मन्दस्मितेति। दृगपि मदीयादृष्टिरित्यर्थ:। दशनानां दन्तानां या: कान्तय: तासां यत् किरण जालं मयूखसमूहस्तेन हेतुं भूतेन चाकचिक्यचकिता सती कथमपि बलेन हठेन मन्दस्मितं च तन्मुखं मन्दस्मितमुखं तस्य अभिसम्मुखं याति गच्छति-इति-अन्वय:। एतेन दृष्टे: प्रथमं दशनकान्तिसमूहकृतचाकधिक्य जालत: कथमपि निवृत्ति:। ततो मन्दस्मित-वदनप्राप्तिरितिदन्तकान्तेराधिक्यं व्यज्यते।।४९६।।

मत्वा कथमपि कुचगिरी चिबुक निम्नमुपयाति।
पदमपि न चलति दृक् तत: स्थगितेव प्रतिभाति।।४९७।।

कुच गिरि चढ़ि अति थकित ह्वै चली डीठि मुष चाड।
फिर न टरी परियै रही परी चिबुक के गाड़।।४९७।।

चिबुक निम्नमानीय परिवृत्त्य हरितजालानि।
न कति नयन पथिकानि खलु रूप वधिक निहतानि।।४९८।।

डारे ढोड़ी गाड़ गहि नैन बटोही मार।
तिलक चौंध मैं रूप ठक हाँसी फाँसी डारि।।४९८।।

चिबुकमध्यनिम्नतामाह। गत्वेति। दृक् दृष्टिः मदीयेति शेषः। कुचावेव गिरी उच्चप्रदेशत्वात् कथमपि गत्वा चिबुके निम्नं चिबुकनिम्नं चिबुकमध्यभागे गम्भीरप्रदेशं यदा उपयाति गच्छति तदा तस्मिन् काले पदमपि न चलति न गच्छति। अतः स्थगितेवभातीत्यन्वयः। उच्चप्रदेशगमनश्रमाभिभूता पुननिम्नप्रदेशप्राप्तौ स्थगितमिति तत्रैव स्थिरीभूतत्व वर्णमेन न चिबुकमध्यगतनिम्नप्रदेशशोभाया आधिक्यमिति भावः।।४९७।। पुनर्यथा। चिबुकेति। प्रथमं हसितान्येव जलानि परिवृत्त्य आच्छाद्य पुनश्चिबुकमध्यप्रदेशगत निम्नभागमानीय नयनान्येव पथिकानि खलु निश्चयेन रूपश्चासौवधिकस्तेन निहतानि कति न सन्ति अपितु बहवः सन्तीति भावः। अत्र वधिकस्तुजालमास्तीर्य पुनःर्निम्नभागं नीत्वा विदेशिनो निहन्ति तथात्रापिरूपवधिकेनेति समाभेदरूपकालङ्कारः।।४९८।।

अद्भुतेति मनसो गतिर्दृष्ट्वा मुखं तवैव।
चिबुकमध्यगर्तेगतमुद्गच्छति च सदैव।।४९९।।

तो लखि मो मन जो गही सो गति कही न जाति।
ठोडी गाँड गडौतऊ उड़ौ रहे दिन राति।।४९९।।

हनुमध्ये लीलाललितकृष्णविन्दुरिह भाति।
सेवन्ती सुमनोगतो भ्रमण इव प्रतिभाति।।५००।।

ललित स्याम लीला ललन बढ़ी चिबुक छवि दून।
मधु छाक्यो मधुकर परयो मनो गुलाब प्रसून।।५००।।

समुदितेति पङ्कजपतौ चकितचकोरकुलेन।
चतुर्दिक्षु चन्द्रानने तव मुखमैक्षि सुखेन।।५०१।।

सूर उदितही मुदित मन मुष सुषमा की ओर।
चितै रहत चहु ओर तै निह चल चषन चकोर।।५०१।।

हे बाले! इति सम्बुद्ध्याक्षेपः। तवैव मुखं दृष्ट्वा इति हेतोर्मनसो गतिरद्भुता जाता, इतीति किं चिबुकस्य मध्यगर्ते गतं मनः उदूर्ध्वं गच्छति-एव। अन्यत्तु गर्तेगत मधोगच्छति। इदं तु न

तथेतिगर्तपातरूप प्रतिबन्धके सत्यपि–उर्ध्वगमनरूपकार्योत्पत्तेरद्भुतत्वप्रतिपादनात तृतीया विभावना विज्ञातव्या।।४९९।। चिबुके नीलबिन्दुं वर्णयति। हन्विति। इहास्मिन् हनुमध्ये चिबुकस्य मध्यदेशे तवेति विशेषः। लीलायै यो लालितश्चासौ कृष्णविन्दुः भाति शोभते। यथा सेवन्ती सुमनोगतः भ्रमरः प्रतियाति प्रतिगच्छतिइवेत्युत्प्रेक्षालङ्कारः। यद्वा सेवन्ती सुमनोगतभ्रमणमिव प्रतियातीति वा पाठः। सेवन्ती सुमनोगत भ्रमणस्तामेव प्रतियातित्यर्थः। हनुमध्यगतकृष्ण बिन्दुस्तत्साम्यं प्रतियातीत्यर्थः।।५००।। वदनशोभां वर्णयति। समुदितेऽपि–इति। हे चन्द्रानने! चतुर्दिक्षु चकितं तच्चकोराणां कुलं तेन सुखेन यथा भवति तथा। पङ्कजानां पतिः सूर्यः तस्मिन् समुदितेऽपि उदयं प्राप्तेऽपि तवमुखं तवाननं मेऽक्षिदृष्टमित्यन्वयः। अत्र सूर्योदयेऽपि चन्द्रचन्द्रर्शनमिति चकोराणां चकितत्वे हेतुः किञ्चकोरकाणां सुखपूर्वकं तदाननदर्शनमिति चकोराणां चकितत्वे हेतुः। किञ्चकोरकाणां सुखपूर्वकतदाननदर्शनप्राप्तौ चन्द्रानने–इति साभिप्रायविशेष्यो पदोपादानं तेन साभिप्राये विशेष्ये तु भवेत्यरिकराङ्कुरइति परिकराङ्कुरालङ्कारः।।५०१।।

तव गृहमभि नाऽपुस्तकस्तिथितिं कोऽपि जानाति।
यतः पूर्णचन्द्रानने पूर्णिमैव निशि भाति।।५०२।।

पत्राहीं तिथि पाइये वा घर के चहुँ पास।
नितप्रति पूनौई रहत आनन ओप उजास।।५०२।।

मुखं नीलवसनावृतं लसति प्रिये तवैव।
खलु कलिन्दकन्या जले धन्याचन्द्रकलेव।।५०३।।

छप्यौ छबीलौ मुह लसै नीले आचर चीर।
मनौ कलानिधि झलमलै कालिन्दी के तीर।।५०३।।

पुनर्यथा। तवेति। हे पूर्णचन्द्रानने! तव गृहमभि तव गृहस्य–अभितः अपुस्तकः जनाः तिथि ज्ञानपुस्तकं बिनाकोऽपि तिथिं न जानाति! अद्य प्रतिपत् अद्यद्वितीयेत्यादि। यतस्तत्र निशि पूर्णिमैव भाति, नान्यतिथिरिति त्वद्वदनकान्ति प्रकाशकत्वात्। अत्रापि पूर्णचन्द्राननेति साभिप्रायविशेष्यपदोपादानं तेन परिकाराङ्कुरः।।५०२।। पुनर्यथा। मुखमिति। हे प्रिये! इति नायकोक्तिः। नीलवर्णवसनेनावृतं तवैव मुखं लसति शोभते। खलु निश्चयेन कलिन्दकन्यायाः यमुनायाः जले धन्या धन्यतमा चन्द्रकलैव यथा भाति। तथा त्वं लसतीत्यर्थः। 'स्याद्बिम्ब प्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृति'रि लक्षणाद् दृष्टान्तालङ्कारः।।५०३।।

कनकजटित वसनाञ्चलं परितो मुखं विभाति।
तडिदिव शरन्निशाकरे कुण्डलतामुपयाति।।५०४।।

जरी कोर गोरे वदन षरी बढ़ी छवि देष।
लसत मनौ बिजुरी कियै सारद ससि परिवेष।।५०४।।

कण्ठे ताम्बूली रसारुणता बहिरपि भाति।
हारगतारुणमपि विभा सैव कण्ठमिव याति।।५०५।।

षरी लसत गोरे वदन धसत पान की पीक।
मनौ गुलवँदलाल की लाल लाल दुति लीक।।५०५।।

बकुलकुसुममाला यदा कण्ठे कृता तवैव।
पुलकितेव तनुसङ्गतः सा विभाति विभयैव।।५०६।।

पहिरत ही गोरे गरैयौ दौरी दुति लाल।
मनौ परसि पुलकित भई मौलसिरी की माल।।५०६।।

पुनर्यथा। कनकेति। कनकेन सुवर्णेन जटितं यद्ववसाञ्जलं तन्मुखं परितः मुखस्य–आसमन्तात् विभाति शोभते। शरत्कालीनो यो निशाकरश्चन्द्रः तस्मिन् तडित् विद्युदिव कुण्डलतां कुण्डलीभावमुपयातीत्यन्वयः। अत्रापि स्याद्विम्बप्रतिबिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिरिति–लक्षणात् दृष्टान्तालङ्कारो बोध्यः।।५०४।। ग्रीवां वर्णयति। कण्ठे इति। ताम्बूलरसस्य नागबल्लीदलरसस्य या अरुणता सा कण्ठे बहिरपि भाति। तदृष्टान्तः। 'स्थिाद्बिम्ब प्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिरिति लक्षणात्।।५०५।। पुनर्यथा बकुलेति। बकुलकुसुमानां माला यदा त्वयैव कण्ठे कृता धारिता तदा सा माला तनुसङ्गतः त्वत्तनुस्पर्शात् पुलकितेव सात्त्विकभावान्तर्गतरोमाञ्च रूप सात्त्विकभावप्राप्तेव त्वयैव विभया कान्त्या विभाति शोभते। अत्रासिद्धास्पदाहेतूत्प्रेक्षालङ्कारः बकुलकुसुमानां स्वतः पुलकिताकास्पदस्य सिद्धत्वात्।।५०६।।

करौ विलोक्य यथार्थतां मन्यामहे वरिष्ठ।
करी करिष्यसि यन्मनो गोपीयते गरिष्ठ।।५०७।।

बड़े कहावत आपु तै गरुवे गोपीनाथ।
तौ वदि हौ जोराषिहौ हाथ निरषि मन हाथ।।५०७।।

सैव केशविवरणकला करौ पुनस्तावेव।
अनयोरवलोकादहो मानसमावृतमेव।।५०८।।

बेई कर व्यौरन बहै व्यौरौ कौन विचार।
जिनही उरझौमौ हियो तिनही सुरझे वार।।५०८।।

अङ्गुलिनखमेचकमणिप्रभा त्रिवेदी भाति।
अनुगतदृक् पुंभ्यो न किं रतिमुक्तिं प्रददाति।।५०९।।

गोरी छिगुरी नख अरुण छला श्याम छवि देइ।
लइत मुकति रति पलक यह नैन त्रिवेनी सेइ।।५०९।।

करौ वर्णयति। कराविति। हे गोपीपते ! हे वरिष्ठ ! हे गरिष्ठ ! इति सम्बोधनत्रयं स्वाभिप्रायमस्ति। त्वं तस्या तस्याः करौ विलोक्य यद् यदा मनः स्वीयमित्यर्थः। स्वीयकरतले करिष्यसि तदा तव करयोः यथार्तता वयं मन्यामहे। करोतीति कर इति अन्यन्वर्थतां मन्यामहेजानीम इत्यर्थः।।५०७।। पुनर्यथा। सैवेति। केशानां विवरणकला सैव या सर्वाभिः क्रियते। पुनस्तावेव करौ यौ पूर्वं दृष्टौ तथापि अहो इति आश्चर्ये केशविवरणफलायाः अनयोः करयोश्चावलोकात् मानसम्भवीयमित्यर्थः। आवृतमेव आक्रान्तमेवेत्यन्वयः। अत्रापि–अनुक्तास्पदा वस्तूत्प्रेक्षा विज्ञातव्या।।५०८।। अङ्गुलीं वर्णयति। अङ्गुलीति। अङ्गुलेः प्रभा गौरवर्णा खनानां प्रभा–अरुणवर्णा मेचकमणेः प्रभानीलवर्णा–एतेषां प्रभा–एव त्रिवेणी वर्णत्रययात्मकत्वाद् भाति शोभते। तां त्रिवेणी मनुगता यादृशस्ता एव पुमांसः अनुगत दृक्पुभ्यः किमिति परिप्रश्ने रतिः प्रीतिरेव मुक्तिं मोक्षं तां न प्रददाति किन्तु ददात्येवेति समाभेदरूपकालङ्कारः। सा त्रिवेणी मुक्ति ददाति इयं त्रिवेणी रतिं ददाति–इति–स्पष्टार्थः।।५०९।।

बाला चम्पककुड्मलं सख्यै मुदा ददाति।
सा च पुनर्भ्रमतस्तदा तदङ्गुलिं गृह्णाति।।५१०।।

चम्पकली कर गहिकुवरि हुती सषी कौ देत।
वह बौरी घाषे परी अँगुरी गहि गहि लेत।।५१०।।

निगमवर्त्म न चलति जगति तस्यै वाऽप भयेन।
श्रितं कुचद्वयगिरितटं यतः प्रभृति मदनेन।।५११।।

चलन न पावत निगम मग जग उपजी अति त्रास।
कुच उतंग गिरिवर गह्यौ मैना मैनमवास।।५११।।

सुमना अपि विमनायिता अङ्कुरितेनानेन।
तत्कुचयुगमधुना प्रिये समुन्नतं मदनेन।।५१२।।

गाढ़े ठाढ़े कुचन कौ को पिय हिय ठहराइ।
उक सौहैं हूतौ हियै दई सबन उकसाइ।।५१२।।

बालेति। सा बाला चम्पककुड्मालं चम्पकलिकां मुदा हर्षेण यदा सख्यै ददाति। सा च सखी पुनर्भ्रमतः। तदङ्गुलिभ्रमात् तदा तस्याः अङ्गुलिं गृह्णातीत्यन्वयः। स्यात्स्मृतिभ्रान्तिसन्देहैस्तदङ्का–लङ्कृतित्रयमिति लक्षणात् भ्रान्त्यलङ्कारो बोध्यः। एतेन चम्पक कलिकाया अङ्गुल्याश्च–उपमानोपमेयभावो व्यज्यते।।५१०।। कुचद्वयवर्णनम्। निगमेति। यतः प्रभृति यत आरभ्य तस्याः कुचद्वयमेव गिरी तयोस्तटं श्रितम्। तत्र वासः कृत इत्यर्थः। तस्यैव मदनस्यैव अतिभयेन अतित्रासेन ततः प्रभृति जगति लोके निगमो वेदः तस्य वर्त्म मार्गं सदाचारादिरूपं ऋतौ भार्यामुपेयादित्यादिना

चलति-इत्यर्थः। कुचद्वये दृष्टे वेद पथस्यापि लोकैर्भयं त्यक्तमित्यतिशयकामप्राबल्यमितिभावः। अन्योऽपि जनो गिरितटाश्रयो यदा भवति तदालोकानां भयप्रदो भवतीति व्यज्यते।।४११।। पुनर्यथा। सुमना। इति। हे प्रिये! इति नायकोक्तिः अनेन कुचयुगले तवेति शेषः अङ्कुरितेन सता सुष्ठुमनो यासां ताः सुमनसः ताः सुमनसोऽपि सपत्न्यादयः विमनायिताः विमनस इवाचरितं कृतवत्यः, तत् कुचयोर्युगमधुना-इदानीं मदनेन हेतुभूतेन समुन्नतं जातनित्यर्थः। अत्राङ्कुरितकुचद्वयदर्शनेन सपत्नीनां वैमनस्यमिदानीं समुन्नतकुचद्वयं दृष्ट्वा तासामतिशयदुःखं जातमिति व्यज्यते।।४१२।।

कुचयुगलं कञ्चुकवृतं सितशाटीवृतमेव।
सत्कविकृतवर्णार्थमिव चपलमुल्लसत्येव।।५१३।।

दुरतन कुच बिच कञ्चुकी चुपरी सारी सेत।
कवि अंकन के अर्थ लौं प्रगट दिखाई देत।।५१३।।

वर्णयितुं शक्यानया सुषमा तनुवसनेन।
कञ्चुकमङ्गविभावृतं नाङ्गमावृतं तेन।।५१४।।

भई जु छवि तनुवसन मिलि वरन सकत सुन वैन।
आँग ओप आँगी दुरी आँगी आँग दुरै न।।५१४।।

कूर्पासकं द्युतिं वर्णयति। कुचयुगलमिति। कञ्चुकेन-आवृतकुचयोर्युगलं पुनःसितशाटीवृतं शुभ्रवर्णशाटिकाच्छन्नमेव चपलं सत्वरमुल्लसत्येव। 'सत्वरं चपलं तूर्णमित्यमरः। शीघ्रतरमेव तत्स्फूर्तिरतिभावः। कमिव। सत्कविना कृताः काव्यादिषु ये वर्णास्तेषामर्थमिव शीघ्रतरं प्रकाशत इत्यर्थः। अत्रोपमेयादीनां चतुर्णामुपादानात् पूर्णोपमा।।५१३।। वर्णयितुमिति। या सुषमा उत्कृष्टशोभा, 'सुषमा परमा शोभेत्यमरः। तनुवसनेन हेतुना जाता सा वर्णयितुं न शक्या। तदेवाह। अङ्गानां विभाभिः दीप्तिभिः आवृतं कञ्चुकमासीत्। तेन कञ्चुकेन अङ्गेनावृतमिति। अङ्गं तु कञ्चुकेन नाच्छन्नमित्यर्थः। कान्त्या तद्वहिरपि प्रकाशतारभ्यात्। यद्वावसनस्य सूक्ष्मत्वात् तत्प्रकाशो बर्हिर्जात इत्यर्थः।।५१४।।

लससि कनक पुष्पीव सा यौवनाङ्ग विभयैव।
द्वैवर्ण्यं भजतेऽरुणा कञ्चक्यापि च यथैव।।५१५।।

सौमजुही सी जगमगत अँग अँग जीवन ज्योति।
सुरग कुसुंभी कंचुकी दुराग देह दुति होति।।५१५।।

उरसि मालिका मध्यगतमाणिक्यं प्रतिभाति।
दृगविमलीकरणाय किं हृदनुरागमिव याति।।५१६।।

उरमा निककी उर वसी डटत घटक द्रग दाग।
झलकत बाहिर भरिमनौ तिय हिय कौ अनुराग।।५१६।।

वदनं पटं त्रपया यदा सा करेण विचकर्ष।
बलिपदमिव लब्धा बलिस्तस्या वलिं ददर्श।।५१७।।

कर उठाय घूँघट करत उर रटपट गुझरौट।
सुषमौ टैं लूटी ललन लषि ललना की लौंट।।५१७।।

पुनर्यथा। लसतीति बाला यौवनेन तारुण्येन अङ्गानां विभाकान्तिस्तयैव कनकपुष्पीव स्वर्णयूथिकेव तथैव लसति यथैव अरुणा अरुणवर्णाऽपि कञ्चुकीद्वैवर्ण्यं भजत-इत्यन्वयः। अत्राङ्गप्रभया अरुणवर्ण कञ्चुकक्याश्च द्वैवर्ण्यं प्राप्तिरिति 'यदान्यगुणदोषाभ्यामुल्लासोऽन्यस्यतौ यदीति लक्षणादुल्लासा-लङ्कारः।।५१५।। मालिकागतमध्यमाणिक्यं वर्णयति। उरसीति। उरसि हृदये तवेति शेषः। मालिकामध्यगतं च तन्माणिक्यं प्रतिभाति शोभते तत्रोत्प्रेक्षते। दृशां विमलीकरणाय निर्मलत्वाय किं हृदयाद् अनुरागमिव याति। बहिःप्रकाशमान इतिभावः। अनुरागस्यापि अरुणवर्णत्वात् मध्यमाणिक्ये तत्सम्भावनमिति दिक्।।५१६।। त्रिवलीं वर्णयति। वदनेति सख्याः सखीं प्रत्युक्तिः। वदनस्य पटो वस्त्रं यदा सा बाला त्रपया लज्जया करेण विचकर्ष तदा हरिः कृष्णः वलिपदमिव लब्ध्वा इन्द्रपदमिवलब्ध्वा तस्याः वलिम् उदरदेशस्थ त्रिवलीं ददर्शेत्यन्वयः। ऊर्ध्वं वस्त्रविकषर्णेन वलिप्रदर्शनमिति भावः।।५१७।।

चच्चत्तारुण्ये चलन्मध्यं चपलतमेव।
कर्षति लोकविलोचनं क्षणमवलोकत एव।।५१८।।

लहलहाति तन तरुनई लचि लगि लौल फिजाइ।
लगी लीक लोयन भरी लोयन लेत लगाइ।।५१८।।

अस्ति नास्ति किं मध्यमिति हीनं विधिश्चकार।
अतो नितम्बकुचौ परमपीनत्वेन बभार।।५१९।।

लगी अन लगी सीजुविधि करी खरी कटि षीन।
कियै मनौ वाही कसर कुच नितम्ब अति पीन।।५१९।।

वामे! कामविरञ्चिना जङ्घायुगं व्यधायि।
तव रम्भारति दुःखदं रम्भारति सुखदायि।।५२०।।

जंघ युगल लोयन निदै किए मनौ विधि मैन।
केलि तरुन दुषदैन ये केलि तरुन सुषदैन।।५२०।।

कटिं वर्णयति। चञ्चदिति। चञ्चतत्तारुणं तञ्पतारुण्यं तस्मिन् समये चलच्चतन्मध्यं कटिप्रदेशः

चलन्मध्यं चपलतयेन चच्चलतयेव क्षणमवलोकत एव दर्शनमात्रादेव लोकानां विलोचनं नयनं कर्षति। सर्वेषां लोचनानि तत्रैव लग्नानीतिभावः।।५१८।। पुनर्यथा। अस्तीति। विधिर्ब्रह्मा तस्या; कटिप्रदेशमस्ति वा नास्ति किमितिहीनमतितरक्षीणं चकार निर्मितवान्–अतो हेतोस्तस्या नितम्बौ च कुचौ च पीनत्वेन बभार धृतवानिति हेतूत्प्रेक्षालङ्कारः।।५१९।। जङ्घावर्णनम्। वामे–इति। काम एव विरञ्चिर्ब्रह्मा तेन तव जङ्घायुगं व्यधायि रचितमासीत्। कीदृशं तत्। रम्भातरोः तत्साम्याभावादनादरत्वेन दुःखदम्। पुनारम्भाया अप्सरसः। रतौ यत्सुखं तद् ददातीति रम्भारतिसुखदायि। यद्वा रम्भेव रतिसुखदायि। यथा रम्भारतिसुखं ददाति तथेदमपीत्यर्थः।।५२०।।

**बहुधा कष्टं धृष्टमिति चूर्णितं च तत्रैव।**
**पद्मपि नूपुरपदगतं चेतो गच्छति नैव।।५२१।।**

**रह्यौ डीठ छाडस गहै ससिहरगयौ न सूर।**
**मुर्यो नभन मुखानमिलि भौच पिचूरिन चूर।।५२१।।**

**प्रसाधिका बालापदं जगृहे यदा करेण।**
**पार्ष्णिमेव सा पीडयत्यालक्तकभ्रमेण।।५२२।।**

**पाइ महावर दैन कौ नायिन बैठी आइ।**
**फिर फिर जानि महावरी ऐड़ी मीड़ति जाय।।५२२।।**

**लाक्षारस रागाय या प्रसाधिका चलितापि।**
**तत्पार्ष्णी सहजारुणे दृष्ट्वा न चलति साऽपि।।५२३।।**

**कौहर सी ऐड़ीन की लाली देषि सुभाइ।**
**पाइ महावर दैन कौ आप भई वेपाइ।।५२३।।**

नूपुरस्थलशोभां वर्णयति चेतो मनः मदीयमित्यर्थः नूपुरपदगत तस्त्याः नुपुरस्थानं प्राप्तं सत् धृष्टमिति हेतोः। पदमपि पदमात्रमपिनैव गच्छति। मया बहुधा आकृष्टमपि तत्रैवचूर्णितमासीदिति नूपुरस्थलशोभा–धिक्यात्तत्रैव लग्नमिति भावः।।५२२।। पदपश्चाद्भागवर्णनम्। प्रसाधिका। नापितस्त्री। बालायाः पदं करेण यदा जगृहे गृहीतवती लाक्षारसरज्जनार्थमितिभावः। तदा–सा–आलक्तकभ्रमेण पार्ष्णिवमेव पदपश्चाद्भागमेव पीडयति। अत्रापि भ्रान्तिमान् अलङ्कारः।।५२३।। पुनर्यथा। लाक्षेति। या प्रसाधिका लाक्षारसरागाय तत्कर्तुमित्यर्थः। चलिताऽपि। पुनस्तत् पार्ष्णीतत् पदपश्चाद्भागे सहजारुणे स्वाभाविका–रक्ततरे सापि न चलतीत्यर्थः। मदीयोऽयं परिश्रमो वृथैव भविष्यतीति हेतोस्तत्रैव स्थगिताऽसीदित्यर्थः।।५२३।।

**चरणगताभरणध्वनिः कर्षति कृष्णहृदेव।**
**किमुत न कर्षत्यतिमधुरवदनवचोऽमृतमेव।।५२४।।**

किय हायल चित चाय लगि बजि पाइलतुव पाइ।
पुनि सुनि मुषमधुर धुनि क्यौ न लाल ललचाइ।।५२४।।

लसति पदाङ्गुष्ठाभरणमरुणमणि प्रभयैव।
अर्कबिम्बमिव हतरुचं कर्णाभरणरुचैव।।५२५।।

सोहत अगुठा पाइके अनिवट जटित जराय।
जीत्यौ तरिविनि दुति सुढरि पर्‌यो तरनि जनु पाइ।।५२५।।

अरुणपङ्कजोपमपदे सुकुमाराङ्गुलयोऽपि।
किमुद्गिरन्त्यरुणं रसं तद्भूषणभरतोऽपि।।५२६।।

अरुन सरोरुह से चरन अँगुरी अति सुकुमार।
चुवत सुरँग रँग सी ममनौ चपि विछियन के भार।।५२६।।

पदभूषणध्वनिं वर्णयति। चरणेति। तस्याः चरणगतं चरणाभरणं पदभूषणं नूपुरादितस्य ध्वनिः शब्दः कृष्णस्य हृत् मनः एव निश्चयेन कर्षति। पुनः अमृतमेव अतिमधुरं च तद् वदनस्य वचः किमुत न कर्षति। किन्तु कर्षत्येवेति काकुः।।५२४।। पादाङ्गुष्ठभूषणवर्णनम्। लसतीति। पादाङ्गुष्ठस्य यदाभरणम्। अरुणा'सौमणिः तत् प्रभयैव लसति। कमिव कर्णाभरणरुचा त्विषाहतरुचम्। हतप्रभमर्कस्य सूर्यस्य बिम्बमिवेत्यन्वयः। अत्र तत्कर्णभूषणकान्तिहतप्रभं सूर्यबिम्बं तत्पादाङ्गुष्ठभूषण-गतारुणमणिप्रभामिषेण तच्चरणयोः शरणं गत इवेत्युपमालङ्कारादवस्तु ध्वनिः।।५२५।। पदाङ्गुलिभूषणवर्णनम्। अरुणेति। अरुणपङ्कजोपमं यत्पदं तस्या इति शेषः। तस्मिन् सुकुमारताश्चता अङ्गुलयस्ता अपि अरुणं रसं तद्भूषणानां यो भरो भारस्तास्माद्धेतोः किमित्युत्प्रेक्षायां समुद्गिरन्ती वेत्यन्वयः अत्रभूषणभारस्य हेतोहेर्तुत्वकल्पनम्-सिद्धास्पदा हेतूत्प्रेक्षाऽवगन्तव्यम्।।५२६।।

स्पृशति न सा कठिनौ कराविति तदुःखभयेन।
सेवन्ती चरणौ सखी सेवन्ती कुसुमेन।।५३०।।

छाले परिवे के डरन सकत न हाथ छुवाइ।
झझकत हियै गुलाब के झमाझमावत पाइ।।५३०।।

न कुरु पार्श्वपरिवर्तनं सेवय मृदुशयनानि।
महासहासुमनोदलं विदलिष्यत्यङ्गानि।।५३१।।

मैं वरजी के वार तूँ इत कत लेत करौट।
पषुरी लगी गुलाब की परिहै गात षरौट।।५३२।।

नरन्तीव नयनाङ्गुलिक्रियां मथैव करोति।
तथा तन्तुनिर्मायिका तनुतन्तून् वितनोति।।५३२।।

ज्यौं कर त्यौ चिहुँटि चुलत ज्यौ चिहुटी त्यौं नारि।
छवि सौगति सी लै चलै चातुर कातन हारि।।५३२।।

पुनर्यथा। स्पृशतीति। सेवन्ती कुसुमेन कारणभूतेन चरणौ सेवनी सा सखी तत् तस्याः दुःखं भविष्यतीति भयेन मदीयौ करौ कठिनौ कठोराविति हेतोः ताभ्यां न स्पृशतीत्यन्वयः। अनेन तच्चरणयोस्तस्तराभ्यामपि सौकुमार्यं द्योत्यते-इति।।५३०।। पुनर्यथा। नेति। हे बाले! इति सम्बुद्ध्यनुकर्षः। पार्श्वपरिवर्तनं न कुरु किन्तु मृदूनि च तानि शयनानि सेवय। महासहायाः अम्लानलतया सुमनः महसहासुमना अम्लानस्तु महासहा इत्यमरः। तस्य दलं तव अङ्गानि विदलिष्यति विदारयिष्यति तेनातिसौकुमार्यं दर्शितम्।।५३१।। कस्याश्चित्तन्तुनिर्माणमाह। नरन्तीति। सा तन्तुनिर्मायिका तन्तुनिर्माणकत्री नरन्तीवनृत्यन्तीव। नयनयोः अङ्गुलीनां चक्रियां यत्रैवाङ्गुलिस्तत्रैव नयनमिति करोति तथा तेनैव प्रकारेण तनवः सूक्षाश्च ते तन्तवस्तान् वितनोति विस्तारयति इति स्वभावोक्तिः।।५३२।।

मुद्रितार्द्धनयना रतिश्रान्तेवातितरेण।
मन्दं मन्दं गुर्विणी गच्छति गर्भभरेण।।५३३।।

द्रग थिर कौहै अधषुले देह थको है ढार।
सुरति सुषित सी देखियतु दुषित गरभ के भार।।५३३।।

हसन्त्येव पीनस्तनी ग्रामीणा प्रतियाति।
यदा कनककीटच्छदं बिन्दुस्थले दधाति।।५३४।।

गोरी गदराने कुचन हँसल कपोलन गाड़।
कैसी लसति गभर यह सुन किरवा की आड़।।५३४।।

घनोन्नतस्तनकुड्मला शणसुमनोभालाऽपि।
बालाऽवति शालीवनं सितपङ्कजमालाऽपि।।५३५।।

प्रफुलाहार हियै लसै सनकी वैदी भाल।
राखत खेत षरी षरी षरे उरोजन बाल।।५३५।।

गुर्विणी वर्णनम्। मुद्रितेति। काचिद् गुर्विणीगर्भवती वनिता मुद्रितेऽर्धनयने यया सा अतितरेण रतिश्रान्तेव गर्भभरेण मन्दं मन्दं यथा भवति तथा गच्छति-इत्यन्वयः। अत्रापि स्वभावोक्ति-र्ज्ञातव्या।।५३३।। ग्राम्यवधूवर्णनम्। हसन्तीति। ग्रामीणा वधूः। पीनौ स्तनौ यस्याः सा। यदाकनक कीटस्य सुवर्णकीटस्यच्छदं पक्षं बिन्दुस्थलेललाटदेशे दधाति धारयति। तदा हसन्ती सती हास्यं कुर्वन्त्येव प्रतियाति प्रतिगच्छति नात्मसमां काञ्चितसुन्दरीं मन्यमानेतिहासप्रयोजनमुक्तम्, तेन ग्रामवधूटित्वम्।।५३४।। पुनर्यथा घनेति। घनौ निविडौ स्तनौवेव कुड्मलौमुकुलौ यस्याः सा

घनोन्नतकुण्ड्मलाशरणस्य सुमनः शणसुमनः तत् भाले यस्या; सा बाला शालीवनं धान्यक्षेत्रं-अति रक्षतीत्यन्वयः।।५३५।।

सनिःश्वासमन्दस्थितं सरसं सत्रपमेव।
मुक्तिरेव तत्सुरतमिति भुक्तिर्भवति वृथेव।।५३६।।

चमक तमक हाँसीसि सकल पट झपट मुसक्यान।
ये जिह रति सो रति मुकति और मुकति की हान।।५३६।।

लोके लीकवचः सखे निःस्वादं भवतीह।
मृषा नेति कान्तारतेऽमृतसमता भवतीह।।५३७।।

तनकभूठ निसवादिली कौन बात परिजाइ।
तिय मुषरति आरम्भ की नहिं झूठियौ मिठाइ।।५३७।।

प्रियजनसङ्गो यत्र नहि सा मुक्तिर्न सुखाय।
स भवति शमनपुरेऽपि यदि न तद्भवति दुःखाय।।५३८।।

जोन जुगति पिय मिलन की धूर मुकति मुह दीन।
जो लहिये सुखसजन सँग धरक नरहू कीन।।५३८।।

रतिमहिमवर्णनम्। स निःस्वासेति। निःस्वासेन मनस्मितेन सहितं सनिःस्वासमन्दिस्मितं सरसं सहर्षं सत्रपं सलज्जं यत् सुखं तत् मुक्तिरेव तदानन्दकन्दास्वादान्मुक्तिर्मुक्तिसुखं वृथेव भवतीत्यन्वयः।।५३६।। पुनर्यथा। लोके इति। इहलोके जगति। अलीकं च तद्वचः अलीकवचः हे सखे मित्र निःस्वादं निर्गतस्वादं भवतीति। कान्ताया रते संयोगावस्थायां न इति निषेधः मृषा मिथ्यैव-अमृतं समतां अयति गच्छति-इति सोल्लासालङ्कारः।।५३७।। पुनर्यथा प्रियेति। प्रियजनस्य सङ्गः संयोगः यत्र न भवति सा मुक्तिरपि सुखाय न भवेत्। पुनः स एव प्रियजनसङ्गः शमनपुरेऽपि यमपुरेऽपि यदि भवति तत् शमनपुरं दुःखाय न भवतीत्यन्वयः। अत्र प्रिजनसङ्गमाहात्म्यकथनेन रतिमहिमाऽवगन्तव्यः।।५३८।।

मुञ्च मञ्जु कुञ्जं हरे सदनं सुखं प्रयाहि।
विकचन्यत्र चटाचटं स्फुटमम्लानलताहि।।५३९।।

कुञ्ज मौनतजि मौन कौ चलिए नन्दकिसोर।
फूलत कली गुलाब की चटकाहट चहुँ ओर।।५३९।।

सा दोलाम्बरतो यदा धन्या घरणिमियाय।
तदा त्वरितमङ्गीकृता हरिणानन्तसुखाय।।५४०।।

हेरि हिडोरे गगन तै परी परी सी टूटि।
धरी धाइ पिय बीच ही करी षरी सुख लूटि।।५४०।।

बाला दोलाखेलने हेलयैव विचकास।
नतानतं मृदुमध्यमपि तस्या बहु विललास।।५४१।।

वरजै दूनी हठ चढ़ै ना सकुचैन सकाइ।
टूटत कटि दुम चीमचक लचकि लचकि बच जात।।५४१।।

प्रभातवर्णनम्। मुञ्चेति। मञ्जु रमणीयं तत् कुञ्जं मञ्जुकुञ्जम्। निकुञ्जकुञ्जौ वा-अक्लीवे इत्यमरः। सुखं यता भवति तथा सदनं गृहं प्रयो हि अत्र कुञ्जस्फुटं चटाचटमिति तद्विकाशक्रियानुकरणमम्लानस्य महासहायाः लताः विकचन्तीत्यन्वयः। अत्र अम्लानलतायाः प्रभात एव विकासकाल इति भावः।।५३९।। दोलोत्सवमाह। सेति। सा बाला दोला अम्बरङ्गगनं तस्मात्-अपादानात् धरणिमियाय। तदात्वरितमेवानन्तसुखाय। अधिकानन्दाप्तये हरिणा कृष्णेन अङ्गीकृता क्रोडीकृता। एतेन धरणिपातकालाप्तावेव त्वरितं नायके नावलम्बितेनेति कीदृशीबाला धन्या अत्रोभयोः परस्परप्रीत्युत्कर्षात् शृङ्गाररसस्यस्थायित्वप्राप्तरतिपुष्टता दर्शिता।।५४०।। पुनर्यथा हे बालेऽति। दोलाखेलने सा बाला हेलयैव शृङ्गारभावक्रिययैव हेलालीलेत्यमी हावाः क्रियाः शृङ्गारभावजा इत्यमरः। विचकाश शुशुभे। तस्या; मृदु सुकुमारं मध्यं कटिप्रदेशः नतं च अनते च नतानतं यथा भवति तथा बहु अधिकं विललास लसितमासीदित्यन्वयः।।५४१।।

प्रत्यङ्गं प्रक्षाल्य सा सजल कराभ्यामेव।
शिरः प्रोञ्छ्य सस्लौ मुखं धौतानना दिदेव।।५४२।।

मुह पषारि मुह हर भिजै सीस सजल कर छ्वाइ।
मोरि उचै घूटेनुनै नारि सरोवर न्हाइ।।५४२।।

सरसि ममज्ज सलज्जबहु विजहार च विजहास।
बाला साद्रपटातटं गच्छन्त्येव चकास।।५४३।।

विहसत सकुचत सोदियै कुच आँचर विच वाँह।
भीजै पट तट कोचली न्हाइ सरोवर माह।।५४३।।

बाला धीरतया जले यत्र-यत्र विजहार।
किञ्जल्काभं किञ्जलं तत्र तत्र न चकार।।५४४।।

लै चुभकी चलि जात जित तितजलकेलि अधीर।
कीजतु केर नीरमय तित तित केसर नीर।।५४४।।

स्नानदशां वर्णयति। प्रत्यङ्गमिति। सा बाला सजलौ च तौ करौ-इति ताभ्यां प्रत्यङ्गं प्रक्षाल्य शिरः प्रोञ्छ्य सुखं सस्नौत तदा धौतं आननं यया सा दिदेव चिक्रीड। अत्र सखीं प्रति नायकोक्तिः तेन तस्य पूर्वानुरागो व्याख्यातः।।५४२।। पुनर्यथा। सरसीति। आर्द्रपटो यस्याः सा आर्द्रपटा सा बाला सरसि तडागे ममज्ज। बहु अधिकं ललज्ज। च पुनः विजहार। पुनः विजहास! पुनः तटं गच्छन्त्येव चकास दिदीपे इति।।५४३।। पुनर्यथा। बालेति। सा बाला अधीरतया चञ्चलतया जले यत्र-यत्र विजहार। तत्र तत्र किञ्जल्कस्य आभा इव आभा इव आभा यस्य तत् किञ्जल्काभं जलं न चकार न कृतवती किन्तु कृतवत्येवेति काकुः। किञ्चल्कः केसरोऽस्त्रियामित्यमरः। तद्रूप प्रतिबिम्बपातात् पीतवर्णमभूदिति भावः।।५४४।।

सुस्निग्धे मुग्धादृशौ सिक्ते जलयन्त्रेण।
विरजेतू रोचनरसारक्ते इव प्रियेण।।५४५।।

छिरके नाह नवोढ़ दृग कर पिचकी जल जोर।
रोचन रँगलाली भई वियतिय लोचन कोर।।५४५।।

वनिता वनविहरणकृतश्रमजलकणविभयैव।
स्थगयति लोकविलोचनं स्वयमपि सुस्थगितैव।।५४०।।

चलत ललित श्रम स्वेद कन कलित अरुन सुषतैन।
वन विहार थाकी तरु निषरे थकाये नैन।।५४६।।

त्रिवलि कुचद्वयगौरभुजतटं प्रदर्श्य तयैव।
उच्च कुसुमचयनेन मे मनोहृतं त्वधुनैव।।५४७।।

बढ़त निकसि कुचकोर रुचि कढत गोर भुजमूल।
मन लुटिगौ लौरव चढ़त चौथ तऊँचे फूल।।५४७।।

पुनर्यथा। सुस्निग्धे स्निग्धतरे मुग्धायाः दृशौ लोचने प्रियेण जलयन्त्रेण यदा सिक्ते तदा रोचनमरसेन आरक्ते इव विरेजतुरित्यन्वयः।।५४५।। वनविहारं वर्णयति। वनितेति स्वयमपि सुस्थगितैव वनिता वनविहारजनितश्रमादित्यर्थः। वनस्य विहरणे कृतो यः श्रमस्तस्मात् ये जलस्य कणाः बिन्दवस्तेषां या विभा कान्तिस्तयैव लोकानां विलोचनं स्थगयति। वनविहारश्रमवतीं दृष्ट्वा लोकास्तामेव विलोकयन्तीति भावः।।५४६।। पुनर्यथा। त्रिवलीति तिस्रश्च ताः वलयस्त्रिवलयः। कुचयोर्द्वयं गौरस चासौ भुजश्च-एतेषां समाहरः त्रिवलीकुचद्वयगौर-भुजास्तेषां तटं तयैव। उच्चानि उच्चस्थललगतानि च तानि कुसुमानि तेषां चयनेन करणभूतेन प्रदर्श्यदर्शयित्वा अधुनैव मे मनोहृतमासीदिति नायकस्य पूर्वानुरागः।।५४७।।

बकुलकुसुममालां नवां बाला धरति यदैव।
सुरुचि विशाला सा बभौ माला तदा नवैव।।५४८।।

अपने कर गुहि आप हठि पहिराई हिय लाल।
नौर सिरी औरे बढ़ी मौलसिरी की माल।।४४८।।

मुखं पिधाय विकम्पते विहसति वदति यथैव।
हरिमृषोद्‌धृतमुष्टिरपि तां भावयति तथैव।।५४९।।

ज्यौं उझकत झापत वदन वकति विहस सतराय।
त्यौं गुलाल मूठी झुठी झझकावत प्यौ जाइ।।५४९।।

मुष्ठी कृत्य च कुङ्कुमं पृष्ठी कृत्य ह्रियैव।
हरिं प्रिया होलिकरसे क्षिपति मुष्ठिमिव सैव।।५५०।।

पीठि दियै हीनै कुमरि कर घूँघट पट टारि।
भरि गुलाल की मूँठ सौ गई मूठि की मारि।।५५०।।

पुनर्यथा। बुकलेति। बकुलकुसुमानां या नवा माला या मया-अधुनैव रचितेत्यर्थः। तां मालां यदैव सा बाला धरति तदा सा माला सुरुच्या सुष्ठु कान्त्या विशाला विशालतरा न नैव अन्यैव अकथनीय शोभाविशेषात्-शोभतेस्म-इत्यर्थः।।५४८।। होलक क्रीडा रसमनुवर्णयति। सुखमिति। सा बाला यथैव मुखं पिधाय आच्छाद्य विकम्पते पुनर्विहसति पुनर्वदति तथैव हरिः कृष्णः विकम्पते पुनर्विहसति पुनर्वदति तथैव हरिः कृष्णः तत्तद्भावदर्शनाय मृषा उद्‌धृता मुष्ठिर्येन सोऽपि तां भावयति तथा तथा भावं कारयतीत्यर्थः।।५४९।। पुनर्यथा मुष्ठीकृत्येति। कुङ्कुमं मुष्टीकृत्यह्रियैव लज्जयैव तं हरिं पृष्ठीकृत्य पश्चाद्भागेकृत्वा साप्रिया होलिका रसे होलिकोत्सवहर्षेमुष्ठिमिव वशीकरणमुष्ठिमिवकुङ्कुममुष्ठिं क्षिपतीत्यर्थः।।५५०।।

होलिकमहसि दृशि दत्तं दिदेविषद्धरिणैव।
तूर्णं कुङ्कुमचूर्णमपि तिरस्करोति न सैव।।५५१।।

दियौ जु पिय लषि द्रगन मैं षेलत फागुषियाल।
बाढ़तहूँ अति पीर नहिं काढ़त वनत गुलाल।।५५१।।

परिमुक्तं मुष्ट्यासमं कुलव्रतं च तयैव।
उभयमुभाभ्यामपि मनः कुङ्कुममापि सहैव।।५५२।।

छूठत मूठ सगहीं छुटी लोक लाज कुल चाल।
लगे दुहुन इक बार ही चलचित नैन गुलाल।।५५२।।

हरि राधे कुङ्कुम रसे करकुङ्कुमरजसाति।
प्रतिचिक्षपेतुर्मुष्ठिमपि सा मिथैव विभाति।।५५३।।

कछुप कम्ब करतै गिरै कछुक स्वेद लिपटाय।
भरियो मूठ गुलालकी छुटत झुठी ह्वै जाइ।।५५३।।

होलिकेति। होलिकमहसि। महउद्धव उत्सव इत्यमरः। होलिकोत्सवे। देवितुमिच्छति दिदेविषति दिदेविषतीति दिदोविषन् कीडितुमिच्छन् स चासौ हरिस्तेन कृष्णेनैव तूर्णमविलम्बिते कुङ्कुमचूर्णं कुङ्कुमाक्तं चूर्णं यद्वा कुङ्कुमस्य चूर्णं यद्वा कुङ्कुमवर्णं चूर्णं गुलाल इति भाषयाम्। यत्तस्यादृशि सैवबाला तत् चूर्णं न तिरस्करोति। न वहिष्करोति प्रीत्युत्कर्षादिति भावः।।५५१।। पुनर्यथा परिमुक्तमिति मुष्ठ्या सममुभयोरिति शेषः। कुलव्रतं च त्रपा लज्जाचेदमुभयमुभाभ्यां परिमुक्तमपि पुनः उभयोः कुङ्कुमं मुष्ठ्या सहैव-उभाभ्यामपि प्राप्तमित्यन्वयः। अत्रलाक्षारचितपूर्णपूरितं गोलकं परिक्षेपार्थः क्रियते-इति तटकुङ्कुमाख्याया प्रसिद्धमपि ज्ञेयम्।।५५२।। पुनर्यथा हरिराधे इति हरिश्च राधा च हरिराधे उभे होलिकोत्सवहर्षे करकुङ्कुममज्जसा करस्थकुङ्कुमचूर्णेन अति अतिशयं प्रतिचिक्षुपतुः परस्परमित्यर्थः। सा सा उभ्योर्मुष्ठिरपि मिथैव विभाति। परस्परदर्शनानुभाववशात् कम्पस्वेदादि सात्त्विकोत्पत्तेः चूर्णनिसरणं नेति भावः।।५५३।।

नर्तितभ्रुनयनं प्रिया पीतपटं न जहाति।
हरिरुदारचरितोऽपि तद्दानं नैव ददाति।।५५४।।

ज्यौं ज्यौं पट झटकट हठ निसहजनन्चावत नैन।
त्यौं त्यौं निपट उदारहू फगुवादे तव नैन।।५५४।।

उभावुभावनुरागरसरङ्गभारनिकरेण ।
पश्यार्द्री कुरुतः समं नयननीरयन्त्रेण।।५५५।।

रसविजये दोउ दुहुन इक टक रहे टरै न।
छवि सै छिरकत प्रेम रंग भरि पिचकारी नैन।।५५५।।

मनस्तुरङ्गमचातुरीमादिदर्शयिषतीव ।
घटयति प्रीतिचतुष्पथे गत्यातुरीमतीव।।५५६।।

सरस सुमिल चिततुरँग के करि करि अमित उठान।
गोइ निवाहै जीतिये षेल प्रेम चौगान।।५५६।।

पुनर्यथा। नर्तितेति। नर्तितेभ्रुवौ नयने च यस्यां क्रियायामिति नर्तितभ्रुनयनं यथाभवति तथापि प्रिया पीतश्चासौ पटश्च पीतपटस्तनंजहाति हरिः। कृष्ण उदारचरितोऽपि तद्दानं नैन ददाति-इति कौतुकदर्शनायेति भावः।।५५४।। श्लेषोक्त्या होलिकरसमाह। उभाविति। उभौ प्रियनायकौ अनुरागरस

एव प्रेमहर्षस्तरङ्गमारतस्य निकरेण समूहेन। हे सखीति सम्बुद्ध्याक्षेपः। त्वं पश्य सममेकका लावच्छेदेन तपनमेव नीरयत्नं तेनकरणभूतेन उभौ-आर्द्रीकुरुत इति। अत्रपरस्परावलोकनेन स्वेदं सात्त्विकोत्पत्तेरार्द्री कुरुत इति भावः।।५५५।। पुनर्यथा मन इति। मन एव तुरङ्गमोऽश्वस्तस्य चातुरी चातुर्यं आसमन्ताद् दिदर्शपिषतीव दर्शयितुमिच्छति इव। प्रीतिरेव चतुष्पथगतेः आतुरीगत्या तुरीतां गतिचाञ्चल्यं अतीव अतिशयनेन घटति रचयतीत्यर्थः।।५५६।।

पीतं मधु गीतं यशो भ्रमितं भ्रमरकुलेन।
प्रतिकुञ्जं प्रति पल्लवं प्रतिलतिकं मधुपेन।।५५७।।

झुकि रसाल सौरभसने मधुर माधुरी गन्ध।
ठौर-ठौर झौरत झपत मौर झौर मद अन्ध।।५५७।।

वनमुपवनमपि कुसुमितं विरहितजनप्रतापि।
रचितं शरपञ्जरमिव प्रियेऽधुना मधुनाऽपि।।५५८।।

दिसिदिस कुसुमित देखियतु उपवन विपिन समाज।
मनौ विजोगिन कौ किये सरपंजर रितुराज।।५५८।।

नव पथिकः कथमपि निजं यदा सदनमुपयाति।
नेदं विकच पलाशमिति दवानलो विभाति।।५५९।।

फिर घर कौ नूतन पथिक चल्यौ चकितचित भागि।
फूले देखि पलाश वन समुहै समुझि दवागि।।५५९।।

वसन्तवर्णनं पीतमिति। मत्तेन भ्रमराणां कुलेन मधुमकरन्दपीतं यशश्च वसन्तौदार्यं गीतम्। कुञ्जं कुञ्जं प्रतीति प्रतीति प्रति कुञ्जं पल्लवं पल्लवं प्रतीति प्रतिपल्लवं लतिकां लतिकां प्रतीति प्रतिलतिकम्। यथा भवति तथा भ्रमितमित्यर्थः।।५५७।। पुनर्यथा वनेति। वनमुपवनमपि कुसुमितं 'गहनं काननं वनम्। आरामः स्यादुपवनमित्यमरः। विरहितजननां वियोगिजनानां प्रतापः सन्तापो यस्मादिति तद् विरहित जन प्रतापि। हे प्रिये! अधुना-इदानीं मधुना वसन्तेन शरपिञ्जरमिव रचितमासीदित्यन्वयः। अत्र कुसुमित वनोपवनानां विरहिजनसन्तापकारि शरपञ्जरस्योपमा बोध्या।।५५८।। पुनर्यथा नवश्चासौ पथिकः कथमपि निजं यदासदनमुपयाति तदा इदमुत्प्रेक्षते। इदं विकचपलाशवनं नेति किन्तु दावानल एव विभातीति सन्तापप्रद त्वात्।।५५९।।

नहि पवनः पावकसमोऽधुना वहति सुचिरेण।
निशश्वास तपनर्तुरपि खलुवसन्तविरहेण।।५६०।।

नाहि नये पावक प्रबल लुवै चलै चहु पास।
मानहु विरहवसन्तके ग्रीषम लेत उसास।।५६०।।

एकत्रोषितमूष्मणा खलुमृगेण सिंहेन।
जगत् तपोवनमिव कृतं तपर्तूग्रतापेन।।५६१।।

कहलाने एक तर रहत अहि मयूर मृग बाघ।
जगत् तपोवन सौ कियौ दीरघताप निदाघ।।५६१।।

घने वने सदनेऽथवा स्थिरतामेति बलेन।
खलु छाया छायामितां शुचि दिनमध्यभयेन।।५६२।।

बैठि रही अति सघन वन पैठि सदन तन माह।
देषि दुपहरी जेठ की छाहौ चाहत छाह।।५६२।।

ग्रीष्मवर्णनम्। नहीति। पावकेन समः पावकसमः सन्तापाधिक्याद् अधुना सुचिरेण चिरकालं पवनः मारुतो यं नहि वहति। अत्रोत्प्रेक्ष्यते खलु निश्चयेन तपनर्तुरपि वसन्तस्य विरहेण निशशस्वास। 'दीर्घ सन्तप्तनिश्वासैर्व'मान इत्यर्थः। विरहिणां दीर्घसन्तप्त निःवासवत्वं भवतीति भावः।।५६०।। पुनर्यथा। एकत्रेति। ऊष्मणां सन्तापाधिक्यात् खलु निश्चयेन मृगेण सिंहेन च एकत्रच्छायायामुषितं निवासः कुत इत्यर्थः। अत एव तपर्त्तौग्रीष्मस्य–उग्रश्चासौ तापस्तेन जगत् लोकः तपोवनमिव कृतमित्यन्वयः। तपोवनेऽपि परित्यक्तवैराः जीवा वसन्तीति भावः।।५६१।। पुनर्यथा घने वने इति। शुचिग्रीष्मः तस्य यानि दिनानि शुचिदिनानि। शुचि दिनानां मध्यं मध्याह्न इत्यर्थः। तस्य भयेन खलु इत्युत्प्रेक्षायां घने सघने वनेऽथवा सदने गृहे बलेन हठेन छायास्थिरतरतामेति, अतः छायापि छायामितेवासीद् इति तत्सन्तापोष्माधिक्यं वर्णितमिति।।५६२।।

कान्तकिमिच्छसि पथिक जनहितं वसनमधुनैव।
पश्य कृष्णसर्पी गरुणपक्षमूलमुषितैव।।५६३।।

कहा अगजी लषत हौ अहे अभोषे नाह।
अहिकारी प्यारी लगै गुरुड पच्छ की छाह।।५६३।।

भेदः कोऽपि न लक्ष्यते घनाघनान्धकारेण।
प्रकाशितं रजनीदिनं चक्रवाकमिथुनेन।।५६४।।

पावस घन अधियार मैं रहो भेद नहि आन।
राति दिवस जान्यो परै लषि चकई चकवानि।।५६४।।

साकाङ्क्षं रमणीमनो ववृधे प्रीतितिरितीव।
प्रावृषि सखि धाराधरो धरणितले चलतीव।।५६५।।

तिय तरसौ है मन भये करिसर सौहै नेह।
घर पर सौहै ह्वै रहे झरवरसौ है मेह।।५६५।।

पुनर्यथा। हे कान्त! हे प्रिय! पथिकजनहितं पथिकजनोपकारिवसनं वासः विदेशः यात्रोपकारि वस्त्रादिकमित्यर्थः। किमिच्छसि किमर्थमिच्छसि। विदेशगमनं मा कुरु-इति। यतस्त्वं पश्य-इयं कृष्णसर्पी गरुडपक्षमूलं तच्छायाभाश्रितेत्यर्थः उषिता वासं प्राप्तेति भावः। शत्रुपक्षच्छायाश्रिता कृष्णसर्पी अतस्त्वमपि विदेशं मा गच्छ गृहच्छायायाश्रितो भव-इति तदाशयः।।५६३।। अथ वर्षावर्णनम्। भेद इति। घनश्चासौ घनान्धकरः। तेन रजनीदिनयोर्भेदः कोऽपि न लक्ष्यते। किन्तु चक्रवाकीमिथुनेन वियोग संयोगवस्थया-इयं रजनी-इदं दिन मिति भेदः प्रकाश्यत इति-अर्थः। चक्रवाकमिथुनं दृष्ट्वा रजनीदिनं ज्ञेयमिति भावः।।५६४।। पुनर्यथा। साकाङ्क्षमिति। हे सखि! प्रावृषि वर्षर्त्तौ रमणीनां मनः साकाङ्क्षं भवति अतीव अतिशयेन प्रीतिर्ववृधे। धाराधरो मेघः धरणितले चलतीवेत्युत्प्रेक्षा।।५६५।।

जहि कोपं मुग्धे प्रिये रागं सुमुखि विधेहि।
प्रावृषीन्द्रगोपेऽपि यद्रागाधिक्यमवेहि।।५६६।।

कुढ्ंग कोप तजि रँगरगी करत युवति जग जाय।
पावस गूढ नवात यह बूढनहूँ रँग होय।।५६६।।

मा बधान मानिनिवृथा मानग्रन्थिमिवाति।
अन्यग्रन्थिविभेदिनी प्रावृडियं प्रतिभाति।।५६७।।

हठ न हठीली करि सकै यह पावस ऋतु पाइ।
आन गाठ ज्यौं छुटत त्यौं मान गाठि छुटि जाइ।।५६७।।

ताभ्यामिह चिरजीविता सुमुखि प्रिये! मुदाऽपि।
ययोः प्रावृषि न क्षणं विरहो भवति कदापि।।५६८।।

वेई चिरजीवी अमर निदरक फिरौ कहाय।
छिन विछुरै जिनकी नहीं पावस आव सिराय।।५६८।।

पुनर्यथा। जहीहि। हे मुग्धे! हे प्रिये! कोपं जहि। मां न त्यज प्रिये पत्यौ हे सुमुखि! रागं विधेहि। प्रावृषि वर्षर्त्तौ यद् यस्माद् इन्दगोपेऽपि कीट विशेषेऽपि रागाधिक्यमवेहि जानीहि-इत्यन्वयः।।५६६।। पुनर्यथा मा बधानेति। हे मानिनि। मानं ग्रन्थिमिव मा बन्ध्य। वृथैव भविष्यति इति भावः। यत इयं प्रावृट् वर्षा अन्यस्य वंशादेरपि ग्रन्थि-विभेदिनी प्रतिभाति। मान ग्रन्थिस्तु स्वयमेव मुच्यत इति भावः।।५६७।। पुनर्यथा ताभ्यमिति। हे सुमुखि! हे प्रिये! इहलोके ताभ्यामेव नायिकाभ्यां मुदा हर्षेण चिरजीविता अपि अवाप्ता। ययोः प्रावृषि वर्षायां कदापि क्षणमपि विरहो वियोगो न भवति एतेन विरहिणां जीवनं वर्षर्त्तौ दुर्लभतरमिति ध्वन्यते।।५६८।।

उडुपोपायं जहि सुमुखि! नभसि मासि वर्षेण।
कैमकुसुम सौरभगुणैर्न सुखं सखि हर्षेण।।५६९।।

अब तजि नाव उपावकौ आयौ सावन मास।
क्यौं रहि है तन घेम सौ कैम कुसुम की वास।।५६९।।

विनिवारित घनदुर्जना सुविभाषित सुपथैव।
भूमिरियं राजन्वती विलसति खलु शरदैव।।५७०।।

घनघेरा छठिगौ हरषि चली चहूँ दिसि राह।
कियौ सुचैनो आइ जग शरदसूर नरनाह।।५७०।।

करचरणारुणपङ्कजा खञ्जनदृशां विभाति।
चन्द्रचारुवदना शरत्कस्य न मुदं ददाति।५७१।।

अरुण सरोरुह कर चरण द्रगषं जन मुखचन्द्र।
समै आइ सुन्दर शरद् काहिन करत अनन्द।।५७१।।

पुनर्यथा। उडुपोयापायमिति। हे सुमुखि नभसि श्रावणे मासि नभाः श्रावणिकश्चसः' इत्यमरः। वर्षेण हेतुना अतिवृष्टया इत्यर्थः। उडुपोपायं, स्वल्पनौकोपायं जहि। 'उडुपं तु प्लवः कोल इत्यमरः किन्तु महत्या नौकया निर्वाह इत्यर्थः। हर्षेण सुखेन। कैमाख्यो वृक्षविशेषः। स च श्रावण एव कुसुमितो भवति तस्यकसुमानां सौरभ्यगुणै; सौगन्ध्यादिभिः हे सखि! सुखं न। एतेन कैमकुसुमसौरभ्यं कमोद्दीपनकारि अतो विरहिणां न सुखमिति निष्कर्षः।।५६९।। अथ शरद् वर्णनम्। विनिवारितेति। खलु निश्चयेन शरदाशर इयं भूमिः राजन्वती विलसति। एतेन। एतेन राजगुणा शरददिवर्तन्त इति कीदृशी शरद्। विनिवारिताः दूरी कृता; घना एव दुर्जनाय या सा पुनः सुविभासितः सुष्ठुतरः प्रकाशितः सुपथो यया सा। राजाऽपि दूरीकृत दुर्जनः सुप्रकाशितः सुमार्गो भवति।।५७०।। पुनर्यथा। करचरणेति। चन्द्रवच्यारु वदनं यस्याः सा चारु वदना सा एव शरत् कस्य मुदं न ददाति। अपितु सर्वेभ्यो मुदं ददाति–इत्यर्थः। कीदृशी शरत् करचरणवेव अरुणपङ्काजानि यस्यां सा। पुनः खञ्जना एवं दृशो यस्यां सा। अत्रापि हलन्तस्य दृश् शब्दस्याबन्तत्वं बोध्यम्। कीदृशी चन्द्रवदना चारुवदना करचरणावेव पङ्काजनि यस्याः सा खञ्जनानाम् इव दृशो यस्याः सेति–उपमानोपमेयपक्षेऽपि शिलष्ट विशेषणवत्वात् समाभेदरूपकगर्भितपूर्णोपमा।।५७१।।

विभावरीषु यथा यथा भूयस्त्वं प्रतिभाति।
कोकदुःखमपि लोकसुखमृद्धं तथा तथापि।।५७२।।

ज्यों ज्यों बढ़त विभावरी त्यों त्यों बढ़त अनन्त।
ओक ओक सबलोक सुख कोक सोक हेमन्त।।५७२।।

लेभाते सङ्गे सुखं विप्रियते विरहेण।
खगयुग्मायेते उभे नवविधिहेमन्तेन।।५७३।।

मिलि विहरत विछुरत मरत दम्पति अति रसलीन।
नूतन विधि हेमन्त रितु जगत जुराफा कीन।।५७३।।

कामः कुसुमशरासनं धरति किमर्थमनेन।
बशीकृता खलु वसुमती भाति मार्गमासेन।।५७४।।

कियौ सबै जग काम वस जीतै जिते अजेय।
कुसुमसरहिं सर धनुषकर अगहन गहनन देय।।५७२।।

हेमन्ततर्तुवर्णनम्। विभावरीष्विति। यथा यथा विभावरीषु रात्रिषु। भूयस्त्वं प्रतिभाति। तथा तथा लोकानां संयोगिनामितिज्ञेयं सुखं कोकानां दुःखं समृद्धं भवति-इति-अन्वयः। एतेन विरहिणां दुःखमितिज्ञेयम्।।५७२।। पुनर्यथा लेभात इति। सङ्गे सुखं लेभाते। विरहेण विम्रियते। मरणसमदुःखं प्राप्नुत इत्यर्थः। उभौ नायकौ नवश्चासौ विधिर्ब्रह्मासदवहेमन्तः तेन कर्त्रा खगयुग्मायेते। खगयुग्ममिवाचरतः। जुराफा इति भाषायां प्रसिद्धं खगयुग्म मिति ज्ञेयम्।।५७३।। पुनर्यथा कामइति अनेन मार्गमासेन खलु निश्चयेन वसुमती वशीकृता भाति। अतः कामः कुसुमानां शरासनं किमर्थं धरति न धारयितव्यमिति भावः।।५७४।।

दिनं दिनं दिनमाहमिह पौषे वरं क्षिणोति।
श्वसुर गृहे जामातुरिव मानः स्वयं मिनोति।।५७५।।

आवत जात न जानिये ते जहि तजि सियरान।
घरहिं जमाई लौ घटौ षरौ पूस दिन मानि।।५७५।।

माघे तप्तमतप्तमिति तेजस्तपनस्यैव।
नैति समाश्लेषं विना शीतं शिशिरस्यैव।।५७६।।

तपनतेज तपनातपत अतुलतुलाई माह।
शिशिरसीत कैहु न टरै बिन लपटे तियनाह।।५७६।।

शिशिर करस्पर्शे सुखं चक्रवाकमिथुनेन।
अनुभूतं माघे शशी भ्रमतो रव्युदयेन।।५७७।।

लगत सुभग सीतल किरन ठिमि सुख दिन अवगाहि।
माह ससी भ्रमसूरत्यौं रहत चकोरी चाह।।५७७।।

अथ शिशिरवर्णनम्। दिन दिनमिति। इह पौषे मासि दिनं दिनं प्रतिदिनस्य मान प्रमाणं परं यथा भवति तथा क्षिणोति। क्षयं प्राप्नोति। श्वसुरगृहे वर्त्तमास्य जामातुरिव मानः सन्मानं यथा स्वयं मिनोति हीयते इत्यर्थः।।५७५।। पुनर्यथा। माघे मासि तपनस्य तेजस्तप्तं, सद् अतप्तमिति मन्यामहे।

शीताधिक्यात्। तदेवाह। शिशिरस्यैव शीतं समाश्लेषं विना नायिकयोरङ्गसङ्गं विना नैति न गच्छतीत्यन्वयः।।५७६।। पुनर्यथा। शिशिरेति। चक्रवाकमिथुनेन माघे मासि रव्युदये सूर्योदये शिशिरकरस्पर्शे सति। शीतलमयूखस्य स्पर्शे सञ्जाते शशिभ्रमः सुखं न अनुभूतम्। अपितु–अनुभूतमैवेति काकुः।।५७७।।

नोष्णत्वं क्वापि स्थितं शिशिरशीतगमनेन।
तद्युवती कुचदुर्गगृहगतं जगर्ज्ज बलेन।।५७८।।

रहि न सकी सब जगत मैं सिसिरसीत के त्रास।
गरम भाजि गढ़ वैगई तिय कुच अचल सवास।।५७८।।

कुञ्जर इव कुञ्जानिलो भाति मन्दगमनेन।
रणद् भृङ्ग घण्टः स्रवद् दानमधुप्रसरेण।।५७९।।

निरत भृंग घण्टावली झरत दान मधुनीर।
मन्द मन्द आवत चल्यौ कुञ्जर कुञ्ज समीर।।५७९।।

सङ्कीर्णे पथि शङ्कितश्चाञ्चाल्यं विदधाति।
कुञ्जे कुञ्जे मञ्जुगति मारुतहयः प्रयाति।।५८०।।

रुक्यो साकरे कुञ्ज मग करत झाँझ झहरात।
मन्द-मन्द मारुततुरग षूदन आवत जात।।५८०।।

पुनर्यथा। नोष्णत्वमिति। शिशिर शीतस्य गमनेन सर्वत्र सञ्चरणेन–उष्णत्वं क्वापि न स्थितमासीदित्यर्थः। तदुष्णत्वं युवत्याः। कुचावेव दुर्गगृहं तस्मिन् गतं सत् बलेन जगर्ज– इत्यन्वयः।।५७८।। समीरवर्णनम्। कुञ्जर इति स्रवद्दानमेव मधुप्रसरः मकरन्दप्रसारः तेन तथा मन्दगमनेन करणभूतेन रणन्तो भृङ्गा एव घण्टा यस्मिन् सः। कुञ्जरो गज इव भाति, कुञ्जरोऽपि मन्दगतिः रणघण्टः स्रवद्दानो भवतीति समाभेदरूपकालङ्कारः।।५७९।। पुनर्यथा। सङ्कीर्णेति। मन्दगतिश्चासौ मारुत एव हयोऽश्वः कुञ्जे कुञ्जे प्रयाति गच्छति। सङ्कीर्णे पथि शङ्कितः सन् चाञ्चल्यं विदधातीति। मारुहययोरुपमेयोपमानयो समाभेदरूपकालङ्कारः।।५८०।।

विश्रमते तरुतरुतले मधुस्वेदमनुलाति।
आगच्छति दक्षिणदिशो वायुः स्थगित इवाति।।५८१।।

चुंबत स्वेद मकरन्द करु तरु तरु तर विरमाइ।
आवत दच्छिन तै चल्यौ तक्यौ वटाही वाइ।।५८१।।

रुद्धः कथमपि सर्वगोऽत्यर्द्धनिशं चलितोऽपि।
दिनतापं हरिरिव हरति वायुर्हृदि लगितोऽपि।।५८२।।

रही रुकी कैहू सुचलि आधिक राति वधारि।
हरत ताप सव द्यौस कौ उर लगि यार बयार।।५८२।।

पुष्पपरागपरावृतः सक्तः स्वेदरसेन।
मन्दं नवनारीगतिर्वातो वाति बलेन।।५८३।।

इति शृङ्गारसप्तशतिकायां नखशिखभूषण वसन्तादिषडर्तुवर्णनपरस्तृतीयः परिच्छेदः।।३।।

पुनर्यथा विश्रमते इति। दक्षिणदिशः सकाशात् स्थगित इव कश्चित् पथिकः यथा आगच्छति तथा वायुः पवनः आगच्छति। तरुतरुतले विश्रमते विश्रामं करोति। मधुमकरन्द स्वेदमिव अनुलाति गृह्णति-इति अन्वयः। पथिकोऽपि यत्र-तत्र विश्रमन् स्वेदवान-आयाति इति समानधर्मवत्त्वं बोध्यम्।।५८१।। पुनर्यथा रुद्ध इति। सर्वत्र गच्छतीति सर्वगो वायुः कथमपि रुद्धः सन् अर्द्धनिशं चलितोऽपि हृदि लगितोऽपि हरिरिव दिनतापं हरति। यथा हरिरर्द्धरात्रे मिलितो दिनतापं हरति-इति पूर्णोपमा।।५८२।। पुनर्यथा। पुष्पेति। न वाचासौ नारी नवनारी नवनार्याः गतिरिवगतिर्यस्य सः नवनारीगतिर्वातः पवनः बलेन मन्दं यथाभति तथा गच्छति। कीदृशः। पुष्पाणां पराग एव पटस्तेन वृतः स्वेद इव रसो जलं तेन सक्तः नवनार्यपि तथा भवति।।५८३।।

इति श्रीमच्छृङ्गारसप्तशतिकायां नखशिखाभूषणवर्णने वसन्तादिषडर्तुवर्णने टीकायां तृतीयः परिच्छेदः।।३।।

□□

## चतुर्थः परिच्छेदः

(सज्जनादिवर्णनं, सूक्तयः श्रीकृष्णभक्तिप्रकटनं जयसिंहनृपतिवर्णनञ्च)

रागं नोज्झति सज्जनस्नेहः शिथिलतरोऽपि।
अत्यारक्तपटो यथारुण्यं जीर्णतरोऽपि।।५८४।।

चटक न छोड़त घटत हू सज्जन नेह गभीर।
फीकौ परै नवरु फटौ रँग्यो लोह रँग चीर।।५८४।।

सखि कण्टक इव दुर्जनो विषमो विषमतयाऽपि।
पदलग्नस्तिर्य्यग्गतः प्राणं हरति तथापि।।५८५।।

नये विसिष ये लषि नये दुर्जन दुसह सुभाइ।
आडेपरि प्रानन हरै काँटे लौ लगि पाय।।५८५।।

कृपणधनं वक्षोजभरमपि समतया विभाति।
निज समृद्धिसमये यतो विलसति कठिनतयाति।।५८६।।

जेती सम्पत्ति कृपनकै तेती तूँ मति जोर।
बढ़त जात ज्यों-ज्यों उरज त्यौं त्यौं होत कठोर।।५८६।।

अथ सज्जन वर्णनम्। रागमिति। सज्जनानां स्नेहप्रेम शिथिलतरोऽपि यदापि रागमनुरक्ततां नोज्झति न त्यजते। तद्दृष्टान्त माह यथाजीर्णतरोऽपि अत्यारक्तपटः आरुण्यमरुणभावं नोज्झति।।५८४।। अथ दुर्जनवर्णनम्। सखीति। दुर्जनः दुष्टो जनः विषमतया कण्टक इव विषमः। यथा कण्टकः पदलग्नः सन् तिर्यग्गतः तथापि प्राणं हरति। प्राणहरणतुल्यं दुःखं ददाति तथा दुर्जनोऽपि-इत्यर्थः।।५८५।। कृपणवर्णन्। कृपणानां लुब्धानां धनम्। वक्षोजयोः उरोजयोः भरमपि समतया विभाति शोभते। तदेवाह। निज समृद्धिसमये यतः अतिकठिनतया विलसति-इति-अन्वयः।।५८६।।

कन्दुक इव नीचो जनो हृदि हर्षं प्रतियाति।
करे गृहीतो यच्छिरसि हत उद्धतो विभाति।।५८७।।

नीच हियै हरषै रहै गहै गंध कौ वोत।
ज्यौं त्यौं माथे मारिये त्यों त्यों ऊँचो होत।।५८७।।

जलमपि नीचगतं सदावलितश्वोद्ध्र्वमुपैति।
यो यत्प्रकृतिस्तस्य सा प्रकृतिः कथमपि नैति।।५८८।।

कोटि जतन कोउ करौ परै न प्रकृतिहि बीच।
नल बल जल ऊँचौ चढ़ै अन्त नीच कौ नीच।।५८८।।

अलकं दृग्वरुणीहयो दुर्गं भ्रूधनुषीच।
चलन्त्यर्द्धवक्रेण यद् गीतान्तं तरुणीच।।५८९।।

गढ़ रचना वरुणी अलक चितवन भौंह कमान।
आध वकाईही बढ़ै तरुनि तुरंगम तान।।५८९।।

नीचवर्णनम्। कन्दुक इवेति। नीचो जनः कन्दुक इवहृदि मानसे हर्षं प्रतियाति। यथा करे गृहीतः कन्दुकः शिरसिः। हतश्च उद्धतः औद्धत्ये न वर्त्तते। एवं नीचो जनः करे गृहीतः सम्मानादिभिः सन्मानितः। शिरसि हतः ताडिते हर्षं प्रयाति उद्धतोऽपि भवति मत्समः कोऽपि नास्तीति-औन्नत्येन स यातीति भावः।।५८७।। पुनर्यथा। जलमणीति। यो जनो यत्प्रकृतिः यादृशप्रकृतिकः सा तस्य प्रकृतिः कथमपि नैति न गच्छति। यथा जलमपि सदा नीचैर्गतम् नीचं गतं गमनं यस्य तत्। चलितः वंशादिभिर्निर्मितयन्त्राद्धेतोरुर्ध्वमुपैति। तथा नीचोऽपि नीच प्रकृतिः कदाचित्सङ्गादुच्चतया चलति न तु प्रकृतिविपर्यास इति भाव।।५८८।। पुनर्यथा। अलकमिति। अलकं चूर्णकुन्तलम्। दृक् दृष्टिश्च वरुणी च। हयोऽश्वश्च दुर्गं सेना निवासस्थानम्। भ्रुवौ च धनुश्च। गीतान्तम्। गीतावसनम्। तथा तरुणी युवती च एतेऽपि यत् यस्मात् अर्द्ध वक्रेण चलन्ति वक्रार्द्धगत्या गच्छन्तीति भावः।।५८९।।

गीतकाव्यतन्त्रीरसा अब्धिचतुष्टयमेषु।
तटलग्ना भग्ना भृशं मग्ना लग्नास्तेषु।।५९०।।

तन्त्रीनाद कवित्त रस सरस राग रति रंग।
अन बूड़े बूड़े तरे जे बूड़े सब अंग।।५९०।।

सज्जनकेशौ वैभवे सति नम्रीभवतश्च।
वैभवनाशे नीचजनकुचौ तथा भवतश्च।।५९१।।

सम्पति केससुदेस नर नवत दुहू इक वानि।
विभौसतर कुचनीच नर नरम विभौ की हानि।।५९१।।

बहुलघुभिर्नहि पूर्णता कथमपि महन्मुखस्य।
किं शतभूषकचर्मभिर्दुन्दुभिदलं द्ववयस्य।।५९२।।

कबहुन छोटे नरन सौ सरत बड़निके काम।
मढ़े नगारे जात क्यौं सौ चूहे के चाम।।५९२।।

गीतेति। गीतं च काव्यं च तन्त्री च रसः शृङ्गारः। एषां समाहरः गीतकाव्यतन्त्रीरसाः। एतद् अब्धि चतुष्टयं समुद्रचतुष्टयमतुल्यमित्यर्थः। एषु गीतादिषु ये तटलग्नाः तत्समीपभागतास्ते जनाः भृशं मग्नाः। समुद्रोऽपि स्वसमीपस्थं मग्नं करोति। किञ्च ये जनास्तेषु मग्नास्ते तटलग्नास्तीरमागता इत्यर्थः। समुद्रोऽपि स्वान्तर्गतं वस्तु लहरीभिर्बहिः प्रक्षिपति-इति समानधर्मवत्त्वं ज्ञेयम्। गीते मग्नाः

शिवादयः काव्ये मग्नाः वाल्मीकापादयः। तन्त्रीशब्दे मग्ना नारदादयः। रसे मग्नाः गोप्यादयः। ये तटलग्नास्ते भृशं मग्नास्तदास्वादानन्दानुभवात् तत्परं नान्यं जानन्तीति स्पष्टार्थः।।५९०।। पुनर्यथा सज्जनकेशाविति। सज्जनश्च केशवश्च तौ वैभवे सति सम्पत्तौ सति नम्रो भवतः। नम्रतां प्राप्नुतः। नीचो जनश्च कुचश्च स्वकीयवैभवनाशे सति तथा भवतः। नम्रतो प्राप्नुतः। इत्यर्थः।।५९१।। पुनर्यथा। बहूनि। बहुइति। बहुभिर्लघुभिः कथमपि महतो मुखस्य पूर्णता न भवति। यथा शतमूषकचर्मभिः दुन्दुभेः दलद्वयस्य किं पूर्णता भवति न भवति-इति काकुः।।५९२।।

धिक्कृतोऽपि लघुरिह पुनर्नमहत्त्वं प्रतियाति।
विस्फारितमपि दृग्युगं न दीर्घत्वमनुलाति।।५९३।।

आछे बड़े न ह्वै सकै लगिसतरोहै वैन।
दीरघ दोहि न नैकहू फारि निहारै नैन।।५९३।।

मरुधन्वनि वसता महो तृषार्दिता नामेव।
किलकन्दिलफललाभतो लब्धो नीरद एव।।५९४।

प्यासे दुपहर जेठ के रहेमतीर न सोधि।
मरुधनु पाइ मतीरहू मारु कहत पयोधि।।५९४।।

किं वापी कूपोऽथवा सरःसुर्निभर एव।
यो यस्याशां पूरयति तस्य स सागर एव।।५९५।।

अति अगाध अति ऊथलौ नदी कूप सरवाइ।
सोता की सागर तहाँ जाकी प्यास बुझाइ।।५९५।।

पुनर्यथा। धिक्कृतोऽपीति। इहलोके धिक्कृतोऽपि लघुर्जने महत्त्वं प्रतियाति। विस्फारितमपि दृग्युगं दीर्घतां नानुलाति न गृह्णाति-इति-स्पष्टार्थः।।५९३।। मरुधन्वनीति। मरुधन्वनि। मरुदेशे वसतां तृषार्दितानामेव जनानां क्वचित्कलिन्दफललाभतः नीरदो मेघ एवं लब्ध इत्यर्थः। कलिन्दफललाभे नीरदलाभ सुखं भवतीति भावः।।५९४।। किमिति। वापी अथवा कूपः अथ सरः अथ च सुनिर्भर एव। एतेषां मध्ये कोप्यस्तु। यो यस्याशां पूरयति स तस्य सागर एवेति दातरि स्वल्प धने प्रयोजनमदातरि बहुधनेऽपि न कोऽप्यर्थ इत्यन्योक्तिः।।५९५।।

नरो धनं गृह्णाति यल्लब्धं नीतिपथाऽपि।
तदपि व्ययभोगाधिकं रक्षेल्लब्धमथापि।।५९६।।

मीत न नीत गली तह्वै जो धरिए धन जोरि।
षाये षरचे जो जुरै जुरिये लाख करोर।।५९६।।

द्वौ भूपौ ददतुर्न किं दुःखं सर्वजनेषु।
सूर्याचन्द्रमौ यथा तमोधिकं दर्शेषु।।५९७।।

दुःसह दुराज प्रजानकौ क्यों न होइ दुःखद्वन्द।
अधिक अँधेरो जगकरत मिलि पावस रविचन्द।।५९७।।

जनं जनं याचति परं गृहं गृहं प्रतियाति।
धृतलोभोपदशो भृशं लध्वपि महद्विभाति।।५९८।।

घर-घर डोलत दीन ह्वै जन जन जाँचत जाइ।
दियै लोभचसमा चषन लघु पुनि बड़ौ दिषाइ।।५९८।।

यो दुष्टः स च शिष्टसममानं प्राप जनेषु।
नो शुभेषु पूजा पुनः पूजाऽशुभग्रहेषु।।५९९।।

वसै बुराई जासु वन ताही कौ सनमान।
भलौ भलौ कर छोड़िये षोटे ग्रह जपदान।।५९९।।

पुनर्यथा। नर इति। यन्नीतिपथा सुमार्गेण धनं लब्धं तद् गृह्णातु गृह्णीयात्। तदपि धनं व्ययभोगाभ्यामधिकं चेल् लक्ष्यमपि रक्षेदित्यर्थः। द्वाविति। एकस्मिन् राष्ट्रे-इतिशेषः। यद्वा द्वौ भूपौ भवतः तदासर्वजनेभ्यः किं दुःखं न ददतुः अपितु ददतुरेव। यथा दर्शेषु-अमावास्यासु एकस्मिन् राशौ सूर्याचन्द्रमसौ तमोधिकं ददतु रिति भावः।।५९७।। जनं जनमिति दृश; उपधार्यत इति उपदृक् सः जनं जनं याचति गृहं गृहं प्रतियाति तस्य धृतलोभोपदृशः जनस्य लध्वपि महद्विभाति, दीर्घतया दृश्यत इति।।५९८।। यो दुष्ट इति। यः दुष्टः ग्रहः दुःखप्रद इत्यर्थः। स च जनेषु शिष्टसममानं प्राप। तदेवाह। शुभेषु शुभग्रहेषु पूजा नो भवति, अशुभेषु पुनः पूजा सन्म्मानं भवतीत्यन्वयः।।५९९।।

सर्वं लसति शुभस्थले वसतिं यदा करोति।
काच बिन्दुरपि त्वन्मुखे सुषमामति वितनोति।।६००।।

सबै सुहायेई लगै वसै सुहाये ठाम।
गोरे मुख वेंदी लसै अरुनपीतसितश्याम।।६००।।

गदो नृपः पातकमिति प्रबलत्रयं जनेषु।
वरीवर्ति कालत्रये फलप्रदं सर्वेषु।।६०१।।

यहै कहै श्रुति सुमतहूँ यहै कहै सब लोग।
तीन दबावत निस कलौ पातक राजा रोग।।६०१।।

नदी वयः कति नानयान् कुरुते वृद्धिदिनेषु।
कति नार्द्रा मग्ना न कति कति लग्ना पङ्केषु।।६०२।।

इक भीजै चहलै परे बूड़े वहे हजार।
कितै न औगुन जग करत नय वय चढ़ती वार।।६०२।।

सर्वमिति। शुभस्थले यदा वसतिं। निवासं करोति तदा सर्वं वस्तु शुभमशुभं वा लसति। तदेवाह काचविन्दुरपि स्वन्मुखेऽतिसुषमां वितनोति विसारयतीत्यन्वयः।।६००।। गत इति। गदो रोगः नृपो भूपः पापं सर्वेषु जनेषु–इति प्रबलत्रयं सर्वेषु जनेषु कालत्रये फलप्रदं वरीवर्ति–इत्यन्वयः।।६०१।। नदीति। नदी तरङ्गिणी वयः अवस्था वृद्धिदिनेषु कति अनयान् न कुरुते नद्यां वृद्धि मत्यां कति न सार्द्राःकति न मग्नाः कति न पङ्कलग्ना। वयसोऽपि वृद्धिसमये कति न सार्द्राः स्वेदवन्तः कतिन मग्नाः स्वरभङ्गवन्तः। कति न पङ्कमग्नाः स्तम्भसात्विकवन्त इति स्पष्टार्थः।।६०२।।

भवति गुणी नहि निर्गुणोऽगुणो गुणी न विभाति।
श्रुता नार्कतरुतः क्वचित्प्रभा किलार्कसमाति।।६०३।।

गुनी-गुनी सबके कहै निगुनी गुनी न होत।
सुनौ कहू तन अर्क तै अर्क समान उदोत।।६०३।।

नो लभते सङ्गतिगुणं कुमतिभ्रमे कदापि।
हिङ्ग्गु न कर्पूरायते मिलितं मासे नापि।।६०४।।

संगति सुमति न पावही परै कुमति के धन्ध।
राखौ मेलि कपूर ज्यों हीगु न होत सुगन्ध।।६०४।।

श्रुत्वा नागरता महोकरतालेन हसन्ति।
गच्छति गुणगर्वः सखे ये ग्रामेषु वसन्ति।।६०५।।

सबै कहत करताल दै नागरता के नाउ।
गयौ गरब गुन कौ सबै बसत गँवेले गाँउ।।६०५।।

सङ्गः किल लोके विभा सखि समतया ददाति।
नागलता रागोऽधरे दृशिकज्जलं विभाति।।६०६।।

सोहत संग समान लौ यहै कहत सब लोग।
पान पीक औठनि बनै काजर नैननि जोग।।६०६।।

भवतीति। गुणी गुणवान् निर्गुणो न। अगुणो गुणरहितः गुणी न विभाति–इति लोकसिद्धम्। तदेवाह। अर्कतरुणः अर्कवृक्षाद् अर्कसमा प्रभा किल निश्चयेन न श्रुतेति दृष्टान्तः।।६०३।। नो

लभत इति। कुमतिभ्रमे वर्त्तमानः जनः सङ्गतेः गुणं नो लभते इति तदाह। मासेनापि मासपरिमाणेनापि मिलितं हिङ्ग्ु न कदापि कर्पूरायते कर्पूरसङ्गत्या कर्पूरवदाचरणं सौगन्ध्यस्वच्छत्वादिकं न लभत इति निष्कर्षः।।६०४।। श्रुत्वेति। ये ग्रामेषु स्वल्पग्रामेषु वसन्ति ते नागरतां श्रुत्वा–अहो इत्याश्चर्ये करतालं दत्वा हसन्तीत्यर्थः। तस्मात् हे सखे! सर्वगुणगर्वः कुग्रामवासे गच्छत्येव।।६०५।। सङ्ग इति। किल निश्चयेन लोके हे सखि! सङ्गः समयतया योग्यतया विभां ददाति। (अत्रोचितस्थानतया विभाति–इति–उचितम्–सम्पादकः) तदेवाह नागलतायाः ताम्बूलस्य रागः अधर एव विभाति कज्जलं तु दृश्येव विभाति–इति तद्योग्यस्थले शोभां ददातीत्यर्थः।।६०६।।

यन्मुकुटं शिरसा धृतं शक्रादिभिस्तदेव।
चरणधृतं लोकेषु वः प्रथयति जडतामेव।।६०७।।

जो सिर धरि महिमा मही लहियतु राजा राइ।
प्रकटत जड़ता आपनी मुकुट पहिरयतु पाइ।।६०७।।

यत्सदोष मपि दूषणं त्यजति न शङ्काकारि।
चन्द्रबिम्बमकलङ्कमिव उत्पातभ्रमधारि।।६०८।।

बुरौ बुराई जो तजै तौ चित षरौ सकात।
ज्यौं निकलंक मयंक लखि गनै लोग उत्पात।।६०८।।

सहजा सा प्रकृतिश्च तां धत्ते सहदेवेन।
स्वादुविशेषो यत्र तन्नापयाति यत्नेन।।६०९।।

भावर अनभावर भरै करौ कोटि बकवाद।
अपनी अपनी भाँति कौ छुटै न सहज सवाद।।६०९।।

न वसन्ते वर्षासु नो शिशिरे हेमन्तेन।
विकसति फलति किलार्क इति पश्य निदाघ गुणेन।।६१०।।

जासौ सकत अन्त हूँ जग व्यवसाई कोइ।
सोन निदाघ फूलै फरै आकुड़ हरहौ होइ।।६१०।।

यदिति। शक्रादिभिर्यद् यस्मान्मुकुटं शिरोभूषणं शिरसा धृतम्। तदेवमुकुटं चरणधृतं सत् लोकेषु वो युष्माकं जडतामेव प्रथयति विस्तारयति–इति अन्वयः।।६०७।। यदिति। यद्ववस्तु सदोषमपि दूषणं त्यजति हि निश्चयेन शङ्काकारि भवति। तदेवाह अकलङ्क कलङ्करहितं चन्द्रबिम्बमिव–उत्पादभ्रम धारिलोका वदन्ति–इति।।६०८।। सहजेति। यस्य या सहजप्रकृतिः तां देहेन सह धत्ते। यत्र यः स्वादुविशेषो वर्तते स च यत्नेन नापयाति न गच्छति इति अन्वयः।।६०९।। न वसन्त इति। किल निश्चयेन अर्कः अर्कतरुः हे सखे! त्वं पश्य निदाघगुणेन ग्रीष्मर्तुगुणेन विकसति फलति नव

वसन्तादिष्विति-इत्यन्वयः।।६१०।।

कथयति कोऽपि न दोषमपि दृष्ट्वा महतामेव।
अगरुधूममाघ्राय यत्सर्वः श्लाघत एव।।६११।।

को कहि सकै बड़ेन सौ ज्यौं कपूत की षानि।
भलौ भलौ सब कोई करै धुवाँ अगरु की जानि।।६११।।

सेवन्ती कण्टकयुता रचिता यद्विधिनैव।
लोकस्ततमपि न निन्दति तन्महतां महिमैव।।६१२।।

को कहि सकै बड़ेन सों लषै बड़ी यौ भूलि।
दीनी दई गुलाब कौ इन डरावने फूल।।६१२।।

कर्पूरोऽपि न स्वीकृतः पीनसवता यदापि।
तत्सौरभ्यं शीतता किं हीयेत तदापि।।६१३।।

सीतलतास सुबासता घटै न महिमा मूर।
पीनस वारे ज्यों तज्यो सेरा जानि कपूर।।६१३।।

कथयतीति। महतां दोषमपि दृष्ट्वा कोऽपि न कथयति यद् यस्माद् अगरुधूपमाघ्राय सर्वः जनः श्लाघत एव इत्यन्वयः।।६११।। सेवन्तीति। यद् यस्मात् विधिना विरञ्चि सेवन्तीसंज्ञालता कण्टकैर्युता रचिता लोकस्तमेव विधिं न निन्दति। तत् तस्मात् महतां महिमैवास्ति। महिमगुणादेव तेषां महत्त्वमित्यर्थः।।६१२।। कर्पूर इति पीनसाख्यो रोगविशेषः अस्ति अस्मिन् पीनसवान् पुरुषः। तेन यदाऽपिकर्पूरो न स्वीकृतः न गृहीतः तदापि किं कर्पूरस्यसौरभ्यं शीतलता च न हीयेतेत्यर्थः।।६१३।।

क्षुधा शान्तिरद्यपि नहि पश्य चकोरकुलेषु।
यद्वचिरङ्गारेषु किं किमथचन्द्रकिरणेषु।।६१४।।

चित दे देषि चकोर ज्यों जीतै भजै न भूष।
निमगीचुगै अँगार की चुगै कि चन्द्रमयूख।।६१४।।

गच्छ पथिक! प्रस्तरमिते ग्रामे को जानाति।
व्यापारं करिणामहो क्रियते चतुरतयाति।।६१५।।

चले जाव ह्यौं को करे हाथिन को व्यापार।
नहिं जानत इह पुर वसै धोबी ओढ़ कुम्हार।।६१५।।

नलिकाजलकुलजातयोर्गतिरेकैव विभाति।
गच्छति नीचतया यथा ततोच्चतां प्रतियाति।।६१६।।

नरकी अरु नरनीर की गति एकै करि जोइ।
जे तौ नीचे ह्वै चले तैतो ऊँचे होइ।।६१६।।

अथ क्षुधाशान्तिकारके धन्यपदार्थेषु सत्स्वपि चकाराणामङ्गारभक्षणेऽथवा चन्द्रमयूखभक्षणे-रुचिरिति यत्र रुचिः तस्य तत्रैव भवतीति नियमस्फूर्त्याह। क्षुधाशान्तिरिति चकोरकुलेषु अद्यापि क्षुधाशान्तिर्नइति त्वं पश्य। यद् यस्मादङ्गारेषु-अथ चन्द्रकिरणेषु रुचिरिति न ज्ञायत इत्यन्वयः।।६१४।। अस्मिन् ग्रामे न कोऽपिचतुरः अज्ञा एव वसन्तीति गजव्यापारवन्तं प्रत्याह। गच्छेति। हे पथिक! इतस्त्वं गच्छ प्रस्तरमिते षाषाणतुल्येऽस्मिन् ग्रामे मूढप्राय इत्यर्थः। करिगजानां व्यापारः क्रयविक्रयादि कोऽपि न जानाति। स चातिचतुरतया क्रियत इत्यर्थः।।६१५।। पुनर्यथा। नलिकेति। नलिका जलस्य कुलजातस्य कुलोत्पन्नस्य गतिरेकैव भाति। तदेवाह। नीचतया गच्छति-उच्चतां प्रतियातीत्यन्वयः।।६१६।।

सम्पत्तिः सलिलं यथा सम्बर्धते क्रमेण।
मनःसरोजं वर्धते न क्षिणोति सह तेन।।६१७।।

बढ़त-बढ़त सम्पत्ति सलिल मनसरोज बढ़ि जाय।
घटत घटत पुनि ना घटै बरसमूह कुम्हिलाइ।।६१७।।

समये-समये सुन्दरं सर्वं भवति सदैव।
यथा यस्य यादृङ्मनो रुचिस्तया रुचितैव।।६१८।।

समै-समै सुन्दर सबै रूप कुरूप न कोइ।
मनकी रुचि जेती जितै तित तेती रुचि होइ।।६१८।।

गिरेरुच्चमपि रसिकजनमनः सहस्त्रं यत्र।
मग्नं प्रेमपयोनिधिः पशुतरसुगमस्तत्र।।६१९।।

गिरतै ऊँचे रसिक मन बूढ़े जहाँ हजार।
वहै सदा पशु नरन कौ प्रेमपयोधि सगार।।६१९।।

पुनर्यथा। सम्पत्तिरिति। सम्पत्तिः सलिलं जलं चक्रक्रमेण सम्बर्द्धते तेन सह मनः च पुनः सरोजं च वर्द्धते। सम्पत्या सह मनः सलिलेन सह सरोजं वर्द्धते। तस्याः सम्पतेः क्षये सति मनो न क्षीयते-इत्यर्थः।।६१७।। पुनर्यथा। समये-समये इति काले-काले सदैव सर्वं वस्तु सुन्दरं भवति। यथा येन प्रकारेण यस्य पुंसः यादृक् मनोरुचिस्तस्य रुचिता सौन्दर्यं तथैवेति। तस्माद्रुचौ रूपकुरूपविचारो नास्त्येवेति भावः। एतेन मनोरुच्चैव कान्तिगुणाधिक्यमिति दिक्।।६१८।। गिरेरिति। गिरेः पर्वतादपि उच्चं रसिकजनानां मनः सहस्त्रं यत्र प्रेम एव पयोनिधिः समुद्रः तस्मिन् मग्नं भवति। स एव प्रेमयोधिस्तत्रैव पशुनराणस्तज्ज्जनानां सुगमो भवतीत्यन्वयः।।६१९।।

अरुणरत्नकृतनूपुरं पदयोर्लसति तवैव।
साभ्रमबिन्दुमपि भालमिह भासति किन्न सदैव।।६२०।।

पाइल पाल लगी रहत लगे अमोलिक लाल।
भोडरहू की भासि है वैदी भामिनि भाल।।६२०।।

सङ्गतिदोषं लभत इति लोकोक्तिः सत्यैव।
कुटिलभ्रूसङ्गाच्चरति दृगपि कुटिलगत्यैव।।६२१।।

सङ्गति दोष लगै सबै कहे जु साँचे बैन।
कुटिल वंक भ्रूसंग तै कुटिल वंग गति नैन।।६२१।।

श्यामशिरोरूढेति यो गर्वो मास्तु जनेषु।
विलुठिष्यति शिखिचन्द्रिके चन्द्रमुखीचरणेषु।।६२२।।

मोरचन्द्रिका स्याम सिर चढ़ि कत करत गुमान।
लषि वी पाइन तर लुठत सुनियतु राधामान।।६२२।।

अथ यथायोग्यस्थलं यथा योग्यशोभीति नाढ्यानाढ्यतया प्रयोजनमित्यन्योक्त्याह। अरुणेति। हे बाले! अरुणरत्नकृततनूपुरं तवेव पादयोर्लसति। भालन्तु साम्रबिन्दुमपि किं न सदैव भासते। किन्तु भासत एवेत्यर्थः।।६२०।। सङ्गतेर्दोषं तत्सङ्गवान् लगते–इति लोकोक्तिः सत्यैवेति। कुटिलयोभ्रुर्वोः सङ्गात् दृग् दृष्टरपि कुटिलगत्यैव चरतीत्यन्वयः।।६२१।। उत्तम स्थानगः कोऽपि तुच्छजनः सर्वं करोति तं प्रतिशिखि चन्द्रिका दृष्टान्तेनाह। हे शिखि चन्द्रिके इति तव गर्वः इतीति किमहं श्यामस्य कृष्णस्य शिरोरुढेति जनेषु मास्तु मा कुर्विति। कदाचिन् मानावसरे चन्द्रमुख्याः श्रीराधायाः चरणेषु विलुठिष्यसि–इति समस्य बलाबलं सूचितमिति भावः।।६२२।।

गोवर्धन घटिकैकमपि प्राप्नुहि पूजामेव।
ज्ञास्यसि तत्पूजाफलं पशुपदपातैरेव।।६२३।।

गोधन तू हरष्यौ हियै धरियक लेहि पुजाइ।
समुझि परै गिरि सीस पर परत पशुन के पाइ।।६२३।।

मधुप! न मधुर परागोऽपि न विकासः कलिकासु।
सपदि राग ईदृश अहो। अग्रे कीदृशआसु।।६२४।।

नहि पराग नहि मधुर मधु नहि विकास इह काल।
अली कली ही सौं बँध्यौ आगे कौन हवाल।।६२४।।

यदा यानि कुसुमानि किल सेवन्ती लतिकासु।
किं षट्पद दृष्टानि ते तानि नाधुना तासु।।६२५।।

जिन दिन देखे वे कुसुम गई सुवीति बहार।
अब अलि रही गुलाब मैं अपन कटीली डार।।६२५।।

वासन्ती लतिका तटे मधुपो नयति दिनानि।।
तानि वसन्ते सति पुनर्भविष्यन्ति कुसुमानि।।६२६।।

इह आशा अटक्यौ रहौ अलि गुलाब के मूल।
ऐहै फेरि वसन्तरितु इन डारन वे फूल।।६२६।।

कोऽपि जडः सम्मानं प्राप्य मुदितस्तं प्रत्याह। गोवर्धनेति। हे गोवर्द्धन! घटिकैकमपि सन्मानं पूजां प्राप्नुहि। तदनन्तरं पूजायाः फलं पशूनां गवां पदपातैः चरणप्रहारैः ज्ञास्यस्येवेति।।६२३।। नवोढाऽनुरागवान् कोऽपि जनस्तं प्रत्याह। हे मधुप! सपदि–अधुना कलिकासु मधुरपराग–विकासानामभावः। अहो! इत्याश्चर्ये–ईदृशस्तव रागः स्नेहोऽस्ति। अग्रे मकरन्दपरागविकासवतीषु–आसुकलिकासु कीदृशो रागो भविष्यति–इति नो जान इत्यर्थः।।६२४।। यदेति। यदा यस्मिन् समये सेवन्ती लतिकासु हे भ्रमर! यानि कुसुमानि त्वया दृष्टानि तानि कुसुमानि अधुना इदानीं न सन्तीत्यर्थः।।६२५।। वासन्तीति। वसन्ते भवा वासन्ती लतिका तस्यास्तटे मूले मधुपो भ्रमरः दिनानि नयति। पुनर्वसन्ते सति तानि कुसुमानि भविष्यन्तीत्याशया तन्मूलनिवासं करोतीत्यर्थः। एतेन कश्चिद्राजपुरुषो राजनि क्षीणधने पुनस्तत्सम्पत्तिमिच्छन् तदाशया ततत्समीपे निवासं करोतीति–अन्योक्तिः।।६२६।।

पश्यन् तत्सुकुमारतां किल शिरीषकुसुमेषु।
नालिङ्गति मधुपः परं भ्राम्यति किञ्जल्केषु।।६२७।।

सिरस कुसुम मडरात अलिन झुकि झपटि लपटात।
दरसत अति सुकुमार तरु परसत मन न पत्यात।।६२७।।

सुखी शर्कराशनतया पक्षपटो जगतीह।
विहङ्गेषु सहकान्तया कपोतको वसतीह।।६२८।।

पट पाषै भट काकरी सफर परेई संग।
सुखी परेखा पुहि ममै एकै तुही विहंग।।६२८।।

दिनदशकं सादरतया काक! महत्त्वं यासि।
श्राद्धदिनेऽतीते पुनर्यथा तथा भवितासि।।६२९।।

दिन दस आदर पाइ कै कर लै आप बखान।
लौ लग काक सराधपख तौ लगि तौ सनमान।।६२९।।

पश्यन्निति। मधुपो भ्रमरः किल निश्चयेन शिरीषकुसुमेषु नालिङ्गति परं तत्किञ्जल्केषु भ्राम्यति–इति–अन्वयः। किञ्जलकः केसरोऽस्भियामित्यमरः।।६२७।। सुखीति। शर्कराया अशनं शर्कराशनं तद्भावस्तत्ता पक्षावेव पटौ वस्त्रे यस्य स कपोतकः पक्षिविशेषः कान्तया सह विहगेषु पक्षिषु सुखी सन् वसतीत्यन्वयः।।६२८।। दिनेऽति। हे काक! दिन दशकमेव सादरतयात्वं महत्त्वं यासि। पुनः श्राद्धदिने–अतीते सति पुनर्यथात्वं पूर्वमसि तथा भवितासि।।६२९।।

हंसि खगानन्यानहो सुकृतस्वार्थौं नैव।
खग पलाशपरहस्तगत कुरु न श्रमं वृथैव।।६३०।।

स्वारथ सुकृत न श्रम वृथा देष विहंग विचार।
वाज पराये पानि परि तूँ पक्षिहिं न मार।।६३०।।

मृयते शुकः पिपासया पञ्जरगतोऽधुनैव।
आह्वयामि वायस महोबलये समय दसैव।।६३१।।

मरत प्यास पिंजरा पर्‌यो सुवा समय के फेर।
आदर दै दै बोलियतु वायस बलि की बेर।।६३१।।

नीलकण्ठ दशमी तिथौ विजये गते न कोऽपि।
त्वां द्रक्ष्यति गुप्तो वृथा तरु तरु तले गतोऽपि।।६३२।।

काल दशहरा वीति है धर मूरख जिय लाज।
दुरौ फिरत कत कत द्रुमति नीलकण्ठ बेकाज।।६३२।।

बक पङ्क्त्या प्राचीनया सरस्तथा न विभाति।
नवैर्मराल कुलैर्यथा विशालतां प्रति याति।।६३३।।

यदपि पुरानैव गत ऊसर निपट कुचाल।
नये भये तौ कह भयौ ये मन हरत मराल।।६३३।।

हंसीति। हे खग! पलाश! मांसाशिन्! परहस्तगत पराधीनत्वमन्यान खगान् परेच्छया हंसि मारयसि। एतेन ते सुकृत स्वार्थौं नैव भविष्यतः। तस्माद् वृथैव श्रमं न कुरु। सुकृतस्वार्थ सिद्ध्यभावात्। सुकृतार्थं वा स्वार्तश्रमः कर्त्तव्य इति भावः।।६३०।। शुकः पक्षिविशेषः पञ्जरगतः पिपासया अधुनैव म्रियते। अहो! इत्याश्चर्ये बलये बलिभक्षणाय वायसं काकमाह्वयामि यत् तत्समयदशैव कालदशैव ज्ञेयेत्यर्थः।।६३१।। नीलकण्ठान्योक्त्याह। नीलकण्ठनामा पक्षिविशेषः तत्सम्बुद्धौ हे नीलकण्ठ! त्वं

तरु तरु तले गतोऽपि सन् वृथैव गुप्तः दशमीतिथौ विजये विजयमुहूर्ते गते सति त्वां कोऽपि न द्रक्ष्यति। विजयमुहूर्त एव तव दर्शनकाल इति समय प्राबल्यं सूचितम्।।६३२।। बक पङ्क्त्येति। प्राचनीया बकपङ्क्त्या सरसतडागस्तथा न विभाति। यथैव नवैर्मरालकलहंसकुलैः विशालतां सौन्दर्यं प्रतियातीति। एतेन नीचैर्नराजसभायाः शोभा उत्तमैस्तु शोभाविशेष इति अन्योक्ति।।६३३।।

मुक्तः कोऽपि न जालगः किमाकुलत्वं यासि।
मृग निवृत्तिमिच्छन्नपि लग्नस्तथा तथाति।।६३४।।

को छूटौ इह जाल परि कत कुरंग अकुलात।
ज्यों-ज्यों सुरझि भजौ चहै त्यों-त्यों सुरझत जात।।६३४।।

नो वर्षा वर्षीयसी ऋतुराजोऽयं भाति।
पूर्वदलाभावं विना नव दलानि न ददाति।।६३५।।

नहि पावस ऋतुराज यह तजि तरुवर मति भूल।
जपत भयै बिन पाइहैं क्यों न बदल फुल फूल।।६३५।।

श्रुतेरधः श्रुतिभूषणं तत्सेवा फलमाप।
पश्य समुक्तकनासिकाभरणमुच्चतामाप।।६३६।।

अजौ तज्यो नाही रहौ श्रुति सेवत इक अङ्ग।
नाक वास वेसर लह्यौ वसि मुकतनि के सङ्ग।।६३६।।

मृगान्योक्या संसाराद्विरक्तिमिच्छन्नाह। मुक्त इति। हे मृग जालतो निवृत्तिमिच्छद् किमाकुलत्वं यासि। कोऽपि जालगः पक्षी न मुक्तो दृष्टः। यथा निवृत्तिमिच्छन् तथा तथाति लग्नो दृष्ट इत्यर्थः।।६३४।। नो इति। इयं वर्षीयसी दलादिबृद्धिमती वर्षा नो नैव किन्तु-अयं ऋतुराजो वसन्त इति विभाति। पूर्वदलाभावं विना नवदलानि न ददातीति। नृपोऽपि पूर्व सम्पत्कर्षणं विना स्वसम्पत्तिं ना दताति। एतेन सूर्यवद्राजवृत्तिरिति व्यज्यते।।६३५।। श्रुतेरध इति। श्रुतेः श्रवणस्य अधोभागे वर्तमानं श्रुतभूषणं तत्सेवाफलमाप प्राप्तवान्। स मुक्तं च तत् नासिकाभूषणमुच्चता प्रापेति मुक्तसङ्गान्मुक्तो भवति-इति भावः।।६३६।।

जलधि भवैरपि निर्मलैर्भुवि महर्घता प्रापि।
खलु गुणिभिर्मुक्ताफलैर्न सादरत्वमथापि।।६३७।।

जनम जलधि पानिय विमल भौ जग अघ अपार।
रहै गुनी ह्वै गर परै भलौ न मुक्ताहार।।६३७।।

शिरःस्थितं कचभारमपि पृष्ठे धृतं ललास।
गुणी मुक्तहारस्तु हृदि कण्ठगोपि विचकास।।६३८।।

मूड़ चढ़ाये हू रहै पर्‍यौ पीठ कच भार।
गैरै परै हू राषिये तऊ हिये पर हार।।६३८।।

युवति कुचस्थल मञ्जुपद गत गुञ्जाहारेण।
विमोहितं जगतीतलं कति न गर्वभारेण।।६३९।।

पाइ तरुणि कुच उच्चपद चिरमि ठग्यौ सव गाऊँ।
छुटै और रहिहै वहै मोल छबीली नाउ।।६३९।।

नात्र वसति नागरजनो यस्तवादरं राति।
ग्रामे सखि सेवन्तिके वृथा विकासमितानि।।६४०।।

वैन इहा नागर बढ़ी जिन आदर तो आव।
फूलौ अन फूलौ भलौ गवँई गाँव गुलाब।।६४०।।

जलधीति। जलधिभवैः समुद्रोत्पन्नैरपि गुणिभिः मुक्ताफलैर्भुवि महर्घता बहुमूल्यता प्रापि। अथापि सादरत्वं न प्राप्तमित्यन्वयः।।६३७।। शिरःस्थितमिति। शिरःस्थमपि कचानां केशानां भारं पृष्ठे धृतं सत् ललास शोभते स्म। मुक्ताहारस्तुगुणी गुणवान् हृदि धृतः कण्ठगोऽपि कण्ठावलम्बी–अपि चकास विशेषेण लसतीत्यर्थः।।६३८।। तरुणीति। तरुण्याः कुचस्थलं तदेव मञ्जुपदं रमणीयस्थानं तस्मिन् गतः प्राप्तोऽयं गुञ्जाहारःतेन गर्वभारेण हेतुना गर्वाधिक्येन कतिवारं जगतीतलं लोकं न विमोहितम् किन्तु बहुवारं विमोहितमासीदित्यर्थः।।६३९।। नात्रेति। हे सेवन्तिके! सखि! अत्र ग्रामे नागर जनः चतुरजनो वसति। सखि! अत्र ग्रामे नागरजनः चतुरजनो वसति। यस्तवादरं राति ददाति। अत्र ग्रामे वृथैव विकासमिता प्राप्तासीत्यन्वयः।।३४०।।

हे सौरभ्यवणिग्वृथा ग्रामे ग्राम्यजनेषु।
सौरभ्यं किमु दर्शयसि तदादराऽरसिकेषु।।६४१।।

करलैं सूँघि सराह कै रहे सबै गहि मौन।
गन्धी गन्ध गुलाब कौ गवँई गाहक कौन।।६४१।।

सुरभि तैल माचभ्यये मधुरमतीव वदन्ति।
इह मा दर्शय सौरभान्व्यर्थस्तोऽभिभवन्ति।।६४२।।

करि फुलेल कौ आचमन मीठौ कहत सराहि।
ये गन्धी मति-अन्ध तूँ अतर बतावत काहि।।६४२।।

कनकादप्यधिकं मतं कनकं जगति जनेषु।
तदद्भुतं मदकारि तत्सक्तं मदकरगेषु।।६४३।।

कनक-कनक ते सौगुनी मादकता अधिकाइ।
वह षाये बौराइ जग वह पाये बौराइ।।६४३।।

हे सौरभ्येति! हे सौभ्यवणिक् सौगन्ध्यवस्तुव्यापारयुक्त अस्मिन् ग्रामे तदादरस्यारस्यारसिकेषु अप्रतीतिमत्सु ग्राम्यजनेषु मूढजनेषु सौरभ्ये किमु दर्शयसि मा दर्शयस्यैत्यर्थः।।६४१।। सुरभीति! सुरभितैलमाचम्य-अतीवमधुरमस्तीति ये जनाः एवं वदन्ति। अतः इहजनेषु सौरभान्सुगन्धिद्रव्याणि मा दर्शय यतस्तेऽपि व्यर्थाः भवन्तीत्यन्वयः।।६४२।। कनकादिति। कनकात् धत्तूरतरोरपि कनकं सुवर्णं जनेषु-अधिकृतमम्। आधिक्येनोक्तमित्यर्थः। तदेवाह-तत्कनक धत्तूरं भुक्तं तत्-मदकारि मादकं भवति पुनस्तत्कनकं सुवर्णं सक्तं सत्-मिलितमात्रमपि-एषु जनेषु मदकरं-मादकं भवतीत्यन्वयः।।६४३।।

कनक त्यजकनकाभिधां किं नाम्ना प्रभुताऽपि।
भूषानिर्मितिशालिनी शक्तिस्त्वयि न तथापि।।६४४।।

बड़े न हूजे गुनन बिनु विरद बड़ाई पाइ।
कनक धूतरे सौ कहत गहनौ गढ़ो न जाइ।।६४४।।

सर्वाः प्रणमतपद्मिनीवधुं करद्वयेन।
सेर्ष्यसहासं सत्कृतं ताभिर्हरिवचनेन।।६४५।।

रविन्दौ करजोर कै सुनत स्याम के बैन।
भये हँसौहै सबन के अति अनयौ है नैन।।६४५।।

वधूरियं लघ्वञ्जलिर्युक्ता कणदानाय।
तदा जगद्याचकमभूदधिकरूपलाभाय।।६४६।।

कन दीवौ सौपौ ससुर बहू थुरहथी जानि।
रूप रहचटै लगि रह्यो सब जग जाचत आनि।।६४६।।

परवनितालम्पटफलं कथयन् बुधश्चकास।
यदा कयापि विलक्षितो मन्दं तदा जहास।।६४७।।

पर तिय दोष पुरान सुनि लषी मुलकि सुख दान।
कसि करि राखी भिन्नहू मुष आई मुसक्यान।।६४७।।

कनकेति। हे कनक! धत्तूर! त्वं कनकाभिधां त्यज नाम्ना किं त्वया प्रभुता प्राप्ता भूषा निर्मितिशालिनीशक्तिस्त्वयि तथापि नास्तीत्यन्वयः।।६४४।। चिरप्रसङ्गं हास्यरसमुदाहरति। सर्वा- इति सर्वाः कन्याः पद्मिनीबन्धुं सूर्यं करद्वयेन करद्वाञ्जलिभिः प्रणमत इति। कृष्णोक्तिः। तदातामिः

कृष्णस्य वचने न सेर्ष्यं सहासं यथा भवति तथा तत्सूर्यप्रणमनं कृतमित्यर्थाः।।६४५।। वधूरिति। इयं वधूः लध्वञ्जलिः अतः कणदानाय युक्ता योग्या तदा अधिकरूप लाभाय जगल्लोकोऽपि याचकं मभूदित्यन्वयः। इष्टार्थ समुद्यमेऽनिष्ट प्राप्तिरूपो विषमालङ्कारः।।६४६।। परवनितेति। परवनितायां यो लम्पटः पुमान् तत् फलधर्मशास्त्रोक्तं कथयन् बुधः पण्डितश्चकास दिदीपे। यदा यस्मिन् समये कयाऽपि पर वनितया विलक्षितः। स्वीयसङ्गादिसूचनपूर्वकं कटाक्षितः तदा मन्दं यथाभवति तथा जहास हसितवा नित्यर्थः।।६४७।।

गणकः सुतजातकफलं पितृधातकमादाय।
सन्तप्तः पुनरपि सुखी जारजातमवधाय।।६४८।।

चित पितुमारक जोग गति भयौ भयैं सुत सोग।
फिरि हिय हुलस्यौ जोइ सी समुझै जारज योग।।६४८।।

भिषग्यदा पारदगुणान् वदति धनं गृह्णाति।
तदा वैद्य वनिता दृशं सस्मेरां विदधाति।।६४९।।

बहुधन लै आसान दै पारौ देत सराहि।
वैद वधू हसि भेद सौं रही याह मुष चाहि।।६४९।।

हरि विरहे पथि पथि सरित गोपिकाश्रु जनिताह।
ववृधे तां तु महोर्मिभिर्जनो न कोऽपि जगाह।।६५०।।

गोपिन असुवन भरि सदा अस्वेत अपार।
डगर-डर मैं ह्वै रही वगर-वगर के वार।।६५०।।

गणक इति। गणकोज्योतिर्वित्। सुतस्य जातकफलं पितृघातकमादाय ज्ञात्वा सन्तप्त आसीत्। पुनरपि तं सुतं जारजातमवधाय ज्ञात्वा सुखी बभूवेत्यन्वयः।।६४८।। भिषगिति। भिषग् वैद्यः। यदा पारदस्य गुणान् वदति। धनं गृह्णाति तदा वनिता सस्मेरां समन्दहसितां दृशं विदधातीत्यन्वयः। अनेन पारद रसेन शतस्त्री सम्भोग सामर्थ्यमित्युक्त्वा असौ-अन्यतो धनं गृह्णाति। अस्य तु मत्ससमोगेऽपि न सामर्थ्यमिति मन्दहसितप्रयोजनमिति भावः।।६४९।। करुणरसमुदाहरति। हरीति हरेः कृष्णस्य विरहे पथि पथि हि निश्चयेन न गोपिकाश्रुजनिता सरित् ववृधेतां महोर्मिभिरुपलक्षितां दृष्ट्वा कोऽपि जनो न जगहेति। व्रज वनितानां करुणास्पदत्वाद् अन्येषां करुणरसोत्पत्तिरिति बोध्यम्।।६५०।।

हरि विरहाकुलराधिका नयनजलैरधुनैव।
खलु कलिन्द कन्या सखे बाहुल्यं गमितैव।।६५१।।

श्याम सुरति करि राधिका तकत तरनिजा तीर।
असुवन करत तरौसकौ षिनक षरौ हौ नीर।।६५१।।

असमयलयं करिष्यते सुरराजः कोपेन।
तद्गर्वोगिरिधारिणा हरिणा हृतः क्षणेन।।६५२।।

लोपे कोपे इन्द्र लौ रोपे प्रलय अकाल।
गिरिधारी राषै सबै गो गोपी गोपाल।।६५२।।

विनयशतं कृतमपि मया हरिणचरणगतेन।
तथा तथापि न मन्यसे किमथ कुपिततनयेन।।६५३।।

हौ हारी कै कहै हा पाइन पारौ प्यौर।
लेह काह अजहू कियै तेह तरेरे त्यौर।।६५३।।

असि वाहकसेना भटा जग्मुः सङ्ग्रामाय।
तदा पुरो मङ्गलकरी वरीवर्ति कुशलाय।।६५४।।

अनी बड़ी उमड़ी लषै असि वाहक भट रूप।
मङ्गल करि मानौ हियै भौमुख मङ्गलरूप।।६५४।।

हरीति। हरिविरहाकुलराधिकाभयनजलैः अधुनैव खलु निश्चयेन कलिन्दकन्या यमुना बाहुल्यं गमितैवेत्यन्वयः। अत्रापि करुणरसोऽवधेयः।।६५१।। रौद्ररसमाह। सुराणां राजा–इन्द्रः कोपेन असमयेऽपि अकालोऽपि लयं करिष्यते तद् गर्वः गिरधारिणा हरिणा क्षणेन हृत इत्यन्वयः।।६५२।। नायिकाया रौद्ररसमाह। विनयानां शतं मया कृतमिति मानिनीं प्रति सख्या उक्तिः। चरणगतेन चरणान्तप्राप्तेन हरिणाऽपि विनयशतं कृतमित्यर्थः। तथा तथा कुपितनयनेन हेतुना किमर्थं न मन्यसे।।६५३।। वीररस मुदाहरति। असीति। असि वाहकाश्च ते सेनायाः भटा योद्धारः सङ्गमाय यदा जग्मुः। तदा पुरः अग्रे मङ्गलकारी मङ्गलाख्यो गजः कुशलाय क्षेमं कर्तुं वरीवर्ति–उत्साह कारित्वाद् वीररसस्थायित्वेन निर्दिश्यते।।६५४।।

यदि कुर्वन् हरिशब्दमिव हरिरागतश्चकास।
तदा बन्दि सदनेऽपि सा सानन्दं विजहास।।६५५।।

नाह रार जिना हरि गरज बोल सुनायौ टेरि।
फसी आज बिच बन्दि मैं हसी सबन तनहेरि।।६५५।।

राधावदनविलोकनप्रभवकम्पयुक्तेन ।
हरिणा यदा प्रकम्पितं तदा व्रजेन भयेन।।६५६।।

गिडन पानि डगलास गिरि लषि सब व्रज वेहाल।
कम्प किसोरी दरस तै षरे लजाने लाल।।६५६।।

गता गोकुले प्रलय घनघोरघटा च यदैव।
गोविन्दः सानन्दमपि दध्रे गिरिं तदैव।।६५७।।

प्रलय करन वरसन लगे जुरि जलधर सब साथ।
सुरपति गर्व हर्यो हरषि गिरधर गिरिधर हाथ।।६५७।।

यदीति। हरेः सिंहस्य शब्दमिव शब्दं कुर्वन् हरिः कृष्णः आगतः सन् चकास दिदीपे। तदा सा रुक्मिणीवन्दिसदनेऽपि स्थिता सानन्दं यथा भवति तथा विजहासेति 'उत्साहवर्धनो वीर इति लक्षणादत्र वीर रसो व्यज्यते।।६५५।। भयानक रसमाह। राधेति। राधायाः वदनस्य विलोकनं तस्मात्प्रभूतो यः कम्पस्तेन युक्तेन हरिणा–कृष्णेन यदा प्रकम्पितं तदा व्रजेन व्रजस्य जनेन भयेन हेतुना प्रकम्पितमिति हरिकम्पं दृष्ट्वा सर्वेऽपि गिरिपातभयात्प्रकम्पिता इति भयस्थायिभावद्भयानक रसो व्यज्यते।।६५६।। पुनर्यथा। गतेति। गोकुले प्रलयकालिका ये घोरा मेघाः घनास्तेषां या घटा समुदायरूपा सा गता सा आगता प्राप्ता तदा गोविन्दो गोकुलवासिनां भयं दृष्ट्वा तद्रक्षणाय गिरिं गोवर्धनं दध्रे इत्यन्वयः।।६५७।।

अरिकुलकृन्तननिर्दयो जयसिंहो विललास।
यथाऽघासुरोदरकदनकरो हरिर्विचकास।।६५८।।

यौ दल काढ़े बल कि कै तै जयसाह भुवाल।
उदर अघासुर के परै ज्यों हरि गाइ गुवाल।।६५८।।

पश्य हरेर्मोहनतनोर्गतिरद्भुता विभाति।
हृदि वसति प्रतिबिम्बिता बहिरपि विशदतराति।।६५९।।

मोहन मूरति श्याम की अति अद्भुत गति जोइ।
वसत सुचित अन्तर तऊ प्रतिबिम्बित जग होइ।।६५९।।

सरागस्य मनसो गतिं कोऽपि न विन्दत्येव।
मग्नं कृष्णरसे यथा तथा तथोज्ज्वलमेव।।६६०।।

या अनुरागी चित्त की गति समुझै नहिं कोइ।
ज्यौं ज्यौं बूढ़े श्याम रँग त्यों त्यों उज्ज्वल होइ।।६६०।।

वीभत्समाह। अरीति। अरिकुलानां शत्रुवर्गाणां यत् कृन्तनं तस्मिन्निदर्ययो जयसिंहाख्यो नृपो विललास। यथाऽघासुरस्य–उदरकर्तनकरः उदरविदारणो हरिर्विचकास इति।।६५८।। अद्भुत रसमाह। पश्येति। हरेः कृष्णस्य मोहना तनुः तस्याः गति अद्भुता विभाति शोभते। हृदि वसन्ती सती बहिरपि–अति विशदतरा प्रतिबिम्बिता आसीदित्याश्चर्यरूप स्थायि भावाविर्भावाद्–अद्भुतरसोऽयं व्यज्यते।।६५९।। सरागस्येति। सरागस्य मनसोगतिं कोऽपि जनो न विन्दति। कृष्णस्य रसे प्रीतौ

यथा यथा मग्नं तथा तथा उज्ज्वलमेव भवतीत्यन्वयः। लोकेहि कृष्णरसमग्नस्य-उज्ज्वलता नास्तीति विरोधाभासवत्वाददद्भुतरसो व्यज्यते। श्लेषमहिम्ना विरोधपरिहारः।।६६०।।

जगतः काचस्यापि गतिरेकैव विचारिता।
यस्मिन्नेकस्यापि विभोस्तनुः प्रतिबिम्बिता।।६६१।।

मैं समझौ निरधारयौ जग काचौ काच सौ।
एकै रूप अपार प्रतिबिम्बित लषि यतुजहाँ।।६६१।।

शतं सहस्त्रं लक्षमपि कोटिं कोऽपि चिनोति।
मम सम्पत्तिर्यदुपतिः सर्वं सुखं तनोति।।६६२।।

कोऊ कोटिक संग्रहो कोऊ लाष हजार।
मो सम्पति जदुपति सदा विपति विदारन हार।।६६२।।

जपमाला मुद्रातिलकमुद्रिततनुर्वृथैव।
हरिरपि सत्यवशीकृतः कुरुसत्यं मनसैव।।६६३।।

जपमाला छापातिलक सरौ न एकौ काम।
मन काचे माचे वृथा साँचे राचे राम।।६६३।।

यमकरिवदनान्तर्गतो जीवसि जीव यदैव।
परिहर विषयतृषामतो भज नरहरिं सदैव।।६६४।।

जम करि मुह तर हर पर्‌यो यह धरहर चितलाइ।
विषै त्रषा परिहरि अजौ नरहरि के गुन गाइ।।६६४।।

अथ सोरठावृत्तेन शान्तरस मुदाहरति। जगत इति। जगतोलोकस्य पुनः काचस्य गतिः प्रवृत्तिः एकैव विचारिता। यस्मिन् जगति नानारूपे यस्मिन् काचे नानारूपे एकस्यापि विभोस्तनुर्मूर्त्तिः प्रतिबिम्बिता नानारूपा बभूवेति। ब्रह्मैकत्वप्रतिपादनात् शान्तरसो व्यज्यते।।६६१।। कोऽपीति। कोऽपिजनः शतं सहस्त्रं लक्षमपि कोटिमपि कोऽपि चिनोति मम सम्पत्तिस्तु यदुपतिरेव सर्वं सुखं तनोतीति स्पष्टम्।।६६२।। जपमालेति। हे शिष्य! इति सम्बुद्ध्याक्षेपः। जपेन मालयामुद्राभिः तिलकैश्च मुद्रिता चिह्नता तनुर्यस्य सः त्वं वृथैव-आसीः अपि पुनः हरिस्तु सत्यवशीकृतः तस्मात्त्वं मनसैव सत्यं कुरु।।६६३।। उपदेश माह। यमेति। यम एव करी गजः तस्य वदनान्तर्गतः सन् यदैव हे जीव त्वं जीवसि तदैव विषयत्दृषां परिहर सदैव नरहरिं नृसिंहं भजेति करिवदनान्तर्गतनृसिंहभजनेन रक्षेति भावः।।६६४।।

जगदपि येन विदर्शितं दृष्टो हरिर्न सोऽपि।
दृग्भ्यां पश्यति सर्वमपि पश्यति दृशौ न कोऽपि।।६६५।।

जग तज नायौ जिह-सकल सो हरि जान्यौ नाहि।
ज्यौ आखिन जग देखिये आखिन देखी जाय।।६६५।।

यं भजतो भव्यं भवेत्तं न भजसि भवरूढ।
जीव यतो दूरीकृतो भजसि पुनस्तं मूढ।।६६६।।

भजन कह्यौ तातै भज्यौ भज्यौ न एकौ वार।
दूर भजन जातै कह्यो सो तै भज्यौ गभार।।६६६।।

महारज्जुमालामहो धर परिहर भयमेव।
नरहरिनामकृतोडुपस्तर भवसागरमेव।।६६७।।

पतवारी माला पकर और न कछू उपाय।
तर संसार पयोधि कौ हरिनामै करि नाव।।६६७।।

जगदपीति। येन हरिणा जगद्दर्शितं स हरिः केनापि न दृष्टः। तदेवाह। दृग्भ्यां सर्वं वस्तु पश्यति। दृशौ तु कोऽपि न पश्यति–इति दृष्टान्तः।।६६५।। यमिति। यं हरिं भजत; पुंसः भव्यं कल्याणं भवेत् हे भवरूढ! तं भजसीत्यन्वयः। हे जीव! यतस्त्वं दूरीकृतो भवसि हे मूढ! तमेव संसारं भजसीत्यन्वयः।।६६।। महारज्जुरेव मालां तां धर। अहो! अतीव भयं परिहर। नरहरेर्नृसिंहस्यनाम्ना कृतोडुपः सन् भवसागरमेवतर, इत्यन्वयः।।६६७।।

तं कृष्णं चिन्तय सखे! भवसागरतरणाय।
कोऽसौ ग्रावकृतोडुपः सेनां सुखं निनाय।।६६८।।

यह बिरिया नहि और की तूँ करि यावह सोधि।
पाहन नाव चढ़ाइ जिमि कीन्है पार पयोधि।।६६८।।

काले गुणविस्तारके दूरं गच्छति नाथ।
नैगुण्यं भजसेन्तिके त्वं पतङ्गगुणगाथ।।६६९।।

दूर भजत प्रभु पीठ दै गुन विस्तारन काल।
प्रगट न निर्गुन निकट रहि चंग रंग गोपाल।।६६९।।

सन्तोषो गच्छति तथा प्रभवति यथानरस्य।
धनागमे प्रसरति तथा तदैव मुक्तिस्तस्य।।६७०।।

जात-जात वित होत है जो हिय मैं सन्तोष।
होत होत ज्यों होई तौ होइ घरकि मैं मोष।।६७०।।

निजं धनं व्रजवासिनां तन्न चिन्तयति कोऽपि।
चित्ते येन विचिन्तितं चरति सचिन्तः सोऽपि।।६७१।।

व्रजवासिन कौ उचित धन सो धन रुचत न कोइ।
सुचित न आवै सुचितई कहौ कहा तै होइ।।६७१।।

तमिति। हे सखे! भवसागरणायतं कृष्णं चिन्तय। योऽसौ कृष्णः ग्रावभिः कृत उडुपो येन स एतादृशः सन् सुखं सेनां निनाय।।६६८।। काले–इति। हे नाथ! पतङ्गस्येव गुणगाथा यस्य तत्सम्बुद्धौ। पतन्ति अङ्गानि यस्येत्यन्वर्थसंज्ञया बालक्रीडानेकागुडिकेति प्रसिद्धागुणविस्तारके काले दूरं गच्छसि। अन्तिके समीपे नैगुण्यं भजसे। एवं पतङ्गोऽपि तादृशधर्मवानिति भावः।।६६९।। सन्तोष इति। धने गच्छति सति नरस्य सन्तोषः प्रभवति तथा धनागमे यदा सन्तोषः प्रसरति तदैव नरस्य मुक्तिरित्यर्थः।।६७०।। निजमिति। व्रजवासिनां यन्निजं धनं तत् कोऽपि न चिन्तयति। येन पुंसा तद् धनं हरिरूपं चित्ते विचिन्तितं सोऽपि सुचितःसम् चरति–इत्यर्थः।।६७१।।

त्वं सखि! मोहय मोहनं धर गिरिधरसुरसैव।
विहर निकुञ्जविहारिणा नीरधरद्युति नैव।।६७२।।

मन मोहन सौ मोह कर तूँ घनस्याम सम्हार।
कुञ्जविहारी सौ विहर गिरिधारी उर धार।।६७२।।

केन पथा हरिरपि हृदयसदनं तावदुपैति।
यावत्कपट कपाटमपि विकटतरं नापैति।।६७३।।

लै लगि या मन सदन मै हरि आवैं किहि बाट।
विकट लटे जब लौ निपट षुले न कपटकपाट।।६७३।।

गतिरतिसूक्ष्मतरा विभो न लक्षिता केनापि।
श्रुत्यनुमानप्राणतो विचिन्तिता मत्यापि।।६७४।।

बुधि अनुमान प्रमाणश्रुति किये नीठ ठहराय।
सूद्दम गति परब्रह्म की जलष लषी नहि जाइ।।६७४।।

भवपारावारस्य कः पारं याति सुखेन।
वनितामाच्छायाग्रहस्तं गृह्णाति सुखेन।।३७५।।

या भव पारावार कौ उलधि पार को जाइ।
तिय छवि छाया गाहिनी ग्रसै बीच ही आय।।६७५।।

त्वमिति। हे सखि! त्वं मोहनं मोहाय। गिरिधरमुरसैव धर। नीरधरो मेघः तस्येव द्युतिर्यस्य

तेन कुञ्जविारिणा विहर, इत्यन्वयः।।६७२।। केनेति। हे सखि! हरिः कृष्णः केनपथा हृदयं सदनं तावद् उपैति। यावद् विकटतरकपटकपाटमपि नावैति इति स्पष्टम्।।६७३।। गतिरिति! ब्रह्मणो गतिः-अति सूक्ष्मतरा। अतएव केनापि न लक्षिता। श्रुतेर्वेदाद्-अनुमानात् प्रमाणतोऽपि विचिन्तिता मत्या बुद्ध्याऽपि विचिन्तेतिस्पष्टार्थः।।६७४।। भवेति। भवः संसार एवं पारावारः समुद्रः तस्य पारं सुखेन को न याति न कोपीत्यर्थः। वनिताभा दीप्तिश्छायाग्रहस्तं गच्छन्तं नरं सुखेन गृह्णाति-इत्यन्वयः।।६७५।।

त्यज तीर्थं भज राधिकाहरितरकान्तिमतीव।
यद्व्रजकेलिश्रेणिगा किल वेणी चलतीव।।६७६।।

तज तीरथ हरि-राधिका तनुद्युति कर अनुराग।
जिह व्रजकेलि निकुंज मग पग पग होत प्रयाग।।६७६।।

जगति जना निज-निजमतैः खलु तमेव विवदन्ति।
एकं नन्दसुतं हरिं भक्त्या पुनर्भजन्ति।।६७७।।

अपने अपने मत लगे वाद मचावत सोर।
त्यौ त्यौ सबकौ सेइवौ एकै नन्दकिशोर।।६७७।।

सम्पत्तिर्गुणगणयुता या यदुपतिं विनैव।
सा न पुनर्मे सुखकरी विपदपि युताऽमुनैव।।६७८।।

तौ उनेक औगुन भरी राषै याहि बलाइ।
जो पति सम्पतिहूँ विना जदुपति राखै जाइ।।६७८।।

त्यजेति। तीर्थं त्यज राधिकायाः हरेश्च तनुकान्तिम्-अतिशयेन भज सेवय। यद् यस्माद् व्रजकेलिश्रेणिगा किल निश्चयेन वेणीव चलतीत्यन्वयः। तद्व्रजकेलिमार्गं वेणीव पुष्पतामिति माहात्म्याधिक्यम्। यद्वा वेणी तु त्रिवर्णा व्रजकेलिश्रेण्यपि गोपिकाश्रुसेकात् तच्चरणगत लाक्षारससेकात् त्रिवर्णा भाति। यद्वा कृष्ण्स्य कान्तेः कृष्णप्रतिबिम्बः राधिकाया उज्ज्वल प्रतिबिम्बकरचरणादीनाम-रुणम्बिम्बपाताद् व्रजकेलि श्रेण्यपि गोपिकाश्रु सेकात् तच्चरणगतलक्षारसेकात्त्रिवर्णा भाति। यद्वा कृष्णस्य कान्तेः कृष्ण प्रतिबिम्बः राधिकाया उज्ज्वलप्रतिबिम्बः करचरणदीनामरुणप्रतिबिम्बात् त्रिवर्णा भवतीति भावः।।६७६।। जगतीति। जगति लोके जनाः पुरुषाः निज-निज-मतैः तमेवनन्दसुतं हरिं विवदन्ति। पुनर्भक्त्या तमेवभजन्तीति स्पष्टम्।।६७७।। सम्पत्तिरिति। गुणगणैर्युताऽपि या सम्पत्तिः यदुपत्तिं विना भवति सा मे सुखकरी न भवति किन्तु अमुना यदुपतिना युताऽविपदपि मे सुखकरीत्यन्वयः।।६७८।।

दीर्घश्वासं मुञ्च नो विस्मर सुखं कदापि।
स्वामिदत्तमसुखं सुखं धारय धीर तथाऽपि।।६७९।।

दीरघ सास न लेहि दुःख सुष साईमति भूल।
दई-दई कत करत है दई दर्द सुकबूल।।६७९।।

यद्दत्तं प्रभुणा किमपि तद्धारय शिरसैव।
अनुभूतं सुखमपि तथा दुःखं त्यजसि वृथैव।।६८०।।

दियौ सुसीस चढ़ाइ लै आछी भाँति अहेरि।
जासौ सुख चाहौ लह्यौ ताके दुषहि न फेर।।६८०।।

वारं-वारं नन्दसुत प्रपतिर्मया कृताऽस्ति।
तव बारणतारणकथा खल्वेकैव विभाति।।६८१।।

नीकी दई अनाकनी फीकी परी गुहार।
तज्यौ मनौ तारन बिरद वारक वारन तारि।।६८१।।

हरे! जटायोरप्यधिकपापयुतः प्रथितोऽस्मि।
स्वयशो रक्ष दयानिधे बहुवारं प्रणतोऽस्मि।।६८२।।

कौन भाँति रहिहै विरद अब राखवी मुरारि।
वीधे मो से पतित सौ गीधे गीधहि तारि।।६८२।।

दीर्घ इति। रे मूढ! जीव! दीर्घश्वासं नो मुञ्च तत्सुखं कदापि नो विस्मर। हे धीर! स्वामिना दत्तं सुखमसुखं वा तथापि धारय-इत्यन्वयः।।६७९।। यदिति। यत्प्रभुणा दत्तं सुखमसुखं वेत्यर्थः। तच्छिरसैव धारय यथापूर्वं ते न दत्तं सुखमनुभूतं तथा दुःखमपि वृथैव त्यजसीत्यन्वयः।।६८०।। वक्रोक्त्या शान्तरसमाह वारं वारमिति। हे नन्दनन्दन! पुनः पुनः मया प्रणतिः कृता। वारणस्य गजस्य तारणं त्वया कृतमिति कथा खलु निश्चयेन न लोके एकैवेति-अन्वयः। ततः प्रभृति नान्यं तारितवानिति भावः।।६८१।। हरे! इति। हे हरे! हे कृष्ण जटायोः पक्षिणोऽपि अधिकपापयुतोऽहं लोके प्रथितोऽस्मि। तस्मात्‌ हे दयानिधे! स्वकीयं यशो रक्ष। अहं त्वां बहुवारं प्रणतोऽस्मीत्यर्थः।।६८२।।

कस्मिन्‌ दिने बन्धुता कमुद्धरसि गोपाल।
मामपोह्य दीनं वृथा विलससि कीर्तिविशाल।।६८३।।

बन्धु भये का दीनके क़ो तार्‌यो यदुराय।
रूठे रूठे फिरत हौ भूठे विरद कहाइ।।६८३।।

शीघ्रं तुष्यति हरिरिति प्रथितं जगति जनेषु।
विस्मृतोऽसि वर्त्तितकलिः किं खलुकरुणतरेषु।।६८४।।

थोरेई गुन रीझते विसराई बहुवानि।
तुम हू कान्ह भये मनौ आजु कालि के दानि।।६८४।।

दीनाद् दीनतरोऽहमपि बहुवारं विलपामि।
भाविकल्किनिर्दय तनुं त्वां तथापि प्रणमामि।।६८५।।

कब कौ टेरत दीन ह्वै हो तन स्याम सहाय।
तुम हू लागी जगत गुरु जगनायक जुगवाइ।।६८५।।

कस्मिन्निति। कीर्त्यैव विशालः कीर्त्तिविशालः तत्सम्बुद्धौ हे कीर्तिविशाल! तव बन्धुता कस्मिन् दिने वर्त्तते। मामपोह्यत्यत्क्वा कं दीनमुद्धरसि। हे गोपाल! त्व त्वं वृथैव विससतीत्यर्थः।।६८३।। शीघ्रमिति। हरिः कृष्णः जनेषु शीघ्र तुष्यतीति लोके प्रथितम्। वर्त्तितः कलिर्येन सः त्वं मादृशेषु करुणतरेषु खलु विस्मृतोऽस्तीत्यन्वयः।।६८४।। दीनादिति। अहं दीनादपि दीनतरः अतएव बहुवारं विलपामि। भाविकल्कि निर्दयतनुं त्वां तथापि प्रणमामि।।६८५।।

कर्म यथा फलमपि तथा प्रभवति हरे! सदैव।
न कुरु हठं कठिनं मतं मदुद्धरणमधुनैव।।६८६।।

ज्यौ ह्वै हौ त्यौ हौहु गौ हौ हरि अपनी चाल।
हठ न करौ अति कठिन है मो तारिवौ गुपाल।।६८६।।

माधव! मम मानस महो! कौटिल्यं न जहाति।
त्वं त्रिभङ्गललितस्तथा यथा योग्यमनुभाति।।६८७।।

करै कुगति औ कुटिलता तजौ न दीन दयाल।
दुषित होहुगे सरल हिय वसति त्रिभङ्गीलाल।।६८७।।

माधव तव मम मानसं सम्प्रति गतं हठाय।
कस्य जयो भविता हरे! निज-निज यशोऽवनाय।।६८८।।

मोहि तुम्है बाढ़ी वहसि को जीतै जदुराज।
अपने-अपने विरह की दुहू निवाहन लाज।।६८८।।

कालाधीना प्रकृतिरपि नवीनेव प्रतिभाति।
पश्य कलौ करुणाकरोऽप्यकरुणतां प्रतियाति।।६८९।।

समै पलटि पलटै प्रकृति को न तजै निज चाल।
मौ अकरुनवरुणाकरन यह कपूत कलिकाल।।६८९।।

कर्मेति। हे हरे! यथा यस्य कर्म तस्य तथैव फलं भवति। तस्मात् हठं न कुरु अधुनैव मदुद्धणं कठिनं मतमित्यर्थः।।६८६।। माधवेति। हे माधव! मम मानसं अहो। इति-आश्चर्ये कौटिल्यं न जहाति। त्वमपि त्रिभङ्गेनललितः तस्मात्तव मम सङ्गः यथायोग्यमनुभाति।।६८७।। पुनर्यथा। माधवेति। हे माधव! तव मानसं ममापि मानसं सम्प्रति हठाय गतं निजयशसो रक्षणाय। इदानीं पश्य कस्य जयो भवितेति।।६९८।। कालेऽति। प्रकृतिरपि कालाधीना नवीनेव प्रतिभाति। हे सखे! पश्य करुणाकरोऽपि हरिः कलौ अकरुणतां प्रतियाति।।६८९।।

उत्साहं सम्प्रति गतः सोऽहं भवयातेन।
यत्वं द्रक्ष्यसि नाथ! मत्कर्मालिं नयनेन।।६९०।।

तौ वलियै भलि यै बनी नागर नन्दकिसोर।
ज्यौं तुम नीके कै लषौ मो करनी की ओर।।६९०।।

वारं वारं विनयमिति हरे! करोमि तवैव।
भवद्वारि दीनोऽप्यहं पतितो यथा तथैव।।६९१।।

हरि कीजत तुमसा यहै विनती वार हजार।
जिहि तेहि भाँति गिरौ रह्यौ पर रहौ दरवार।।६९१।।

मामपि सङ्कोचयसि किं सङ्कुचितः स्वयमेव।
मत्तोऽपि विमुखं हरे सुमुखकर त्वमेव।।६९२।।

मोहि सँकोच करत किमु स्वयं सँकोची होइ।
मोसे अधिक विमुख हरि संमुखकारी जोइ।।६९२।।

तारयस्व तारक हरे! पतिगणेन सहैव।
गोपीनाथ गुणागुण ग्रामं न गण ममैव।।६९३।।

कीजै जित सोई तरौ जिहि पति तन के साथ।
मेरे गुन औगुनन को गनौ न गोपीनाथ।।६९३।।

उत्साहमिति। सोऽहं भवपातेन सम्प्रति उत्साहं गतः। यत् यस्मात् यत्कर्म परम्परां त्वं नयनेन द्रक्ष्यति।।६९०।। वारं वार मिति। हे हरे! वारं वारं तवैव विनयं करोमि। भवद्वरि दीनोऽप्यहं यथा तथैव पतितोऽस्मीत्यन्वयः।।६९१।। ममापीति। स्वयमेव सङ्कुचितो लज्जितः त्वं मामपि सङ्कोचयसि। लज्जयसि। यतः मत्तोऽधिक-विमुखमपि हे हरे! त्वमेव सुमुखं कर इत्यमर्थः।।६९२।। तारयस्वेति।

हे हरे! हे तारक! पतितगणेन सहैव तारयस्व। हे गोपीनाथ! ममैव गुणा गुणग्रामं न गण- इत्यन्वयः।।६९३।।

त्वं द्विजराज कुलेऽभवो व्रज राजता तवैव।
केशव! हर संक्लेशमिति विज्ञप्तिस्तु ममैव।।६९४।।

प्रगट भये यदुजराजकुल सुवस वसे व्रजराज।
मेरे हरौ कलेस सब कैसो कैसो राइ।।६९४।।

मोक्षं देहि मुकुन्द! यतानेकपातकिगणैः।
प्राप्तं भो यदुनन्द! बद्धोऽहं तव गुणगणैः।।६९५।।

मोहूँ दीजै मोष ज्यों अनेक पतितन दियौ।
मोहि बाँधे ही तोष तो बाधौ अपने गुननि।।६९५।।

जयसिंहे मिलितेऽगुणी गुणी समत्वं याति।
हयोगजोमुक्तामालिकायुतो यतोहि विभाति।।६९६।।

पाइचलत तिगुनी गुनी हय गजमुक्तामाल।
भैंट भए जयशाह सो भाग चाहियत भाल।।६९६।।

(लक्षरक्षिसेनायुतजयसिंहं नोपैति।
निरक्षरस्तद्दानतो लक्षमाप्य मुदमेति।।)

रहत न नर जय साह मुष लषि लाषन की मौज।
जाचि निराषर ऊ चलै हौ लाषन की मौज।।

'रहते'ति विहारिमूलःपाठः टीकाकारेण व्यलेखि किन्तु-अनुवादो नाकारि। अतः मया संस्कृतीकरणं व्यधापि। निरङ्कमेव प्रस्तूयते। सम्पादकः।

जयति जयति जयसिंह नृपकीर्तिश्चन्द्रकलेव।
खलु कलङ्करहिता जगद्विख्याता सकलेव।।६९७।।

कीरति नृप जय साह की ज्यों उजियारो चन्द।
यह कलंक बिनु सोहई जग परसाइ अमन्द।।६९७।।

(इयं सम्पादस्य रचना यतोहि-अत्र अस्यांशस्य हिन्दी नासीत्)

त्वमिति। हे हरे त्वं द्विराजकुले चन्द्रवंशे अभवः उत्पन्नोऽसि-अतस्तवैव व्रजराजता जाता तस्मात् हे केशव! सङ्क्लेशं हर इति।।६९४।। सोरठा वृत्तम्। हे मुकुन्द! मोक्षं देहि। भो यदुनन्दन!

यथा–अनेक पातकिगणैः प्राप्तं त्वत्त इत्यर्थः। तवगुणगणैः अहं बद्ध इति साभिप्राय विशेष्योपादानम्।।६९५।। एतग्रन्थारम्भ प्रोत्साहकं नृपं स्तौति। जयसिंहेति। जयसिंहनृपतौ मिलिते सति–अगुणी गुणी च समतां याति। यतः हयैर्गजैर्मुक्तामालभिर्युतः प्रतिभाति–इति दानवीरतोक्ता।।६९६।। जयतीति जयसिंह नृपस्य कीर्तिश्चन्द्रकलेव जयति, जयतीत्यादरे वीप्सा। खलु सा चन्द्रकला सकलङ्का–इयं तु कला कलङ्करहितेति विख्याता सकलकलाभिः सहिता इवेत्यर्थः।।६९७।।

धर धर हिन्दुनि तुर किनी देत असीस सराहि।
पति नु राषि चादर चुरी ते राषी जयसाह।।

(अस्य दोहाया अनुवादः नास्ति–अतः सम्पादकेन व्यधापि तदेवम्–

गृहे–गृहे नार्यः समा आशीर्भिः प्रशसन्ति।
वासः कङ्कणप्राप्तितो जयसिंहं, तृप्यन्ति।।)

इयं सप्तशतिका रसैः परिपूर्णा सरिदेव।
कवि वृन्दानन्दाय भुवि सानन्दं रचितेव।।६९८।।

(रचिता सुकविविहारिणा या भाषया मुदैव।
सेयं संस्कृतसत्कृतिः प्रभवतु मुदे सदैव।।)

(अनुवादकस्य वक्तव्यमिदम्)

नृप जयसिंहादेशतो राधा हरिहर्षाय।
कवि–बिहारिकृत सतसई बहुविधसंवादाय।।६९९।।

हुकुम पाइ जयसाह कौ हरिराधिका प्रसाद।
करी विहारी सतसई भरी अनेक संवाद।।६९९।।

यद्यपि मुक्ता फल गणे शोभा भाति सदैव।
खलु हारग्रथनेन तत्सुषमा भवति नवैव।।७००।।

यद्यपि है शोभाघनी मुक्ताफल मैं देषि।
गुहै ठौर की ठौर तैं लर में होत विसेष।।७००।।

इयमिति। इयमित्याङ्गुल्या निर्देशः। सप्तानां शतानां समाहारः सप्तशती सैव सप्तशतिका रसैः शृङ्गारादिभिः परिपूर्णसरिनन्नदीव रसैः जलैः परिपूर्णा भुवि कविवृन्दानामानन्दाय सानन्दं यथा भवति तथा रचिता–इवेति पादपूरणे इव शब्दः।।६९८।। सेयमिति। सुकवि विहारिणा या सप्तशती भाषया मुदैव रचिता सेयं संस्कृतसत्कृतिः संस्कृते मत्कृतिः मदीयं काव्यं सदैव मुदे प्रभवत्विति।।६९९।।

यद्यपीति। मुक्ताफल गणे शोभा सदैव भाति। खलु निश्चयेन। अनुहारग्रथनेन सुषमा नवा इव भवति–इति अन्वयः।।७००।।

(अन्तिमं पृष्टं त्रुटितमस्ति। किञ्चित् यथाकथञ्चित् पठ्यते येन–'उनइस सै पच्चिस अधिक सम्वत् (१९२५) विक्रमनाम चैत्रकृष्ण–एकदशी भयौ ग्रन्थअभिराम।)

(।इति चतुर्थः परिच्छेदः समाप्ताचेयं श्रीमत्कविराजकवि परमानन्दविरचिताशृङ्गारसप्तशतिका।।)

–इयं शृङ्गारशती लिथोपृष्टरूपेण राष्ट्रियसंस्कृतसंस्थानस्य प्रयागस्थ चन्द्रशेखराजादोद्याने स्थितस्य डॉ० गङ्गानाथ झा परिसरस्य क्र० १६७७४ पाण्डुलिपि सङ्ग्रहालये प्राप्ता २७.०४.२००९ ई० दिनाङ्कतः २६.०४.२०११ पर्यन्तं शास्त्रचूडामणियोजनायां कार्यरतेन मया रहसबिहारि द्विवेदिना (जाबालिपुरस्थ–रानीदुर्गावती–विश्वविद्यालयस्य संस्कृतविभागाचार्याध्यक्षचरेण) लिपिकारत्रुटिं संशोधयताऽस्याः कृतेः सम्पादनमकारि।

□□

